विष्णोर्मनसा पूते स्थः । देवो वः सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । अग्नये त्वा जुष्टं प्रोक्षामि । शुन्धन्तां पात्राणि देवयज्यायै । यद्वो [1] ऽशुद्धः पराजघान तद्व एतेन शुन्धन्ताम् । अवधूतं रक्षो ऽवधूतारातिः । अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु [3] । अधिषवणमसि वानस्पत्यं प्रति त्वादित्यास्त्वग्वेत्तु । अग्नेस्तनूरसि वाचो विसर्जनम् । देववीतये त्वा गृह्णामि । बृहद्ग्रावासि वानस्पत्यः । [4] स देवेभ्यो हव्यं शम्नीष्व । सुशमि शम्नीष्व । अद्रिरसि श्लोककृत् । अपहतं रक्षो ऽपहतारातिः । वयं संघातंसंघातं जयेम [5] । वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु । परापूतं रक्षः परापूतारातिः । निरस्तो अघशंसः । वायुर्व इष ऊर्जे विविनक्तु ॥ ५ ॥ Cf. XLVII, 4; KS. I, 5; XXXI, 4; MS. I, 1, 6, 7; IV, 1, 6. 7; TS. I, 1, 5; TB. III, 2, 5.

अवधूतं रक्षो ऽवधूतारातिः । अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्तु । धिषणासि पार्वती प्रति त्वादित्यास्त्वग्वेत्तु । पृथिवीं दृंह । धिषणासि पार्वतेयी प्रति त्वा पार्वती वेत्तु । दिवं दृंह । दिवः स्कम्भन्यासि । धान्यमसि [6] । धिनुहि देवान् । प्राणाय त्वा व्यानाय त्वापानाय त्वा । दीर्घामनु प्रसितिम् [7] । आयुषे त्वा । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु । अदब्धेन वश्चक्षुषावपश्यामि ॥ ६ ॥ Cf. XLVII, 5; KS. I, 6; XXXI, 5; MS. I, 1, 7; IV, 1, 7; TS. I, 1, 6; TB. III, 2, 6.

निर्दग्धं रक्षः । अपाग्ने अग्निमामादं जहि निः क्रव्यादं सेध । आ देवयजनं वह । ध्रुवमसि पृथिवीं दृंह । आयुर्देहि प्राणं देहि । सजातानस्मै यजमानाय परिवह । धरुणमस्यन्तरिक्षं दृंह । चक्षुर्देहि श्रोत्रं देहि । सजातानस्मै यजमानाय परिवह । धर्त्रमसि दिवं दृंह । ओजो देहि बलं देहि । सजातानस्मै

1. So also KS. XV, 6.
2. वः is missing in KS. Cf. VS. I, 13 यद्वो ऽशुद्धाः पराजघ्नुः and MS. यद्वो ऽशुद्ध आलेभे.
3. Here and further the ms. has वेतु.
4. Other Saṃhitās add इदं.
5. KS. संजयेम is to be corrected to जयेम. Cf. KS. XXXI, 4 and other Saṃhitās.
6. KS. स्कम्भधान्यमसि is to be corrected. Cf. KS. XXXI, 5.
7. KS. समृतिं is a mistake for प्रसृतिं. Cf. KS. XXXI, 5; MS. ib. प्रसितिं of Kap. is found in ṚV. IV, 22, 7; X, 40, 10; AV. XIV, 1, 46; VS. I, 20; TS. ib.

यजमानाय परिवह । धर्मासि दिशो दृंह । रयिं देहि पोषं देहि । सजातानस्मै यजमानाय परिवह । यन्त्रमस्याशा दृंह । रूपं देहि वर्ण[1] देहि । सजातानस्मै यजमानाय परिवह । चित स्थ परिचितो यजमानस्य सजाताः । भृगूणामङ्गिरसां तपसा तप्यध्वम् ॥ ७ ॥ Cf. XLVII, 6; KS. I, 7; XXXI, 6; MS. I, 1, 8; IV, 1, 8; TS. I, 1, 7; TB. III, 2, 7.

5 देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं संवपामि । समाप ओषधीभिः समोषधयो रसेन मधुना मधुमतीः पृच्यन्ताम् । यद्वो रेवती रेवत्यं यद्वो हविष्या हविष्यं यद्वो जगतीर्जगत्यं तेनास्मै यज्ञपतय आशासाना मधुना मधुमतीः संपृच्यध्वम् । जनयत्यै त्वा । मखस्य शिरो ऽसि । घर्मो ऽसि विश्वायुः । उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् । प्रत्युष्टं 10 रक्षः । देवस्त्वा सविता श्रपयतु वर्षिष्ठे ऽधि नाके । अग्निस्ते तन्वं मा हिंसीत् । अग्ने ब्रह्म गृह्णीष्व । एकताय स्वाहा । द्विताय स्वाहा । त्रिताय स्वाहा ॥ ८ ॥ Cf. XLVII, 7; KS. I, 8; XXXI, 7; MS. I, 1, 9; IV, 1, 9; TS. I, 1, 8; TB. III, 2, 8.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजाः । वायुरसि तिग्मतेजाः । पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषम् । व्रजं गच्छ गोष्ठानम् । वर्षतु 15 ते द्यौः । बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्यो अस्मान्द्विष्सति यं वयं दिप्सामस्तमतो मा मौक् । द्रप्सस्ते द्यां मा स्कन्न्[2] । व्रजं गच्छ गोष्ठानम् । वर्षतु ते द्यौः । बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैर्यो अस्मान्दिप्सति यं वयं दिप्सामस्तमतो मा मौक् । अररुर्द्यां मा पप्तत् । व्रजं गच्छ गोष्ठानम् । वर्षतु ते द्यौः । बधान देव सवितः परमस्यां पृथिव्यां शतेन 20 पाशैर्यो अस्मान्दिप्सति यं वयं दिप्सामस्तमतो मा मौक् । अपाररुमदेवयजनं पृथिव्या देवयजनाज्जहि ॥

इमां नरः कृणुत वेदिमेतं[3] देवेभ्यो जुष्टामदित्या उपस्थे ॥

1. KS. बलं is to be corrected. Cf. KS. XXXI, 6.
2. KS. MS. TS. स्कान् . So also Kap. XLVII, 8. VS. I, 26 reads स्कन् .
3. TB. III, 7, 7, 13; ĀpŚr. II, 2, 6 read वेदिमेत्य. Cf. MānŚr. वेदिमेतत् (v. l. वेदिमेत).

इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु ॥

वसवस्त्वा परिगृह्णन्तु गायत्रेण च्छन्दसा। रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन च्छन्दसा। आदित्यास्त्वा परिगृह्णन्तु जागतेन च्छन्दसा॥

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुम्।

तामैरयंश्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्यायजन्त ॥ ९ ॥ 5

Cf. XLVII, 8; KS. I, 9; XXXI, 8; MS. I,1, 10; IV, 1, 10; TS. I, 1, 9; TB. III, 2,9.

पृश्न्याः पयो ऽसि । तस्य ते ऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामि । इषे त्वा । अदब्धेन त्वा चक्षुषावपश्यामि । ऊर्जे त्वा । अग्नेर्जिह्वासि सुहूर्देवेभ्यः । धाम्नेधाम्ने त्वा यजुषेयजुषे । हविरसि वैश्वानरमुन्नीतशुष्मं[1] सत्यौजाः । सहो नामासि सहस्वारातिं सहस्व पृतनायतः । सहस्रवीर्यमसि तन्मा जिन्व[2]। तेजो ऽसि शुक्रमसि ज्योतिरसि । धामासि प्रियं देवानामनाधृष्टं देवयजनम्। देववीतये त्वा गृह्णामि। निष्टप्तं रक्षः। अनिशिता स्थ सपत्नक्षयणीः। प्राणं वाचं मा निर्मृक्षम्[3]। वाजिनं त्वा वाजिन्वाजजित्यायै[4] संमार्ज्मि । चक्षुः श्रोत्रं मा निर्मृक्षम्। वाजिनीं त्वा वाजिनि वाजजित्यायै[4] संमार्ज्मि[5]। प्रजां योनिं मा निर्मृक्षम् । वाजिनीं त्वा वाजिनि[6] वाजजित्यायै[4] संमार्ज्मि[7] ॥ १० ॥ Cf. XLVII, 9; KS. I, 10; XXXI, 9; MS. I, 1, 11; IV, 1, 12; TS. I, 1, 10.

देवीरापो अग्रेगुवः[8] प्रेमं यज्ञं नयत । प्र यज्ञपतिं तिरत । युष्मानिन्द्रो ऽवृणीत वृत्रतूर्ये। यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये । प्रोक्षिता[9] स्थ । कृष्णो ऽस्याखरेष्ठो ऽग्नये त्वा जुष्टं प्रोक्षामि । वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि । बर्हिरसि 15

1. VS. I, 30 (but ŚatB. I, 3, 1, 9 शुभ्रः); ŚŚr. IV, 8, 1 agree with Kap. Cf. Kāṇva S. I, 10, 3; TS. I, 1,10, 3 शुभ्रः. See Prof. Keith on TS. ib., n. 5. KS. reads शुप्रः.
2. KS. मार्जित्वा is a mistake for मा जिन्व.
3. Here and further Kap. reads निमृक्षं. KS. निर्दक्षं is an inferior variant. Cf. TS. I, 1, 10, 1 निर्मृक्षं, MS. निर्मार्जीः.
4. KS. वाजयत्यायै, but in XIV, 1 वाजजित्यै. VS. I, 29 वाजेध्यायै.
5. The ms. संमार्ग्मि.
6. The omission of वाजिनि in KS. is due to oversight.
7. KS. adds: गोष्ठं यजमानस्य रायस्पोषं मा निर्दक्षं वाजिनीं त्वा वाजिनि वाजयत्यायै संमार्ज्मि. It may have formed a part of Kap. as well.
8. KS. अग्रेगुवः.
9. KS. मेक्षिता is to be corrected. Cf. KS. XXXI, 10.

सुग्भ्यस्त्वा जुष्टं प्रोक्षामि । पितॄणां भागधेयी स्थ । ऊर्जा पृथिवीं गच्छत । विष्णो स्तुपो ऽसि । ऊर्णम्रदं[1] प्रथस्व स्वासस्थं देवेभ्यः । गन्धर्वो ऽसि विश्वावसुर्विश्वस्माद्दषतो[2] यजमानस्य परिधिरिड ईडितः । इन्द्रस्य बाहुरसि दक्षिण इड ईडितः । मित्रावरुणौ त्वा परिधत्तां ध्रुवेण धर्मणा ॥

5 वीतिहोत्रं त्वाग्ने[3] द्युमन्तः समिधीमहि ।
अग्ने बृहन्तमध्वरे ॥
सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याः ।
वर्षिष्ठे ऽधि नाके ॥

सवितुर्बाहू स्थो देवजनानां विधरणी[4] । वसूनां रुद्राणामादित्यानां सद-
10 नमसि । जुह्वेहि घृताची द्यौर्जन्मनादितिरच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीद । उपभृदेहि घृताच्यन्तरिक्षं जन्मनादितिरच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीद । ध्रुव एहि घृताची पृथिवी जन्मनादितिरच्छिन्नपत्रा प्रिया देवानां प्रियेण धाम्ना प्रिये सदसि सीद[5] । ध्रुवा असदन्नृतस्य योनौ[6] । ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां
15 यज्ञन्यम् ॥ ११ ॥ Cf. XLVII,10; KS. I,11; XXXI, 10; MS. I,1, 11.12; IV, 1, 13; TS. I, 1, 11; TB. III, 3, 6.

भुवनमसि विप्रथस्व । अग्निर्यष्टेदं नमः । जुह्वेह्यग्निस्त्वाह्वयतु देवयज्यायै । उपभृदेहि देवस्त्वा सविताह्वयतु देवयज्यायै । अङ्घ्रिणा विष्णू[7] मा वामवक्रमिषम् । पाहि माग्ने दुश्चरितादा मा सुचरिते भज । विजिहाथां मा मा संताप्तम् । लोकं मे लोककृतौ कृणुतम् । विष्णो स्थाम्नः । इत इन्द्रो वीर्यमकृणोत् ॥

1. The ms. ऊर्णम्रदं. Cf. Kauśikasūtra II, 17 ऊर्णम्रदं (var. l.), MS. I, 2, 2 Padapāṭha ms. ऊर्ण-म्रदाः. But ṚV. V, 5, 4 ऊर्णम्रदा वि प्रथस्व.
2. KS. TS. ईषतः, MS. ईषमाणः.
3. त्वाग्ने is an inferior variant. All the Saṃhitās read त्वा कवे.
4. KS. विधरणिः. Cf. MS. विश्वजनस्य विधृती स्थः.
5. KS. adds: ऋषभोऽसि शाक्वरो वायुर्जन्मनादितिरच्छिन्नपत्रः प्रियो देवानां०. Similarly MS.
6. KS. adds here सुकृतस्य लोके, but in its brāhmaṇa it omits them.
7. An ekaśeṣa dvandva; विष्णू stands for अग्नाविष्णू. Cf. TS.

ऊर्ध्वो अध्वरो दिविस्पृगह्रुतो यज्ञो यज्ञपतेः ।
इन्द्रवान्बृहद्भाः स्वाहा ॥

सं ज्योतिषा ज्योतिः । वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयोर्ज्जयामि[1]। वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयामुं[2] प्रतिनुदामि[3] ॥

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा । अक्तं[4] रिहाणा व्यन्तु वयः ॥ 5

मरुतां पृषती वशा पृश्निर्भूत्वा दिवं गच्छ ।
ततो नो वृष्टिमेरय[5] ॥

अहीनः प्राणः । चक्षुष्पा असि चक्षुर्मे पाहि ॥

यं परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमानः ।
तं त एतमनु जोषं भराम्येष त्वन्नेदपचेतयातै[6] ॥ 10

यजमानं प्रथत ॥

संस्रावभागास्तविषा[7] बृहन्तः प्रस्तरेष्ठाः परिधीयार्श्च[8] देवाः ।
यज्ञस्य गोपा उत रक्षितारः स्वाहा देवा अमृता मादयन्ताम् ॥

अग्ने ऽदब्धायो ऽशीततनो पाहि दिवः[9] पाहि प्रसित्याः पाहि दुरिष्ट्याः पाहि दुरद्मन्याः । अविषं नः पितुं कृधि । सुधीन्योनीन्[10]सुषदां पृथिवीम् ॥ 15

घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणम् ।
वेदो वाजं ददातु नः ॥

1. KS. देवतयोज्जयामि.
2. KS. असुं is to be corrected. Cf. KS. XXXI, 11.
3. Here follow two verses in KS. These are not commented in the brāhmaṇa XXXI, 11.
4. The ms. अक्ता. अर्थं of KS. is to be corrected to अक्त. Cf. KS. XXXI, 11.
5. The ms. तनो वृष्टिकाम् for ततो नो वृष्टिम्.
6. =त्वत् न इद् अपचेतयातै 'so that this paridhi may not leave thee'. Cf. KS. VS. II, 17 नेत्त्वदपचेतयातै, TS. नेदेष त्वदपचेतयातै. KS. adds three more mantras but these are not noticed in the brāhmaṇa.
7. KS. MS. TS. VS. II, 18 स्थेषा for तविषा. Only the Kauśikasūtra VI, 9 has the Kap. reading.
8. KS. परिधेयाश्च.
9. KS. वियोत्, probably a corruption of दियोः. Cf. VS. II, 20.
10. The ms. अविषान्नः पितृनकः (XLVII, 11. पितृन् कम्) सुधिं योनि.

देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देवयज्ञं स्वाहा वाचि स्वाहा वाते धाः ॥ १२ ॥ Cf. XLVII, 11; KS. I, 12; XXXI, 11. 12; MS. I, 1,13; IV, 1, 14; TS. I, 1, 12. 13; TB. III, 3,7. 9.

आर्द्रदानव स्थ जीवदानव स्थ । आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । ओषधे त्रायस्वैनम् । स्वधिते मैनं हिंसीः । देवायुरिमान्प्रवपेत् । स्वस्त्युत्त-
5 रानशीय ॥

आपो अस्मान्मातरः सूदयन्तु घृतेन मा घृतप्वः पुनन्तु ।
विश्वं हि[1] रिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरा पूतं[2] एमि ॥
शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः ।
शं नः समुद्रियाः सन्तु शमु नः सन्तु कूप्याः ॥

10 सोमस्य दात्रमसि तनूरसि तन्वं मे पाहि । महीनां पयो ऽस्यपामोषधीनां रसः । वर्चोधा असि वर्चो मे धेहि । वृत्रस्यासि कनीनिकान्तरहं त्वया द्वेषमन्त-रराती[3]र्दधे । चक्षुर्धा असि चक्षुर्मे धेहि । चित्पतिस्त्वा पुनातु । वाक्पतिस्त्वा पुनातु ॥

देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण ।
15 सूर्यस्य रश्मिभिः ॥

तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥ १३ ॥ Cf. XXXV, 7; KS. II, 1; XXIII, 1; MS. I, 2, 1; III, 6, 2. 3; TS. I, 2, 1; VI, 1, 1.

आकूत्यै प्रयुजे ऽग्नये स्वाहा । मेधायै मनसे ऽग्नये स्वाहा । दीक्षायै तपसे ऽग्नये स्वाहा । सरस्वत्यै पूष्णे ऽग्नये स्वाहा ॥

आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरो अन्तरिक्ष ।
20 बृहस्पतये हविषा विधेम ॥ स्वाहा ॥
विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं[4] वुरीत[5] पुष्यतु स्वाहा ॥

1. KS. ह is to be emended. Cf. ṚV. X, 17, 10; AV. VI, 51, 2; VS. IV, 2; MS. ib.
2. In KS. Schroeder treats आपूत as one word.
3. The ms. अरातिं for अरातीः.
4. KS. द्युम्ने is to be corrected. Cf. KS. XXIII, 2.
5. The ms. वरीत.

इन्द्राग्नी द्यावापृथिवी आप ओषधय उरो अन्तरिक्षानु मे दीक्षां दीक्षापतयो मन्यध्वमनु तपस्तपस्पतयो ऽग्निश्च । देव सूर्येषमूर्जं दधातन । देव सवितस्त्वं दीक्षाणां दीक्षापतिरसि । इत्थं मा सन्तं पाहि । आ मोद्दचः पाहि ॥ १४ ॥ Cf. XXXV, 8; KS. II, 2; XXIII, 2; MS. I, 2, 2; III, 6, 4. 5; TS. I, 2, 2; VI, 1, 2.

ऋक्सामयोः शिल्पे स्थस्ते वामारभे । आ मोद्दचः पातम् । शर्मासि शर्म यजमानस्य । नमस्ते अस्तु । मा मा हिंसीः ॥ 5

इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुणं[1] संशिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेयम् ॥
इमां सु नावमारुहमरिष्टां पारयिष्णुम् ।
शतारित्रीं स्वस्तये ॥ 10

ऊर्गस्याङ्गिरस्यूर्णम्रदा[2] ऊर्जं मयि धेहि । मा मा हिंसीः । सोमस्य नीविरसि मा मा हिंसीः । इन्द्रस्य योनिरसि मा मा हिंसीः । कृष्यै[3] त्वा सुसस्याय[4]। उत्कृधि । विष्णोः शर्मासि शर्म यजमानस्य । नमस्ते अस्तु । मा मा हिंसीः । नक्षत्राणां मातिकाशात्पाहि[5]। सूपस्थावा वनस्पत[6] ऊर्ध्वो मा पाह्योद्दचः ॥ १५ ॥ Cf. XXXV, 9; XXXVI, I; KS. II, 3; XXIII, 3. 4; MS. I, 2, 2; III, 6, 6. 8; TS. I, 2, 2; VI, 1, 3. 15

1. KS. वरुणी is to be corrected. Cf. ṚV. VIII, 42, 3.
2. The ms. ऊर्णम्रदा.
3. The ms. कृष्ट्यै. So also KS. XXIII,4.
4. KS. सुमनस्यायै । कृषि सुसस्यां for सुसस्यायै. सुमनस्यायै, here as well as in XXIII, 4 is based on ms. Ch. only. The second ms. T 1 has the correct reading सुसस्यायै which is rejected by Schroeder. Cf. MS. कृषि सुसस्यामुत्कृषे, TS. कृष्यै त्वा सुसस्यायै, VS. IV, 10 सुसस्याः कृषीस्कृधि. कृषि सुसस्यां is omitted in KS. brāhmaṇa, which reads: कृष्यै त्वा सुसस्याया (thus corrected) इति तस्मात् कृष्टं पच्यते. उत्कृधीति तस्मादूर्ध्वा ओषधय उत्पच्यन्ते. Thus we see the possibility of the insertion of a marginal gloss into the text where उत्कृधि stood alone without an object in the accusative.
5. MS. TS. माती॰. For the short vowel the Vedic Concordance notes only MānŚr. II, 1, 2, 17.
6. The ms. वनस्पतय.

स्वाहा यज्ञं मनसः[1] स्वाहा दिवः स्वाहा पृथिव्याः स्वाहोरोरन्तरिक्षात्स्वाहा वातात्प्रतिगृह्णामि । व्रतं कृणुतेदं[2] शकेयम् ॥

दैवीं धियं मनामहे सुमृडीकामभिष्टये ।
वर्चोधां विश्वधायसं सुतीर्था नो असद्वशे ॥

5 ये देवा मनुजाता मनोयुजः[3] सुदक्षा दक्षपितरस्ते नः पान्तु । तेभ्यः स्वाहा ॥

अग्ने त्वं सु जागृहि वयं सु मन्दिषामहे ।
गोपाय नो अप्रयुच्छन्प्रबुधे नः पुनस्कृधि[4] ॥
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा ।
10 त्वं यज्ञेष्वीड्यः ॥

पूषा सनीनां सोमो राधसाम् । रास्वेयत्सोम । आ भूयो भर । देवः सविता वसोर्वसुदावा[5] । मा पृणन्पूर्त्या विराधिष्ट । माहमायुषा वर्चसा विराधिषि । देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावीस्तं वो मा क्रमिषम् । सक्षेहि[6] या ते यज्ञिया तनूस्तयारोह ॥

15 अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।

1. KS. यज्ञमनसः to be corrected to यज्ञं मनसः. The Kap. ms. has the locatives मनसि, दिवि, पृथिव्यां, but मनसः in Kap. XXXVI, 2 and उरोरन्तरिक्षात् at the end are in favour of KS. which has the ablatives throughout. Cf. also VS. IV, 6; MS. Later on Kap. II, 8; KS. III, 1 read all these mantras with locative forms.

2. Other Saṃhitās तत् for इदम्.

3. KS. मनुयुजः is to be corrected. Cf. MS. TS. VS. IV, 11.

4. KS. पुरस्कृधि. Cf. TS. पुनर्ददः, MS. VS. IV, 14 पुनस्कृधि.

5. The ms. वसुदांसर् .

6. KS. सक्षेमहि, but in its brāhmaṇa सख्येहि. The mantra is not recorded in Ved. Concordance. The Kap. ms. सखेहि and KS. सख्येहि has been emended above as सक्षेहि (सक्ष । एहि). For सक्ष see TaitBr. III, 7, 7, 1; ĀpŚr. X, 3, 2 सक्षेदं पश्य, TS. III,5, 5, 1 सक्ष शूष सवितर्विश्वचर्षणे. Prof. Caland's mss. of Brahmabala's and Devapāla's commentaries on KāṭhGṛ. also register our mantra सक्षेहि (var. l. सक्षैहि, सक्षीहि). By सक्ष Devapāla understands agni : सक्षेहि या ते यज्ञिया तनूस्तयारोह·······अग्निः सम्बोध्यते । हे सक्ष पचन समये समवेत साक्षाच्छन्दस्य वा स सक्षभावः.

तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥
एदमगन्म देवयजनं पृथिव्या यत्र देवा अजुषन्त विश्वे ।
ऋक्सामाभ्यां संचरन्तो[1] यजुर्भी रायस्पोषेण[2] समिषा मदेम ॥१६॥
Cf. XXXVI, 2. 3; KS. II, 3. 4; XXIII, 5. 6; MS. I, 2, 2. 3; III, 6, 8. 9; TS. I, 2, 2. 3; VI, 1, 4.

इयं ते शुक्र तनूरिदं वर्चस्तया संभव भ्राजं गच्छ । जूरसि धृता मनसा जुष्टा विष्णवे । तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा । शुक्रमसि चन्द्रमस्यमृतमासि वैश्वदेवं हविरसि । चिदसि मनासि[3] धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतश्शीर्ष्णी । सा मा सुप्राची सुप्रतीची भव । मित्रस्त्वा पदि बध्नातु । पूषाध्वनस्पातु । इन्द्रायाध्यक्षाय । अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्यः । सा देवि देवमच्छेहि । इन्द्राय सोमम् । रुद्रस्त्वावर्तयतु । स्वस्ति सोमसखा पुनरेहि ॥१७॥
Cf. XXXVII, 4; KS. II, 5; XXIV, 3; MS. I, 2, 4; III, 7, 5. 6; TS. I, 2, 4; VI, 1, 7.

वस्व्यसि रुद्रास्यदितिरस्यादित्यासि चन्द्रासि रुद्रासि । बृहस्पतिस्त्वा सुम्ने रम्णातु[4] । रुद्रो वसुभिराचके । पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडायास्पदे घृतवति स्वाहा । इदमहं रक्षसो ग्रीवा अपिकृन्तामि । अस्मे रमस्व । अस्मे ते रायः । मे रायः । माहं रायस्पोषेण वियोषम् । सं देवी देव्योर्वश्याख्यत । सुरेता रेतो दधानास्त्वष्टृमन्तस्त्वा[5] सपेम ॥ १८ ॥ Cf. XXXVII, 5; KS. II, 5; XXIV, 4; MS. I, 2, 4; III, 7, 6. 7; TS. I, 2, 5; VI, 1, 8.

आस्माको ऽसि शुक्रस्ते ग्रहः ॥
अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।
अर्चामि सत्यसवसं रत्नधामभि प्रियं मतिं कविम् ॥
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥

1. KS. TS. VS. IV, 1 संतरन्तो. MS.
2. KS. रायस्पोषे is to be emended. Cf. KS. XVI, 7.
3. KS. मना असि, so also some mss. of
4. The ms. रुच्छातु.
5. ? The ms. त्वाष्ट्रिमन्तः. So also MS. (but var. l. त्वष्ट्रीमन्तः).

प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु । सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यवन्तं[1] बह्वर्घम्[2] । शुक्रं ते शुक्रेण चन्द्रं चन्द्रेणामृतममृतेन क्रीणामि । शक्म यत्ते गोः । अस्मे ते चन्द्राणि । तपसस्तनूरसि प्रजापतेर्वर्णः । सहस्रपोषं पुष्यन्ती । परमेण पशुना क्रीयसे । अस्मे ते बन्धुः । मित्रो न एहि सुमित्रधाः । 5 इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तं स्योनः स्योनम् । स्वान भ्राजा[3]ङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ॥

उदायुषा स्वायुषोद्रसेनौषधीनाम् ।
उत्पर्जन्यस्य वृष्ट्योदस्थाममृताँ[4] अनु ॥

उर्वन्तरिक्षं वीहि ॥

10 अपि पन्थामगन्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥

अदित्यास्त्वगस्यदित्याः सदने सीद ॥

अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥
15 वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥
सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकाम् ।
यदेतशोभिरीयसे[5] भ्राजमानो विपश्चिता ॥ १९ ॥ Cf. XXXVII, 6. 7; KS. II, 6; XXIV, 5. 6; MS. I, 2, 5. 6; III, 7, 7. 8; TS. 1, 2, 6. 7. 8; VI, 1, 9. 10. 11.

इति कपिष्ठलकठसंहितायां प्रथमो ऽध्यायः ॥

---

1. KS. वीर्यावन्तं.
2. The ms. बह्वर्घम्.
3. Thus TS. The ms. भ्राज॰.
4. The ms. ॰तं.
5. KS. MS. TS. I, 2, 4 एतशेभिः. For एतशास् see Uṇādisūtra III, 149. एतशीभिः of one of KS. mss. may also point out to एतशोभिः.

उस्रावेतं धूर्षाधावनड्वाहावनश्रू[1] ब्रह्मचोदनौ । वारुणमसि वरुणस्य स्कम्भन्यसि ॥

प्रच्यवस्व भुवनस्पते विश्वान्यभि धामानि ।
मा त्वा परिपरिणो विदन्मा परिपन्थिनो मा त्वा वृका अघायवो विदन् ॥
श्येनो भूत्वा परापत यजमानस्य नो गृहे संस्कृतम् ॥ 5
नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत ॥

वारुणमसि वरुणस्त्वोत्तभ्नातु । वरुणस्य स्कम्भसर्जन्यसि । प्रमुक्तो वरुणस्य पाशः । वरुणो ऽसि धृतव्रतो ऽच्छिन्नपत्रः प्रजा उपावरोह । वरुणस्यर्तसदनमसि । अदित्यास्त्वगस्यदित्याः सदने सीद । वारुणमसि वरुणाय 10 त्वा ॥ १ ॥ Cf. XXXVII, 8; KS. II, 7; XXIV, 7; MS. I, 2, 6; III, 7, 8; TS. I, 2, 8. 9; VI, 1, 11.

अग्नेस्तनूरसि विष्णवे त्वा । सोमस्य तनूरसि विष्णवे त्वा । अतिथेरातिथ्यमसि विष्णवे त्वा । अग्नये त्वा रायस्पोषदे विष्णवे त्वा । श्येनाय त्वा सोमभृते विष्णवे त्वा । आपतये त्वा परिपतये गृह्णामि । तनूनप्त्रे शक्मने शाक्वराय । शक्मन्नोजिष्ठाय । अनाधृष्टमस्यनाधृष्यं देवानामोजो ऽभिशस्तिपा अनभिश- 15 स्तेन्यम् । अञ्जसा सत्यमुपगेषम्[2] । सुविते मा धाः । अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपा व्रतिनां व्रतानि । या मम तनूरेषा सा त्वयि या तव तनूरियं सा मयि । सह नौ व्रतपा व्रतिनां व्रतानि । या ते अग्ने रुद्रिया तनूस्तया नः

1. ? Thus the ms. KS. अनश्रू, the other Saṃhitās अनश्रू. 2. The ms. उपगच्छेषं. KS. उपागां.

पाहि। तस्यै ते स्वाहा। अंशुरंशुस्ते देव सोमाप्यायतामिन्द्रायैकधन। आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व। आप्यायय सखीन्सन्या मेधया। स्वस्ति ते देव सोम सुत्यामशीय। एष्टा राय एष्टा वामानि प्रेषे भगायर्तमृतवादिभ्यः। नमो दिवे नमः पृथिव्यै ॥ २ ॥ Cf. XXXVIII, 1. 2; KS. II, 8; XXIV, 8. 9; MS. I, 2, 6. 7; III, 7, 9. 10. 8, 2; TS. I, 2, 10. 11; VI, 2, 1. 2.

5 या ते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्नरेष्ठा वर्षिष्ठा गह्वरेष्ठोग्रं वचो ऽपावधीत्त्वेषं वचो ऽपावधीत्स्वाहा। या ते अग्ने रजाशया हराशया तनूर्वर्षिष्ठा गह्नरेष्ठा वर्षिष्ठा गह्वरेष्ठोग्रं वचो ऽपावधीत्त्वेषं वचो ऽपावधीत्स्वाहा। देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे। नार्यसीदमहं रक्षसो ग्रीवा अपिकृन्तामि। तपायन्यसि वित्तायन्यस्यवतान्मा नाथितमवतान्मा व्यथितम्। अग्ने अङ्गिरो यो ऽस्यां पृथिव्यामस्यायुना नाम्नेहि। यत्ते ऽनाधृष्टं नामानाधृष्यं तेन त्वादधे। अग्ने अङ्गिरो यो द्वितीयस्यां यस्तृतीयस्यां पृथिव्यामस्यायुना नाम्नेहि। यत्ते ऽनाधृष्टं नामानाधृष्यं तेन त्वादधे। विदेदग्निर्नभो नाम। सिंह्यसि महिष्यासि देवेभ्यः प्रथस्व देवेभ्यः कल्पस्व देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व ॥

15 विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्।[1]
वातजूतो यो अभिरक्षतु[3] त्मना प्रजां[2] पिपर्ति बहुधा विराजति ॥

पितॄणां भागधेयी स्थ। इन्द्रघोषास्त्वा पुरस्ताद्वसवः पान्तु। मनोजवसस्त्वा दक्षिणतः पितरः पान्तु। प्रचेतास्त्वा पश्चाद्रुद्रैः पातु। विश्वकर्मा त्वोत्तरादादित्यैः पातु। सिंह्यसि सपत्नसाही स्वाहा। सिंह्यसि रायस्पोषवनिः स्वाहा। 20 सिंह्यसि सुप्रजावनिः स्वाहा। सिंह्यस्यादित्यवनिः स्वाहा। सिंह्यस्यावह देवान्देवायते यजमानाय स्वाहा। भूतेभ्यस्त्वा। विश्वायुरसि पृथिवीं स्कभान। अच्युतक्षिदस्यन्तरिक्षं स्कभान। ध्रुवक्षिदसि दिवं स्कभान। अग्नेः कुलायमस्यग्नेः पुरीषमसि। यज्ञः प्रत्यष्ठात् ॥ ३ ॥ Cf. XXXIX, 3. 4; KS. II, 8. 9; XXV, 6; MS. I, 2, 7. 8; III, 8, 5; TS. I, 2, 11. 12; VI, 2, 7.

1. RV. X, 170, 1 and other Saṃhitās 2. Other Saṃhitās प्रजाः. 3. read correctly अभिरक्षति.

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
देवश्रुतौ देवेष्वाघोषेथाम्[1] ॥
इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पांसुरे ॥ 5
इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्ये[2]।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥
वैष्णवमसि विष्णुस्त्वोत्तभ्नातु ॥
दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुरोरन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ[3] दक्षिणादोत सव्यात् ॥ 10
विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥
विष्णोः पृष्ठमसि । विष्णो रराटमसि । विष्णोः श्नप्त्रे स्थः । विष्णोः स्यूरसि । विष्णोर्ध्रुवो ऽसि । वैष्णवमसि विष्णवे त्वा ॥
प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । 15
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ ४ ॥ Cf. XL, 1; KS. II, 10; XXV, 8; MS. I, 2, 9; III, 8, 7; TS. I, 2, 13; V1, 2, 9.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इदमहं रक्षसो ग्रीवा अपिकृन्तामि । इदमहं यो नः समानो यो ऽसमानो ऽरातीयति तस्य ग्रीवा अपिकृन्तामि । बृहन्नसि बृहद्ग्रावा[4] । बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीम् । इदमहं तान्वलगानुद्वपामि यान्[illegible] समानो यानसमानो निचखान । इदमहं तान्वलगानुद्वपामि यान्[illegible] नसबन्धुर्निचखान । इदमहं तान्वलगानुद्वपामि यान्नः [illegible]

1. The ms. आघोषेष्ठाः.
2. KS. MS. TS. यशस्ये. For दशस्ये cf. ṚV. VII, 99, 3; VS. V, 16 दशस्या. TA. I, 8, 2 agrees with Kap.
3. The ms. आपृणस्व. It is apparently a clerical mistake, due t[illegible] pre[illegible]ous quarter.
4. The ms. बृहद्रवा ([illegible] X[illegible], 2 बृहद्ग्रा[illegible]

निंचखान । इदमहं तान्वलगानुद्वपामि यान्नः स्वो यानरणो निचखान। सम्राडसि सपत्नहा स्वराडस्यभिमातिहा सत्राराडसि रक्षोहा विश्वाराडस्यरातीयतो हन्ता। गायत्रेण च्छन्दसावबाढो यं द्विष्मः। त्रैष्टुभेन जागतेनानुष्टुभेन पाङ्क्तेन च्छन्दसावबाढो यं द्विष्मः । किमत्र भद्रं तन्नौ सह। निरस्तो वलगो
5 ऽवबाढो दुरस्युः। रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवान्। रक्षोघ्नो वलगघ्नो ऽवसिञ्चामि वैष्णवान्। रक्षोघ्नो वलगघ्नो ऽवस्तृणामि वैष्णवान्। रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी। रक्षोहणौ वलगहनावुपदधामि वैष्णवी। रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी। रक्षोहा त्वा वलगहा स्तृणामि वैष्णवम् ॥ ५ ॥
Cf. XL, 2; KS. II, 11; XXV, 9; MS. I, 2, 10, 11; III, 8, 8; TS. I, 3, 2; VI, 2, 11.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे।
10 इदमहं रक्षसो ग्रीवा अपिकृन्तामि। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा। शुन्धन्तां लोकाः पितृषदनाः। यवो ऽसि यवयास्मद्द्वेषो यवयारातिम्। पितृषदनं त्वा लोकमास्तृणामि। उद् द्यौ स्तभानान्तरिक्षं[2] पृण दृंहस्व पृथिव्याम्। नितानस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण धर्मणा। ब्रह्मवनिं त्वा क्षत्रवनिं देववानिं सजातवनिं रायस्पोषवनिं पर्यूहामि। ब्रह्म दृंह क्षत्रं
15 दृंह प्रजां दृंह रायस्पोषं दृंह। घृतेन द्यावापृथिवी आपृणाताम्[3]। विश्वजनस्य च्छायासि। इन्द्रस्य स्यूरसि। इन्द्रस्य ध्रुवो ऽसि। ऐन्द्रमसीन्द्राय त्वा ॥ ६ ॥ Cf. XL, 3; KS. II, 12; XXV, 10; MS. I, 2, 11; III, 8, 9; TS. I, 3, 1; VI, 2, 10.

विभूरसि प्रवाहणः। वह्निरसि हव्यवाहनः। श्वात्रो ऽसि प्रचेताः। तुथो ऽसि विश्ववेदाः। उशिगसि कविः। अंहारिरसि बम्भारिः[4]। अवस्युरसि दुव-
20 स्वान्। शुन्ध्युरसि मार्जालीयः। सम्राडसि कृशानुः। परिषद्यो ऽस्यास्तव्यः। नभो ऽसि प्रतक्वा। असंमृष्टो ऽसि हव्यसूदनः। ऋतधामासि स्वर्योनिः[5]। समुद्रो ऽसि वि[illegible]। अजो ऽस्येकपात्। अहिरसि बुध्न्यः। कव्यो ऽसि

[illegible] या॰ [illegible] प्रा। अन्तरिक्षं.

4. So also ŚŚr. VI, 12, 20. Other Saṃhitās अह्वारिः.

5. Other Saṃhitās स्वर्ज्योतिः.

कव्यवाहनः । रौद्रेणानीकेन पाहि माग्ने । पिपृहि[1] माग्ने । नमस्ते अस्तु । मा मा हिंसीः ॥ ७ ॥ Cf. KS. II, 13; MS. I, 2, 12; TS. 1, 3, 3.

ज्योतिरसि विश्वरूपं मरुतां पृषती । देवेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥

त्वं सोम तनूकृद्भ्यो द्वेषोभ्यो ऽन्यकृतेभ्यः ।

उरु यन्तासि वरूथम् ॥ स्वाहा ॥ 5

जुषाणो अप्तुराज्यस्य वेतु । स्वाहा ॥

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।

युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।

घृतं घृतवने पिब प्रप्र यज्ञपतिं तिर ॥ स्वाहा[2] ॥ 10

आदित्यास्त्वगस्यदित्याः सदने सीद । देव सवितरेष ते सोमस्तं रक्षस्व । मा त्वा दभन् । एतत्त्वं देव सोम देवानुपागाः । इदमहं मनुष्यान्सह प्रजया सह रायस्पोषेण । नमो देवेभ्यः स्वधा पितृभ्यः । निर्द्रुहो निर्वरुणस्य पाशान्मुक्षीय । स्वरभिव्यख्यं ज्योतिर्वैश्वानरम् । अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपाः पुनर्व्रतपा व्रतिनां व्रतानि । या मम तनूस्त्वय्यभूदियं सा मयि । 15 या तव तनूर्मय्यभूदेषा सा त्वयि । यथायथं नो व्रतपा व्रतिनां व्रतानि । स्वाहा यज्ञं मनसि स्वाहा दिवि स्वाहा पृथिव्यां स्वाहोरावन्तरिक्षे स्वाहा वाते वाचि विसृजे[3] ॥ ८ ॥ Cf. XL, 5; KS. III, 1; XXVI, 2; MS. I, 2, 13; III, 9, 1; TS. I, 3, 4; VI, 3, 2.

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।

घृतं घृतवने पिब प्रप्र यज्ञपतिं तिर ॥ स्वाहा ॥ 20

अत्यन्यानगां नान्यानुपागाम् । यान्नाजुजोषं परि तानवृजम् । अर्वाक्त्वा परेभ्यो ऽविदं परो ऽवरेभ्यः । तं त्वा जुषामहे वनस्पते देवयज्यायै जुष्टं विष्णवे । विष्णवे त्वा । देवस्त्वा सविता मध्वानक्तु । ओषधे त्रायस्वैनम् । स्वधिते मैनं हिंसीः । द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या संभव ।

1. The ms. पिप्रीहि.

2. KS. adds: उर्वन्तरिक्षं वीहि. It probably occurred in Kap. as well, for the brāhmaṇa XL, 5 explains it.

3. The ms. विसृजेत्.

वनस्पते शतवल्शो[1] विरोह सहस्रवल्शा वि वयं रुहेम ॥
यं त्वायं स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।
अच्छिन्नरायः[2] सुवीरः ॥ ६ ॥ Cf. XLI, 1; KS. III, 2; XXVI, 3; MS. I, 2, 14; III, 9, 2. 3; TS. I, 3, 5; VI, 3, 3.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ।
5 इदमहं रक्षसो ग्रीवा अपिकृन्तामि । पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा । शुन्धन्तां लोकाः पितृषदनाः । यवो ऽसि यवयास्मद्द्वेषं यवयारातिम् । पितृषदनं त्वा लोकमास्तृणामि । स्वावेशो ऽस्यग्रेगा नेतॄणां । वनस्पतिस्त्वाधिष्ठास्यति । तस्य वित्तात् । घृतेन द्यावापृथिवी आपृणाताम् । देवस्त्वा सविता मध्वानक्तु । सुपिप्पला[3] ओषधीस्कृधि । द्यामग्रेणास्तम्भीरो[4]-
10 न्तरिक्षं[5] मध्येनाप्राः पृथिवीमपरेण[6]दृंहीः[7] ॥

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥

15 ब्रह्मवनिं त्वा क्षत्रवनिं देववनिं सजातवनिं रायस्पोषवनिं पर्यूहामि । ब्रह्म दृंह क्षत्रं दृंह प्रजां दृंह रायस्पोषं दृंह ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥

परिवीरसि । परि त्वा दैवीर्विशो व्ययन्ताम् । परीमं रायो मनुष्यम् ।
20 अन्तरिक्षस्य सानूपेष । द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म

1. The ms. ॰वल्शो, ॰वल्शा.
2. KS. अच्छिन्नरायी. TS. अच्छिन्नो रायः; see Prof. Keith's note thereon.
3. The ms. सुपिप्पला, a form not rare in mss.
4. KS. अस्पृक्षः.
5. = आ । अन्तरिक्षम् ।
6. Thus also some MS. mss. The Kap. maintains अपरेण in its brāhmaṇa Other Saṃhitās : उपरेण.
7. The ms. अपरेणादृंह.
8. The ms. ना॰.

स्वाहा ॥ १० ॥ Cf. XLI, 3. 4; KS. III, 3; XXVI, 5. 6; MS. I, 2, 14; III, 9, 3. 4; TS. I, 3, 6; VI, 3, 4.

इषे त्वा । उपावीरसि । उप देवान्दैवीर्विशः प्रागुर्वह्नीनुशिजः[1] । बृहस्पते धारया वसूनि । हव्या ते स्वदम् । देव त्वष्टर्वसु रण । रेवती रमध्वम् । अग्नेर्जनित्रमसि । वृषणौ स्थः । उर्वश्यस्यायुरसि पुरूरवा असि । गायत्रं छन्दोऽनुप्रजायस्व । त्रैष्टुभं छन्दोऽनुप्रजायस्व । जागतं छन्दोऽनुप्रजायस्व ॥ 5

भवतं नः समनसौ समोकसावरेपसौ ।
मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ॥
ऋषीणां पुत्रो अधिराज एषो अग्नावग्निश्चरति प्रविष्टः[2] ।
इमा हव्या वहते[3] कल्पयामो मा देवानां मूमुहो भागधेयम्[4] ॥ ११ ॥ Cf. XLI, 5; KS. III, 4; XXVI, 7; MS. I, 2, 15, 7; III, 9, 6; TS. I, 3, 7; VI, 3, 5. 6.

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । 10 ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि । अमुष्मै जुष्टम् । धर्षा मानुषाः[5] । अद्भ्यस्त्वौषधीभ्यः । अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । आवह देवान्देवायते[6] यजमानाय । अपां पेरुरसि । स्वात्तं हव्यं देवेभ्यो घृतवत् । सं ते वायुः प्राणेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा ॥ १२ ॥ Cf. XLI, 6; KS. III, 5; XXVI, 8; MS. I, 2, 15; III, 9, 6; TS. 15 I, 3, 8; VI, 3, 6. 7.

घृतेनाक्तौ पशुं त्रायेथाम् । रेवति प्रेधा यज्ञपतिमाविश । उरो अन्तरिक्ष

1. KS. वह्नय उशिजः is to be corrected. For this section Schroeder had only one ms. which read वह्नेनशिजो. KS. XXVI, 7 agrees with Kap.

2. The Kap. ms. reverses the order of the two pādas. Cf. KS. TS. MS. I, 2, 7; VS. V, 4; AV. IV, 39, 9.

3. The ms. हवते.

4. KS. replaces this hemistich by स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन्. The other Saṃhitās agree with Kap. in as much as the second half of the verse conveys a similar import, though the words are different in every text.

5. ? The ms. ०षा.

6. KS. देवयते, but in II, 9; XXV, 8 देवायते. Pāṇini VII, 4, 38 teaches देवायत् for the Kāṭhakas. See Schroeder's note in Monatsber. d. Kon. Ak d. Wiss. zu Berlin, July 1879, p. 686.

सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव । वर्षीयो वर्षीयसो यज्ञं यज्ञपतौ धाः । नमस्त आतान । अनर्वाक्प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण । देवीरापः शुद्धा यूयं देवान्युयुध्वम्[1] । शुद्धा वयं परिविष्टाः परिवेष्टारो[2] भूयास्म । प्राणं ते मा हिंसिषम् । चक्षुस्ते मा हिंसिषम् । श्रोत्रं ते
5 मा हिंसिषम् । वाचं ते मा हिंसिषम् । यत्ते क्रूरं[3] यदास्थितं तत्त एतेन कल्पताम् । तत्ते मा हिंसिषम् । चरित्रांस्ते मा हिंसिषम् । नाभिं ते मा हिंसिषम् । मेढ्रं ते मा हिंसिषम् । पायुं ते मा हिंसिषम् । देवेभ्यः शुन्धस्व । समङ्घ्र्यैः[4] । ओषधे त्रायस्वैनम् । स्वधिते मैनं हिंसीः । रक्षसां भागो ऽसीदमहं रक्षो ऽवबाधे । इदमहं रक्षो ऽधमं तमो नयामि । इषे त्वोर्जे । घृतेन द्यावा-
10 पृथिवी प्रोर्णुवाताम् । देवेभ्यः शुन्धस्व । देवेभ्यः शुम्भस्व । अमुष्मै त्वा जुष्टाम् । उर्वन्तरिक्षं वीहि । वायो वे ष्टोकानाम्[5] । प्रत्युष्टं रक्षः । देवेभ्यः स्वाहा । स्वाहा देवेभ्यः । प्रयुता द्वेषांसि स्वाहा । ऊर्ध्वनभसं मारुतं गच्छतम् ॥ १२ ॥

Cf. KS. III, 6; MS. I, 2, 15. 16; III, 9, 7. 10, 1; TS. I, 3, 8. 9; VI, 3, 8. 9.

रेडसि[6] । अग्निस्त्वा श्रीणातु । आपः समरिणन् । वातस्य त्वा ध्राज्यै पूष्णो रंह्या ऊष्मणो ऽव्यथिष्या अपामोषधीनां रोहिष्यै । ऐन्द्रः प्राणो अङ्गेअङ्गे
15 निदीध्यत्[7] । ऐन्द्रो व्यानो अङ्गेअङ्गे निदीध्यत्[7] । ऐन्द्रो ऽपानो अङ्गेअङ्गे निदीध्यत्[7] ॥

देव त्वष्टर्भूरि ते संसमेतु[8] सलक्ष्मा यद्विषुरूपं बभूव ।
देवत्रा यन्तमवसे सखायमनु त्वा माता पितरो मदन्तु ॥

1. The ms. युद्धं. The Saṃhitās vary: KS. यूढ्वं, MS. युयुध्वं, TS. ऊढ्वं, VS. VI, 13 वोढ्वं.
2. KS. ms. परिवेस्थारो भूरो (emended by the editor to परिवेष्टारो वो). Brahmabala, the commentator of KāṭhGṛ. quotes the mantra without वो.
3. KS. क्रूरतरं is an inferior variant. All the other Saṃhitās agree with Kap. So also Brahmabala.
4. Cf. MS. शमङ्घ्रयः (page 26, l. 11). So also TS.
5. Cf. VS. VI, 16 वायो वे स्तोकानां, TS. वायो वीहि स्तोकानां, MS. वायोः स्तोकानाम्.
6. The ms. रडसि.
7. KS. and Kap. mss. निदीधत्. MS. VS. VI, 20 have निदीध्यत्, TS. निदेध्यत्.
8. = सम्–सम् । एतु ।

घृतं घृतपावानः पिबत । वसां वसापावानः पिबत । अन्तरिक्षस्य हविरसि । स्वाहा त्वा वाताय । दिशः प्रदिश आदिशो विदिश उद्दिशो[1] दिशः । स्वाहा दिग्भ्यः । नमो दिग्भ्यः ॥ १४ ॥ Cf. KS. III, 7; MS. I, 2, 17; TS. I, 3, 10 VI, 3, 11.

समुद्रं गच्छ स्वाहा । अन्तरिक्षं गच्छ स्वाहा । देवं सवितारं गच्छ स्वाहा । अहोरात्रे गच्छ स्वाहा । मित्रावरुणौ गच्छ स्वाहा । द्यावापृथिवी गच्छ स्वाहा । छन्दो गच्छ स्वाहा । सोमं गच्छ स्वाहा । यज्ञं गच्छ स्वाहा । नभो गच्छ स्वाहा । अग्निं वैश्वानरं गच्छ स्वाहा । मनो मे हार्दि यच्छ । पुत्रं नप्तारमशीय । ओषधीभ्यः स्वाहा ॥

धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च ।
यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥

सुमित्रिया न आप ओषधयो भवन्तु । दुर्मित्रियास्तस्मै सन्तु [यो ऽस्मान्द्वेष्टि यं च] वयं द्विष्मः ॥

द्वीपे राज्ञो वरुणस्य गृहो हिरण्ययो मितः ।
ततो धृतव्रतो राजा धाम्नोधाम्न इह मुञ्चतु ॥ १५ ॥ Cf. KS. III, 8; MS. I, 2, 18; III, 10, 7; TS. I, 3, 11; VI, 4, 1.

हविष्मतीरिमा आपो हविष्मान्देवो अध्वरः ।
हविष्मीं[2] आविवासति हविष्मां अस्तु सूर्यः ॥

अग्नेर्वो ऽपन्नगृहस्य सदसि सादयामि । सुम्नायवः सुम्नाय सुम्नं धत्त । इन्द्राग्न्योर्भागधेयी स्थ । मित्रावरुणयोर्भागधेयी स्थ । विश्वेषां देवानां भागधेयी स्थ । सोमस्य वसतीवरीः ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ॥
ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥
सोम राजन्विश्वाः प्रजा उपावरोह । विश्वास्त्वां प्रजा उपावरोहन्तु ॥

1. The ms. दिशो for विदिश उद्दिशो. 2. The ms. हविष्मं.

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोत ग्रावाणो विदुषो न यज्ञं शृणोतु देवः सविता हवं मे ॥
देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमः ।
तं देवेभ्यो देवत्रा दात शुक्रपेभ्यो येषां भाग स्थ स्वाहा ॥
5 कर्षिरसि[1] । समुद्रस्य वो ऽक्षित्या उन्नये ॥
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
स यन्ता शश्वतीरिषः ॥

वसूनां रुद्राणामादित्यानां पन्नेजनी स्थ । वसवो रुद्रा आदित्या एता वः पन्नेजनीः । समुद्रं गन्धर्वेष्ठामन्वातिष्ठत । वातस्य पत्मनेडिता[2] ।
10 वाम्यौ[3] ते संदृशि विश्वं रेतो धिषीय तव वाम्यनु संदृशि ॥ १६ ॥ Cf. KS. III, 9; MS. I, 3, 1; IV, 5, 1-4; TS. I, 3, 12. 13; VI, 4, 2. 3.

निग्राभ्या स्थ देवश्रुतः[4] शुक्राः शुक्रभृतः । आयुर्मे तर्पयत । प्राणं मे तर्पयत । व्यानं मे तर्पयत । अपानं मे तर्पयत । चक्षुर्मे तर्पयत । श्रोत्रं मे तर्पयत । वाचं मे तर्पयत । आत्मानं मे तर्पयत । प्रजां मे तर्पयत । पशून्मे तर्पयत । गृहान्मे तर्पयत । गणान्मे तर्पयत । ते मे मा वितृषन् ॥
15 देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । ग्रावास्यध्वरकृद्देवेभ्यः । ऊर्ध्वमिममध्वरं कृधि । उत्तमेन पविनेन्द्राय सुषुत्तमं मधुमन्तं पयस्वन्तम् । इन्द्राय त्वाभिमातिघ्न इन्द्राय त्वा सहोद इन्द्राय त्वा वसुमत इन्द्राय त्वा रुद्रवत इन्द्राय त्वादित्यवते ऽग्नये त्वा रायस्पोषदे[5] विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे त्वा । यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां
20 यदुरावन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृधि । अधि धात्रे वोचः[6] ॥
श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः ।
ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबत ॥

1. MS. padapāṭha ms. TS. VS. VI, 28 कार्षिः for कर्षिः.
2. The ms. पत्मनेडिता. Cf. KS. पत्मन्नीडिता and MS. पत्मनेडिता.
3. Thus the ms. KS. MS. वाम्री.
4. The ms. ०श्रु०.
5. The ms. ०पोषंदे.
6. The ms. वाच:.

मा भैः। मा संभित्थाः। धिषणे ईडिते ईडयेथाम्। ऊर्जं दधाथाम्। ऊर्जमस्मासु धत्तम्। मा वी ँहिंसिषम्। मा युवमस्मान्हिंसिष्टम्। प्रागपागुदगधराक्तास्त्वा[1] दिश आधावन्तु। अम्ब निस्वर। समरीर्विदम्[2] ॥ १७ ॥ Cf. KS. III, 10; MS. I, 3, 2. 3; IV, 5, 4; TS. I, 4, 1; VI, 4, 4.

इति कपिष्ठलकठसंहितायां द्वितीयो ऽध्यायः ॥

---

1. = प्राक्। अपाक्। उदक्। अधराक्। ताः। त्वा।

2. KS. समरिर्विदः, MS. I, 3, 4 समरिर्विदाम्, VS. VI, 36 समरीर्विदाम्.

वाचस्पतये पवस्व[1]। वृष्णो अंशुभ्यां गभस्तिपूतः। देवो देवानां पवित्र-
मसि। येषां भागो ऽसि। मधुमतीर्ण इषस्कृधि। स्वांकृतो ऽसि। उर्वन्तरिक्षं
वीहि[2]। विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः। मनस्त्वाष्टु[3]। स्वाहा
त्वा सुभो सूर्याय। देवेभ्यस्त्वा मरीचिपेभ्यः। प्राणाय त्वा। उपया-
5 मगृहीतो ऽसि ॥

अन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायः समिषो यजस्व।
अन्तस्ते[4] द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम्।
सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥
मधुमतीर्ण इषस्कृधि। स्वांकृतो ऽसि। उर्वन्तरिक्षं वीहि[2]। विश्वेभ्य
10 इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः। मनस्त्वाष्टु[3]। स्वाहा त्वा सुभो सूर्याय।
देवेभ्यस्त्वा मरीचिपेभ्यः। अपानाय त्वा ॥ १ ॥ Cf. XLII, 1. 2; KS. IV, 1; XXVII, 1. 2; MS. I, 3, 4. 5; IV, 5, 5. 6. 7; TS. I, 4, 2. 3; VI, 4, 5. 6.

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥
उपयामगृहीतो ऽसि। वायवे त्वा ॥

15 इन्द्रवायू इमे सुता उप प्रयोभिरागतम्।

1. KS. adds वाजिन् and Schroeder wrongly joins it with the following mantra.

2. The ms. उर्वान्तरिक्षं वीहि। स्वांकृतोऽसि. But in its brāhmaṇa Kap. has the same order as above which agrees with KS. MS. The lengthening in स्वांकृतो is not intelligible. Cf. the brāhmaṇa's comment: इति प्राणमेव स्वं कुरुते. KS. has the easier स्वंकृतो.

3. The ms. मनस्त्वाष्ट्र, which gives little sense. For त्वाष्टु see the brāhmaṇa:. मनसा हि प्राणो धृतः.

4. The ms. अन्तष्टे.

इन्दवो वामुशन्ति हि ॥

उपयामगृहीतो ऽसि । वायव इन्द्रवायुभ्यां त्वा । एष ते योनिः । सजोषोभ्याम् त्वा ॥

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।

ममेदिह श्रुतं हवम् ॥ 5

उपयामगृहीतो ऽसि । मित्रावरुणाभ्यां त्वा । एष ते योनिः । ऋतायुभ्यां[1] त्वा ॥

या वां कशा मधुमत्यश्विना सूनृतावती ।

तया यज्ञं मिमिक्षतम् ॥

उपयामगृहीतो ऽसि । अश्विभ्यां त्वा । एष ते योनिः । माध्वीभ्यां 10 त्वा । उपयामगृहीतो ऽसि । वायव इन्द्रवायुभ्यां त्वा । एष ते योनिः । विष्णोरुरुक्रमे । उपयामगृहीतो ऽसि । मित्रावरुणाभ्यां त्वा । एष ते योनिः । विष्णोरुरुक्रमे । उपयामगृहीतो ऽसि । अश्विभ्यां त्वा । एष ते योनिः । विष्णोरुरुक्रमे । तं रक्षस्व । मा त्वा दभन् । दुश्चक्षास्ते मावक्षत् ॥ २ ॥ Cf. KS. IV, 2; MS. I, 3, 6. 7. 8. 9; TS. I, 4, 4. 5. 6.

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने[2] । 15

इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥

उपयामगृहीतो ऽसि । शण्डाय त्वा । एष ते योनिः । वीरतायै त्वा ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।

प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे ॥

उपयामगृहीतो ऽसि । मर्काय त्वा । एष ते योनिः । प्रजाभ्यस्त्वा ॥ 20

अपनुत्तौ शण्डामर्कौ सह तेन यं द्विष्मः । तूथो ऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु । तूथो ऽसि जनधाया देवास्त्वा मन्थिपाः

1. The ms. शतायुभ्यां.

2. KS. विमानः. ṚV. X, 123, 1; VS. VII, 16 and MS. TS. agree with Kap. The Kāṭhaka is to be emended. A similar example of a final e changed to aḥ at the end of a hemistich when followed by i is found in KS. I, 3 सातयः (for सातये, in मन्द्रा धनस्य सातये ॥ इन्द्रस्य॰).

प्रणयन्तु । आयुः संधत्तं प्राणं संधत्तं चक्षुः संधत्तं श्रोत्रं संधत्तं वाचं संधत्तम् । अनाधृष्टासि । जिन्वेथीं स्वपत्यां[1] मघ्वा । सुवीराः प्रजाः प्रजनयन्परीहि । सुप्रजाः प्रजाः प्रजनयन्परीहि ॥

संजग्माना दिवा पृथिव्या शुक्रः शुक्रशोचिषा मन्थी मन्थिशोचिषा ।
5 शुक्रो ऽसि शुक्रशोचिः । मन्थ्यसि मन्थिशोचिः । अच्छिन्नस्य ते देव सोम सुवीर्यस्य[2] रायस्पोषस्य दधितारः[3] स्याम । निरस्ता शण्डामर्कौ सह तेन यं द्विष्मः । शुक्रस्याधिष्ठानमसि । मन्थिनो ऽधिष्ठानमसि ॥

या संस्कृतिः प्रथमा विश्वकर्मा यो मध्यमो बृहस्पतिश्चिकित्वान् ।

यः परमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय
10 सुतमाजुहोत ॥

स्वाहा त्वा सुभो सूर्याय । देवेभ्यस्त्वा मरीचिपेभ्यः ॥ ३ ॥ Cf. KS. III, 3. 4; XXVII, 7. 8; MS. I, 3, 10. 11. 12; IV, 6, 3; TS. I, 4, 8. 9.

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।

अप्सुषदो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

उपयामगृहीतो ऽस्याग्रयणः[4] । जिन्व यज्ञं जिन्व यज्ञपतिम् । अभि
15 सवनानि पाहि । विष्णुस्त्वां पात्विन्द्रियेण । विशं त्वं पाहीन्द्रियेण । एष ते योनिः । विश्वेभ्यस्त्वा देवेभ्यः ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा बृहद्वते[5] वयस्वत उक्थाव्यम् । यत्त इन्द्र बृहद्वयस्तस्मै त्वा । विष्णवे त्वा । एष ते योनिः । इन्द्राय त्वा ॥

उपयामगृहीतो ऽसि । मित्रावरुणाभ्यां त्वा । उक्थेभ्यस्त्वोक्थाव्यं गृ-
20 ह्णामि । एष ते योनिः । मित्रावरुणाभ्यां त्वा । पुनर्हविरसि । देवेभ्यस्त्वा

1. The ms. स्वपत्यां.

2. The ms. सुवीरस्य. Other Saṃhitās have सुवीर्यस्य.

3. KS. TS. III, 2, 3, 1 ददितारः. MS. अभिग्रहीतारः.

4. KS. आग्रायणो. See Pāṇini V, 4, 36, Vārttika.

5. The ms. बृहद्वदे.

देवाव्यं पृणच्मि यज्ञस्यायुषे ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा । उक्थेभ्यस्त्वोक्थाव्यं गृह्णामि । एष ते योनिः । इन्द्राय त्वा । पुनर्हविरसि । देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥

उपयामगृहीतो ऽसि । इन्द्राग्निभ्यां त्वा । उक्थेभ्यस्त्वोक्थाव्यं गृह्णामि । एष ते योनिः । इन्द्राग्निभ्यां त्वा । देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा । इन्द्राय त्वा । उक्थेभ्यस्त्वोक्थाव्यं गृह्णामि । एष ते योनिः । इन्द्राय त्वा । देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥

उपयामगृहीतो ऽसि । इन्द्रावरुणाभ्यां त्वा । इन्द्राबृहस्पतिभ्यां त्वा । इन्द्राविष्णुभ्यां त्वा । उक्थेभ्यस्त्वोक्थाव्यं गृह्णामि । एष ते योनिः [1] । इन्द्राविष्णुभ्यां त्वा[2] । देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥ ४ ॥

Cf. KS. IV, 5. 6; XXVII, 9. 10; MS. I, 3, 13. 14; IV, 6, 4. 5; TS. I, 4, 10. 11. 12; VI, 4, 11. 5, 1.

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

उपयामगृहीतो ऽसि वैश्वानरः । ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमो ऽच्युतानामच्युतक्षित्तमः[3] । एष ते योनिः । वैश्वानराय त्वा ॥

उपयामगृहीतो ऽसि । मधवे त्वा । उपयामगृहीतो ऽसि । माधवाय त्वा । उपयामगृहीतो ऽसि । शुक्राय त्वा । उपयामगृहीतो ऽसि । शुचये त्वा । उपयामगृहीतो ऽसि । नभसे त्वा । उपयामगृहीतो ऽसि । नभस्याय त्वा । उपयामगृहीतो ऽसि । इषाय त्वा । उपयामगृहीतो ऽसि । ऊर्जाय त्वा । उपयामगृहीतो ऽसि । सहसे त्वा । उपयामगृहीतो ऽसि । सहस्याय

1. The ms. पृणच्मि. Several mss. of MS. have variously पृणच्मिं, पृणुच्मि, पृणाम्मि; while the padapāṭha resolves it thus: प्रणम्मीति प्रऽनच्मि.

2. One of the two mss. of KS. adds पुनर्हविरसि.

3. The ms. अच्युतक्षुत्तमः.

त्वा । उपयामगृहीतो ऽसि । तपसे त्वा । उपयामगृहीतो ऽसि । तपस्याय त्वा ॥

इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् ।
अस्य पातं धियेषिता ॥

5 उपयामगृहीतो ऽसि । इन्द्राग्निभ्यां त्वा । एष ते योनिः । इन्द्राग्निभ्यां त्वा ॥

ओमासश्चर्षणीधृतो विश्वे देवास आगत ।
दाश्वांसो दाशुषः सुतम् ॥

उपयामगृहीतो ऽसि । विश्वेभ्यस्त्वा देवेभ्यः । एष ते योनिः । विश्वे-
10 भ्यस्त्वा देवेभ्यः ॥ ५ ॥ Cf. KS. IV, 5. 7; XXVIII, 1; MS. I, 3, 15. 16. 17. 18; TS. I, 4, 13. 14. 15. 16; VI, 5, 2. 3.

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा मरुत्वते । एष ते योनिः । इन्द्राय त्वा मरुत्वते ॥

15 इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा मरुत्वते । एष ते योनिः । इन्द्राय त्वा मरुत्वते ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
20 आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥

उपयामगृहीतो ऽसि । इन्द्राय त्वा मरुत्वते । एष ते योनिः । इन्द्राय त्वा मरुत्वते ॥[1]

[ मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥

1. After this KS. adds 7 lines more. The other Yājuṣa Saṃhitās also retain these mantras. The omission in Kapiṣṭhala must be due to clerical oversight.

उपयामगृहीतो ऽसि । इन्द्राय त्वा मरुत्वते । एष ते योनिः । इन्द्राय त्वा मरुत्वते ॥

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
स्तोमैर्वत्सस्य वावृधे ॥

उपयामगृहीतो ऽसि । महेन्द्राय त्वा । एष ते योनिः । महेन्द्राय त्वा ॥ ]

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥

उपयामगृहीतो ऽसि । महेन्द्राय त्वा । एष ते योनिः । महेन्द्राय त्वा ॥ ६ ॥ Cf. KS. IV, 8; MS. I, 3, 19. 20. 21. 22. 23. 24. 25; TS. I, 4, 17. 18. 19. 20. 21.

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

द्यां गच्छ स्वर्गच्छ[1] । रूपं वो रूपेणाभ्यागां वयसा वयः । तूथो वो विश्ववेदा विभजतु वर्षिष्ठे ऽधि नाके । एतत्ते अग्ने राध एति[2] सोमच्युतम् । तन्मित्रस्य पथा नय । ऋतस्य पथा प्रेत चन्द्रदक्षिणाः । ब्राह्मणमद्य ध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् ॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः[3] पुर एतु प्रभिन्दन् ।
अयं शत्रूञ्जयतु[4] जर्हृषाणो ऽयं वाजं जयतु वाजसातौ ॥
वनेषु व्यन्तरिक्षं ततान[5] ॥

वि स्वः पश्य व्यन्तरिक्षम् । यतस्व सदस्यैः । अस्मद्दाता मधुमती देवत्रा गच्छ । प्रदातारमाविश । अनवहायास्मान्देवि दक्षिणे देवयानेन

1. The ms. स्वर्गं गच्छ, but compare the brāhmaṇa.
2. The ms. एतु, probably under the influence of विभजतु in the preceding sentence. Cf. the brāhmaṇa.
3. The ms. वृधः.
4. The ms. शत्रुं जयतु.
5. As the verse has already been given in full in I, 19 the Kap. has only the pratīka here. KS. repeats it sakalapāṭhena.

पथा यती सुकृतां लोके सीद । तन्नौ संस्कृतम् ॥ ७ ॥ Cf. XLIV, 4; KS. IV, 9; XXVIII, 4; MS. I, 3, 37; IV, 8, 2. 3; TS. I, 4, 43; VI, 6, 1.

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥
उपयामगृहीतो ऽसि । आदित्येभ्यस्त्वा ॥
5 कदा चन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनं[1] त इन्द्रियमातस्थावमृतं दिवि ॥
उपयामगृहीतो ऽसि । आदित्येभ्यस्त्वा ॥
यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वो ऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥
10 उपयामगृहीतो ऽसि । आदित्येभ्यस्त्वा । विवस्व आदित्यैष ते सोमपीथस्तस्मिन्मन्दस्व । या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥

अदब्धेभिः सवितः पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्णो अघशंस ईशत ॥

उपयामगृहीतो ऽसि । देवाय त्वा सवित्रे । उपयामगृहीतो ऽसि । सु-
15 शर्मासि सुप्रतिष्ठानः । बृहदुक्षे नमः । एष ते योनिः । विश्वेभ्यस्त्वा देवेभ्यः ॥ ८ ॥ Cf. KS. IV, 10; MS. I, 3, 26. 27. 28; TS. I, 4, 22. 24. 26; VI, 5, 6. 7.

उपयामगृहीतो ऽसि । बृहस्पतिसुतस्य त इन्द[3] इन्द्रियावतः पत्नीवतो ग्रहमृध्यासम् । अग्ना३इ पत्नीवा३न्सजूस्त्वष्ट्रा[4] सोमं पिब ॥

उपयामगृहीतो ऽसि । हरिरसि हारियोजनो[5] हर्यो स्थाता । हरिभ्यां
20 त्वा । स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषो हरिवतो ग्रहमृध्यासम् । हर्यो स्थ हारिवतो धानाः सहसोमा[6] इन्द्रस्य ॥

1. The ms. स्तवनं. ṚV. VIII, 52, 7 हवनं. Other Saṃhitās as emended above.
2. The ms. ०ळ०.
3. The Kap. ms. omits इन्द, while त is missing in KS., which reads ०सुतस्य इन्द०. The hiatus between the words is a clear indication of the dropping out of त before इन्द. Kap. XLIV, 8; KS. XXVIII, 8 retain the correct text बृहस्पतिसुतस्य त इन्द इन्द्रियावतः.
4. The ms. त्वष्ट्रा.
5. The ms. हार्योजना.
6. The ms. ०सोम.

अग्न आयूंषि पवस आसुवोर्जमिषं च नः।
आरे बाधस्व दुच्छुनाम्[1] ॥
उपयामगृहीतोऽसि। अग्नये त्वा तेजस्वते। एष ते योनिः। अग्नये त्वा तेजस्वते ॥
ओजस्तदस्य तित्विष उभे यत्समवर्तयत्[2]।
इन्द्रश्चर्मेव रोदसी ॥ 5
उपयामगृहीतोऽसि। इन्द्राय त्वौजस्वते। एष ते योनिः। इन्द्राय त्वौजस्वते ॥
अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु।
भ्राजन्तो अग्नयो यथा ॥ 10
उपयामगृहीतोऽसि। सूर्याय त्वा भ्राजस्वते। एष ते योनिः। सूर्याय त्वा भ्राजस्वते ॥
इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम्।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥
उपयामगृहीतोऽसि। इन्द्राय त्वा हरिवते। एष ते योनिः। इन्द्राय 15 त्वा हरिवते ॥ ९ ॥ Cf. XLIV, 8; KS. IV, 11; XXVIII, 8; MS. I, 3, 29. 30. 31. 32. 33. 34; IV, 7, 4; TS. I, 4, 27. 28. 29. 38.

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः।
त्वष्टा विष्णुः प्रजया संरराणो[3] यजमानाय द्रविणं दधातु ॥
समिन्द्र णो मनसा नेषि गोभिः सं सूरिभिर्हरिवः सं स्वस्त्या।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥ 20
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥

1. The ms. दुत्सुनां.
2. The ms. तेजस्.
3. KS. संरराणा, and at the end दधातु. Schroeder made a mistake in rejecting दधात of his second ms. The line recurs in KS. III, 9; XIII, 9 (Kap. is missing there), of which दधातु in III, 9 is to be emended to दधात of XIII, 9. Cf. TS. AV. VII, 17, 4.

सुगा वो देवाः सदनेदमस्तु य आजग्मुः[1] सवनेदं जुषाणाः ।
जक्षिवांसः पपिवांसश्च विश्वे ऽस्मे धत्त वसवो वसूनि ॥
यानावह उशतो देव देवांस्तान्प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवींष्यसुं घर्मं दिवमातिष्ठतानु ॥
5 यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्टे[2] विद्वान्प्रजानन्नुपयाहि साधु[3] ॥

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वं योनिं गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहा । देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव[4] यज्ञं स्वाहा वाचि स्वाहा वाते धाः ॥ १० ॥

Cf. KS. IV, 12; MS. I, 3, 38; TS. I, 4, 44; VI, 6, 2.

10 उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवे ऽकरुतापवक्ता हृदयाविधश्चित् ॥
शतं ते राजन्भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत्[5] ॥
अग्नेरनीकमप आविवेशापां नपात्प्रतिरक्षन्नसुर्यम् ।
15 दमेदमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्येत्[6] ॥
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य त्वा यज्ञपते[7] सूक्तवाके नमोवाके विधेम ॥ स्वाहा ॥

1. Thus also Nirukta XII, 12. Other Saṃhitās आजग्म.
2. The Kap. copy which I have now in my possession reads with KS. and MS. ऋधगयाडृधगुताशमिष्ट, but the copy which I consulted at Utrecht (either Prof. Caland's or that of Göttingen) read: ऋधगया ऋधगुताशमिष्ठा, the same as VS. VIII, 20.
3. Other Saṃhitās यज्ञम्.
4. देव has fallen out in Kap. Cf. I, 12. Schroeder has compounded देव with यज्ञं in KS. I, 12; and here. He was misled by the absence of udātta in देव. Cf. TS. I, 1, 13; VS. II, 21; VIII, 21.
5. KS. अस्मात्, an inferior variant. Cf. ṚV. I, 24, 9 and other Saṃhitās.
6. So also TS. KS. MS. VS. VIII, 24 उच्चरणयत्.
7. KS. adds सह, which is unclear.

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः[1] । अव नो देवैर्देव-कृतमेनो यक्ष्यव मर्त्यैर्मर्त्यकृतम् । उरोरा नो देव रिषस्पाहि । देवीराप एष वो गर्भः । तं वः सुप्रीतं सुभृतमभारिषम्[2] । देवेषु नः सुकृतो ब्रूत । अभिष्ठितो[3] वरुणस्य पाशः । अप्सु धौतस्य ते देव सोम नृभि स्तुतस्य यो भक्षो गोसनिर्यो ऽश्वसनिस्तस्य त उपहूत उपहूतस्य भक्षं कृणोमि । 5
प्रत्यस्तो वरुणस्य पाशः । नमो वरुणस्य पाशाय ॥

गायत्रीं छन्दांस्यनु संरभन्तामस्मात्राय उत यज्ञाः[4] सचन्ताम् ॥

सुप्रीतः शिशुरप आविवेश[5] ॥

उन्नेतर्वस्यो ऽध्युन्नयां[6] नः ॥

आपो अद्यान्वचारिषं रसेन समगस्महि[7] । 10

आयुष्मानग्न आगमं तं मा संसृज वर्चसा ॥

एधो ऽस्येधिषीमहि । समिदसि समेधिषीमहि । तेजो ऽसि तेजो मयि धेहि ॥ ११ ॥ Cf. KS. IV, 13; MS. I, 3, 39; IV, 8, 5; TS. I, 4, 45; VI, 6, 3.

प्रजापतिर्वा इदमासीत् । तस्मादग्निरध्यसृज्यत । सो ऽस्य मूर्ध्न ऊर्ध्व उदद्रवत्[8] । तस्य यल्लोहितमासीत्तदपामृष्ट । तद्भूम्यां न्यमार्ट्[9] । तत उदुम्बरो 15
ऽजायत । तस्मात्स लोहितं पच्यते । स प्राङ् प्राद्रवत् । तं स्वा वागैट्ट जुहु-धीति । स इतः पर्यमृष्ट । तत्स्वाहेत्यजुहोत् । तस्मादेषैवमाहुतिः । स्वा ह्येनं वागैट्ट । तस्मान्न ललाटे लोमास्ति न पाण्योः । तस्मादरत्निमात्री स्रुग्भवति । चक्षुर्वाव स तत्स्वमजुहोत् । अमुमेव स तदादित्यमजुहोत्[10] । एष ह्येवाग्निहोत्रम् । श्वःश्वो वसीयान्भवति यस्यैवमग्निहोत्रं हूयते ॥ 20

1. KS. निचुङ्कुण, निचुङ्कुणो. Kap. has the Ṛgvedic form. Both the forms were known to Nirukta V, 18.
2. KS. अभार्ष.
3. The ms. अभिष्टुतो.
4. KS. यज्ञस्. MS. TS. I, 6, 3 agree with Kap.
5. The ms. ऊपाविश for अप आविवेश.
6. The ms. ध्यंन्नया. KS. ऽभ्युन्नया.
7. The line is taken over from ṚV. I, 23,23, as against KS. which has अपो and समगन्महि.
8. The ms. उदद्रव इव.
9. The ms. निमाद.
10. This is the text of the Kap. copy I used at Utrecht. My Lahore copy omits this sentence.

न वै पुराहोरात्रे आस्ताम् । ते एतयाहुत्योभे सहासृज्येताम् । यत्सायं जुहोति तेन भ्रातृव्याय पराचीं विवासयति यत्प्रातस्तेनात्मने प्रतीचीम् । अग्नेर्वै गुप्त्या अग्निहोत्रं हूयते । यत्सायं जुहोति तेनैनं रात्र्यै[3] रमयति यत्प्रातस्तेनाह्ने । एषा वा अग्नावाहुतिः प्रथमा हुता यदग्निहोत्रम् । तस्मा-
5 त्सर्वा एवाग्नावाहुतयो हूयन्ते । अथैषा वा अग्निहोत्रमुच्यते । अग्निहोत्रं[4] ह वै नाम नास्मादन्यः । समानेषु वसीयान्भवति यस्यैवमग्निहोत्रं हूयते ॥ १२ ॥

Cf. KS. VI, 1; MS. I, 8, 1; TB. II, 1, 2.

इति कपिष्ठलकठसंहितायां तृतीयो ऽध्यायः ॥

---

1. The ms. तयेतया॰ for ते एतया॰.
2. The ms. सहासृजेतां. So also one of the KS. mss.
3. The ms. रात्री.
4. The ms. अग्नेर्होत्रं. Cf also two mss. of KS. which have अग्नेहोत्रं.

स नारमत। स प्राद्रवत्। तस्मिन्नजुहोत्। तस्या आहुत्याः पुरुषो ऽजायत। स नारमत। स प्राद्रवत्। तस्मिन्नजुहोत्। तस्या आहुत्या अश्वो ऽजायत। तस्मात्पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते[1] इव। स नारमत। स प्राद्रवत्। तस्मिन्नजुहोत्। तस्या आहुत्या गौरजायत। अविरजायत। अजाजायत। यवो ऽजायत। व्रीहिरजायत। एताभ्यो वै सप्तभ्य आहुतिभ्यः सप्तेमे ग्राम्याः पशवो ऽसृज्यन्त। स नारमत। स प्राद्रवत्। तस्मिन्नजुहोत्। तस्या आहुत्या वसन्तो ऽजायत। ग्रीष्मो ऽजायत। वर्षा अजायन्त[2]। शरदजायत। हेमन्तो ऽजायत। स त्रयोदश्यामाहुत्यामुद्यतायामबिभेत्। तं प्रत्यङ्ङुपापद्यत[3]। तं पाणितः प्राविशत्। तस्मात्पाण्योर्लोम नास्ति। अग्निधानी ह्येतत्। तस्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते। तस्माद्धन्यमानो[4] हस्तौ प्रतार्य[5] गृह्णाति[6]। अग्नावेव तत्त्राणि[7]मिच्छते। अग्निं वै पशवो ऽनूपतिष्ठन्ते[8] पशू-

1. The ms. विज्ञायत.
2. The ms. वर्षाजायत.
3. The ms. प्रत्यङ्गपा०.
4. One of the Kap. copies as well as KS. ०मानौ, which is to be corrected to ०मानो. The significance of the passage seems to be: therefore when struck he holds out the hands (for protection), and thereby he seeks protection in fire (which in a previous sentence is said to have entered the hands: तं पाणितः प्राविशत्).
5. The ms. प्रतप्य. For our emendation compare MS. p. 116, ll. 13-14 यद्धन्यमानो हस्तौ प्रतिप्रसारयति.
6. गृह्णाति or प्रतिगृह्णाति of KS. are difficult to translate. Kāṭhaka हन्यमानो (thus emended) हस्तौ प्रतिगृह्णाति cannot be translated as "one who is struck seizes the hands (of his adversary)", for MS. ib. makes it clear that हस्तौ refers to the hands of हन्यमान. Cf. प्र–√ग्रह् "to hold or stretch forth" (M.-Williams).
7. Cf. KS. त्राणम्, MS. ib. न्यञ्चनम्.
8. The ms. ०तिष्ठन्ति, but further on (XXXVII, 7) गार्हपत्यं वै पशवो ऽनूपतिष्ठन्ते.

नाग्निः । प्रैनं पशवो विशन्ति [ प्र पशून्विशति[1] ] य एवं वेद । तामाहुति-
मप्सु प्रासिञ्चत् । ततः शिशिरमजायत । तस्मात्तत्क्रूरतमम्[2] । नहि तद्धुता-
न्नाहुतादजायत । साहुतिरपो दग्धुमुपाक्रमत[3] । तत आपो ऽग्नये वज्रो ऽभवन् ।
तस्मात्प्रोक्षन्[4]नग्निं न प्रापयेत् । यत्प्रापयेद्धुतेन[5] यजेत । तामाहुतिमोषधिषु
5 ण्यदधात्[6] । तस्मादोषधयो ऽनभ्यक्ता रेभन्ते । ओषधिभ्यो ऽधि पशवः
पशुभ्यो ऽधि प्रजाः । तदेतच्छिशिर आज्यं श्यायति । अग्नये तस्माच्छिशिरे
कक्ष उपादुर्त्यः[7] । प्रियमेव धामाग्नये प्रादात् । सो ऽस्मा अन्नाद्यं प्रयच्छति ।
अन्नादो भवति य एवं वेद ॥ १ ॥ Cf. KS. VI, 2; MS. I, 8, 1. 2; TB. II, 1, 2.

समाने वै योनावास्तां सूर्यश्चाग्निश्च । ततः सूर्य ऊर्ध्व उदद्रवत् । तस्य
10 रेतः परापतत् । तदग्निर्योनिनोपागृह्णात् । अयसा तदक्रूडयत् । तत्क्रूडयमानं
गवि न्यदधात् । तदिदं पयः । तस्मादत्रप्वयस्पात्रं[8] प्रतिधुक्क्रूडयति । यत्[9]प-
यसाग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोति । एष ह्येवाग्निहोत्रम् । अनडुहो
वै पयस्तण्डुलाः । असावादित्यो ऽनड्वान् । यद्यवाग्वाग्निहोत्रं जुहोत्य-
मुमेव तदादित्यं जुहोति । एष ह्येवाग्निहोत्रम् । यच्चक्रवृत्तं तदसुर्यं यदचक्रवृत्तं
15 तद्देवपात्रम्[10] । तस्मादचक्रवृत्तामग्निहोत्रतपनीं कुर्यात् ॥

न क्षीरेण प्रतिषिञ्चेन्नोदकेन । यत्क्षीरेण प्रतिषिञ्चेदप्रतिषिक्तं स्यात् ।
यदुदकेन शमयेत् । दोहने संस्रावमुच्छिष्य तेनोदकमिश्रेण[11] प्रतिषिञ्चेत् ।

1. The ms. omits प्र पशून् विशति. But cf. KS. MS.
2. The ms. omits तत्. Cf. KS.
3. So also a KS. ms., but Schroeder adopts उपाक्रामत.
4. The word हवींषि is understood before प्रोक्षन्.
5. KS. MS. हतेन for हुतेन. As the waters are identified with the thunderbolt, हतेन seems to be better suited.
6. The ms. ण्यदधुस्. As Prajāpati is the subject governing the verb the plural form is impossible. Cf. KS. MS. TS. VII, 1, 1, 2–3.
7. So also KS. Cf. MS. उपाधेयः.
8. Schroeder's KS. अत्रप्वयः पात्रं is to be emended.
9. Schroeder's KS. reads तत् which is impossible.
10. KS. देवमात्रं is certainly wrong.
11. Schroeder's KS. उच्छिष्येत नोदकमिश्रेण, which is absurd. नोदकमिश्रेण प्रतिषिञ्चेत् is just the contrary of what is intended. Cf. MS. p. 118, l. 18; ĀpŚr. VI, 6, 7.

तन्न क्षीरेण प्रतिषिक्तं भवति नोदकेन । स्कन्नमेव तत् । परि चेदाकरोति या स्थाल्यग्निहोत्रतपनी तया दुह्यात् । इयं वै सा । न वा इमामिह नेहातिस्कन्दति[1] । अनयैवोपसीदति । तदस्यास्कन्नं भवति । अद्भिः प्रतिषिञ्चति । आपो हि प्रतिषेचनाय तस्थिरे । तन्मिथुनमापश्च पयश्च । यदि दुह्यमानावभिन्द्यादन्यया[2] स्थाल्या दुह्यात् । सैव तत्र प्रायश्चित्तिः । यद्यधिश्रितं स्कन्देदन्यामभिदुह्याधिश्रित्योन्नीय जुहुयात् । सैव तत्र प्रायश्चित्तिः । यद्युन्नीयमानं स्कन्देत्पुनरवनीयान्यामभिदुह्याधिश्रित्योन्नीय जुहुयात् । सैव तत्र प्रायश्चित्तिः । यदि पुर उपसन्नमहुतं[3] स्कन्देत्पुनरवनीयान्यामभिदुह्याधिश्रित्योन्नीय जुहुयात् । सैव तत्र प्रायश्चित्तिः[4] । यत्र स्कन्देत्तदपो निनयेत् । आपो वै यज्ञस्य निष्कृतिः[5] । अद्भिरेवैनं[6] निष्करोति[7] । प्रतिषिक्तमन्यदप्रतिषिक्तमन्यत् । प्रतिषिक्तं पशुकामस्याप्रतिषिक्तं ब्रह्मवर्चसकामस्य । घर्मो वा एष प्रवृज्यते[8] यदग्निहोत्रम् । यदप्रतिषिक्तेन[9] जुहोति ब्रह्मवर्चसी भवति । यदि पयो न विन्देदाज्येन जुहुयात् । तद्ध्यप्रतिषेक्यमपशव्यमीश्वरमस्याशान्तं शुचा पशून्निर्दहः[10] । प्रतिषिक्तं पशुकामस्य । तच्छान्तं

1. Schroeder's KS. इयं वै मानवा, which does not in any way fit into the context. The Kap. correctly reads इयं वै सा ( "this—agnihotratapanī—is verily that—earth") । न वा इमामिह नेहातिस्कन्दति. Cf. MS. p. 118, ll. 1–2 स्थाल्या दुहति (correct दुहन्ति) । अनया वा एतदुपसीदन्ति । न हीमामितो नेतः स्कन्दति. See also Prof. Caland's paper ( pp. 69-73) in "Aufsätze zur Kultur und Sprachgeschichte, vornehmlich des Orients, Ernst Kuhn zum 70. Geburtstage 7. 2. 1916 gewidmet."
2. KS. ॰भिद्याद् to be corrected.
3. The ms. अहुतं, KS. अहुते, both to be emended to अहुतं. Cf. ĀpŚr. IX, 6, 6.
4. KS. would require two more passages beginning with यद्यधिश्रीयमाणं स्कन्देत्॰ (preceding यद्यधिश्रितं॰, l. 5) and यद्युन्नीतं स्कन्देत्॰ (following यद्युन्नीयमानं॰, l. 6) and both ending with सैव तत्र प्रायश्चित्तिः.
5. The ms. निःकृतिर्.
6. KS. adds एनं.
7. The ms. निःकरोति.
8. The ms. प्रयुज्यते.
9. KS. ॰षिक्तं न is to be corrected.
10. The ms. is very corrupt in this place : वैश्वानरमस्याशांतं शुचा पशून्निर्दहति. वैश्वानरम् is a corruption of ईश्वरं which requires निर्दहः at the end. Cf. MS. p. 118, ll. 16–17 तेजो ऽशान्तं पशून् निर्दहति without ईश्वरं; and TS. V, 4, 12, 3 सैनमीश्वरा प्रदहः, TāṇḍBr. VII, 7, 15 ईश्वरौ

मिथुनं पशव्यमापश्च पयश्च[1]। यदि पयो न विन्देद्यवाग्वा जुहुयात्। तद्धि प्रतिषेक्यं शान्तं मिथुनं पशव्यमापश्च तण्डुलाश्च ॥ २ ॥ Cf. KS. VI, 3; MS. I, 8, 2. 3.

अग्निहोत्रे वै जायापती[2] व्यभिचरेते । यत्प्राचीनमुद्वासयेत्पतिः पूर्वः प्रमीयेत। यत्प्रतीचीनमुद्वासयेज्जाया पूर्वा प्रमीयेत । संप्रत्युदीचीनमु-
5 द्वासयेत्समेवं[3] जीर्यतः। पूर्णमग्र उन्नयेदथ संमितमथ संमितमथ संमिततममुत्तमम्। अनुज्येष्ठमस्य[4] पुत्रा ऋध्नुवन्ति । संमितमग्र उन्नयेदथ भूयो ऽथ भूयो ऽथ पूर्णमुत्तमम्। भूयोभूय एवान्नाद्यमभ्युत्क्रामति[5] । कनिष्ठस्त्वस्य[6] पुत्राणामर्धुको[7] भवति । [ सर्वान्समावदुन्नयेद्यः कामयेत सर्वे मे पुत्राः समावदृध्नुयुरिति । सर्वेषां वै पिता पुत्राणामृद्धिं कामयते । सर्व एव
10 समावदृध्नुवन्ति । नान्यो ऽन्यमतिक्रामति[8] ।] चतुरुन्नयति। चतुष्पद[9] एवास्मै पशून्गृह्णाति। द्विः पुरो जुहोति । द्विपद एवास्मै पशून्गृह्णाति। पशून्मे यच्छेति पश्चादुपसादयेत् । पशवो वै गार्हपत्यः । पशवः पयः। पशूनामेवैषा यतिः। न पश्चादुपसादयेत्। हविर्वा एतद्यदग्निहोत्रम्। यजमानो हविः। हविर्भूतमेव यजमानमपनुदते । उत्तरादुपसादयेत्। अनुत्पूतं[10] वा
15 एतद्यदग्निहोत्रम् । अग्निः पवित्रम्। यत्समयाग्निं हरति तेनैवैनत्पुनाति। अनु वा एष[11] एतद्ध्यायति यत्पश्चाधिश्रित्य पुरो जुहोति । यत्समयाग्निं हरति तेनैवैनं प्रीणात्यननुध्यायिनं[12] करोति। अस्माद्वै गार्हपत्यादसौ पूर्वो

वा एतौ निर्दहः. Prof. Caland refers me to a similar corruption in Kāṇva Śatapatha I, 4, 2, 9 तस्य ईश्वरो गृहाः प्रत्रसन्ति, as against Mādhyandina तस्माद् गृहाः प्रत्रसन्ति.

1. पयश्च is missing in Kap. ms. KS. मयश्च is to be corrected.
2. KS. जायम्पती is to be corrected.
3. KS. ॰मेवं is to be corrected.
4. KS. अनुज्येष्ठमेवास्य.
5. The ms. एवानाद्यमुत्क्रामति.
6. The ms. तस्य for त्वस्य.
7. The ms. अधुकामो for अर्धुको.
8. The passage within square brackets is missing in Lahore copy, though my Utrecht copy retained नान्यो ऽन्यमतिक्रामति which is not intelligible without the preceding sentences.
9. The ms. चतुःपद.
10. KS. अपूतं.
11. The ms. अनु वा एवैष, but cf. IV, 7 where Kap. has अनु वा एष एतद्ध्यायति.
12. KS. अनुध्यायिनं to be corrected. Cf. KS. VI, 8.

ऽग्निरसृज्यत। अयं वाव प्रजापतिरसौ पूर्वो ऽग्निः। तदयमित आदाय प्राङ्-
ङुद्रुत्याजुहोत्[1]। तस्मादग्निहोत्रं पश्चाधिश्रित्य पुरो जुहोति[2]। पुर एवान्यानि
हवींषि शृतानि कुर्वन्ति। पुरो जुह्वति[3] ॥ ३ ॥ Cf. KS. VI, 4; MS. I, 8, 4.

इध्मो वा एषो ऽग्निहोत्रस्य यत्समित्। यत्समिधमादधातीध्ममेवैत-
मग्निहोत्रस्य करोति। रुद्र ओषधीर्विषेणालिम्पत्। ताः पशवो नालिशन्त। 5
ताभ्यो देवाः प्रायश्चित्तिमैच्छन्। स प्रजापतिरब्रवीद्वार्यं वृणा अहं व
एताः स्वदयिष्यामीति। स एतां समिधमवृणीत। तस्मादेकैको हि
प्रजापतिस्ता अग्निनोपासृजत्। ता अग्निरस्वदयत्। एतस्यां वा आहिताया-
मग्निहोत्रिणो वीरुधः स्वदन्ते[4]। बहुर्द्वी[5] करोत्युभे आहुती समिद्धे जुहवानीति।
एकैव कार्या। सकृद्ध्येव सर्वस्मै यज्ञाय समिध्यते[6]। आयुर्मे यच्छ वर्चो मे 10
यच्छ प्रजां मे यच्छेति पुर उपसादयेत्। सृष्टिर्वा एतद्यदग्निहोत्रम्। यन्नो-
पसादयेत्पराचीः प्रजा इयुः। यदुपसादयति तस्मादिदं प्रजा यतास्तस्मादु-
पतिष्ठन्ते। अग्नौ ज्योतिर्ज्योतिरग्नाविति सायमग्निहोत्रं जुहुयात्। गर्भिण्या
वाचा गर्भं दधाति। मिथुनया वाचा गर्भं दधाति। सूर्यो ज्योतिर्ज्योतिः सूर्य
इति प्रातः। गर्भिण्यां[7] वाचा मिथुनया प्रजनयति। यन्निरुक्तं चानिरुक्तं च 15
तन्मिथुनम्। यद्यजुषा च मनसा च तन्मिथुनम्। तदजाम्याहुत्योः। आग्नेयी
सायमाहुतिः सौरी प्रातः। अग्निः प्रवापयिता सूर्यः प्रजनयिता। अस्तं
सूर्ये निम्रुक्ते सायमग्निहोत्रं जुहुयात्। उपोदयं सूर्यस्य प्रातः। अग्निरेव
प्रवापयित्वा सूर्यं रात्र्यै[8] गर्भं दधाति। तं गर्भिण्या वाचा मिथुनया प्रातः
प्रजनयति। एतं वै प्रजायमानं प्रजा अनुप्रजायन्ते। प्र प्रजया प्र[9] पशुभिर्जायते 20
यस्यैवमग्निहोत्रं हूयते। एषा वा अग्निहोत्रस्य स्थाणुर्या पूर्वाहुतिः। तामति-
हाय जुहुयात्। तमेव परिवृणक्ति। अभिक्रामं सायं होतव्यम्। गर्भमेव

1. KS. अनूद्द्रुत्या०.
2. KS. जुह्वति.
3. The ms. जुहोति, but कुर्वन्ति of the previous sentence would better be followed by plural जुह्वति.
4. The ms. सचेते. Cf. MS. p. 120, l. 19 स्वदन्ते.
5. KS. बहुर्द्वी–.
6. The ms. समृद्ध एव सर्वस्मै यज्ञाय समृध्यत.
7. KS. तं गर्भिण्या.
8. The ms. रात्री.
9. प्र is missing in our ms.

दधाति। प्रतिक्रामं प्रातः। प्रैव जनयति। अभिक्राममेव होतव्यम्। अभिक्रान्तेन हि यज्ञस्यर्ध्नोति। यज्जुहोति तद्देवानाम्। यन्निमार्ष्टि तत्पितॄणाम्। यत्प्राश्नाति तन्मनुष्याणाम्। तस्मादग्निहोत्रं वैश्वदेवमुच्यते ॥ ४ ॥ Cf. KS. VI, 5; MS. I, 8, 4. 5.

प्रैयमेधा वै नाम ब्राह्मणा आसन्। ते सर्वमेवाविदुः। तत्सहाविदुः[1]।
5 ते ऽग्निहोत्र एव न समराधयन्। तेषां सकृदेको ऽग्निहोत्रमजुहोद्द्विरेकस्त्रिरेकः[2]। तेषां यः सकृदजुहोत्तमितरावपृच्छतां कस्मै त्वं जुहोषीति। एकधैवेदमित्यब्रवीत्प्रजापतिः प्रजापतय एव जुहोमीति। तेषां यो द्विरजुहोत्तमितरावपृच्छतां कस्मै त्वं जुहोषीति। अग्नये चैव सायमित्यब्रवीत्प्रजापतये च सूर्याय प्रातः प्रजापतये चेति। तेषां यस्त्रिरजुहोत्तमितरावपृच्छतां कस्मै
10 त्वं जुहोषीति। अग्नये सूर्याय प्रजापतये तेभ्य एव सायमित्यब्रवीत्तेभ्यः प्रातरिति। तेषां यो द्विरजुहोत्स आर्ध्नोत्। स भूयिष्ठो ऽभवत्प्रजया। अतीतरौ श्रियाक्रामत्। तस्य प्रजामितरयोः प्रजे सजातत्वमुपैताम्। तस्माद् द्विर्होतव्यम्[3]। यजुषा च मनसा च। यामेव स ऋद्धिमार्ध्नोत्तामृध्नोति ॥

यदि सायमहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छेदग्निहोत्रमधिश्रित्योन्नीया-
15 ग्निना पूर्वेणोद्द्रुत्याग्निहोत्रेणानुद्रवेत्[4]। आहुत्यैवैनं[5] च्यावयति। यो ब्राह्मणो बहुवित्स्यात्स उद्धरेत्। सर्वेणैवैनं ब्रह्मणोद्धरति। यत्पुरा धनमदायी स्यात्तद्द्यात्। अच्युतेनैवैनं च्यावयति। यदि प्रातरहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेदनुगमयित्वा[6] पूर्वं मथित्वापरमुद्धृत्य जुहुयात्। सैव तत्र प्रायश्चित्तिः। यदि त्वरेत[7] पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात्। सैव तत्र प्राय-

1. KS. ते सर्वमविदुस्तत्सहैवाविदुः. The correct reading for both the Saṃhitās is of course the one given above.

2. MS. प्रैयमेधा वै सर्वं सह ब्रह्माविदुः। ते ऽग्निहोत्रेण समराधयन्। तेषां त्रिरेको ऽजुहोद् द्विरेकः सकृदेकः. It is pretty certain that अग्निहोत्रेण of Schroeder's MS. text is to be corrected to अग्निहोत्रे ण.

3. The ms. तस्मारहेतिव्यं. KS. ms. तस्माद् द्विहोतव्ये, which has been emended by Schroeder to तस्माद्द्वे°.

4. So also MS. p. 125, l. 19; KS. अनूद्द्रवेत्.

5. The ms. आहुती.

6. The ms. अनुगछयित्वा.

7. Schroeder adds ॥ after त्वरेत, which is a gross blunder.

श्चित्तिः । जामि[1] नु तद्यो ऽस्य[2] पूर्वो ऽग्निः । तं पश्चा[3] करोति । अन्यत्रैवाव-
सायाग्निं मथित्वोद्धृत्य जुहुयात् । सैव तत्र प्रायश्चित्तिः । ततः श्वो ऽग्नये[4]
तपस्वते जनद्वते पावकवत इष्टिं निर्वपेत् । यदा वा अग्निः संतप्यते [[5]ऽथ
जायते । ओषधयः पावकाः । ओषधीरेवास्मै पावका भागधेयमपिदधाति ।
न गार्हमनुबुध्यते । यदा ह्येवास्मै नापिदधा[6]त्यथैषो ऽनुगच्छति । यौ    5
पन्थानावभितस्तौ[7] दर्शपूर्णमासौ । या मध्ये सृतिस्तदग्निहोत्रम् । एवं वा
अग्निहोत्रिणे दर्शपूर्णमासिने स्वर्गो लोको ऽनुभाति ॥

[ मनसा वा इमां प्रजापतिर्वेदिं पर्यगृह्णादग्निहोत्रिणे । तत्र यत्किंच
ददाति तद्बर्हिष्यम् । यथा सन्नेषु[8] नाराशंसेषु ददात्येवमेष ददाति । यत्किंच
ददाति मध्य एव यज्ञस्य । द्यावापृथिवी एतस्य सदोहविर्धाने । अहोरात्राणी-    10
ध्मः । दिशः परिधयः । ग्रुष्वाः प्रोक्षणीः । ओषधयो बर्हिः[9] । यजमानो
यूपः । न संभवन्वदेत् । पशुरेव भूत्वा संभवति । अहरहर्वै[5] ] पशवः संभवन्तो
ऽथ मेध्याः । न राजन्यस्याग्निहोत्रमस्ति । अव्रत्यो हि स हन्ति । व्रतं न
विच्छिन्द्यात् । पौर्णमासीं च रात्रीममावस्यां च जुहुयात् । ते हि व्रतं गोपा-
यति । यान्यहानि न जुहुयात्तानि ब्राह्मणायाग्रे ऽस्य[10] गृह उपहरेयुः ।    15

1. The ms. यामि.
2. The ms. तस्य for तद्यो ऽस्य.
3. KS. अपरं.
4. The ms. omits ऽग्नये. That it is scribe's error is clear from the preceding श्वो (for श्वों).
5–5. The omission of this long passage in Kap. ms. is again due to scribe's oversight. The text given within brackets is from KS.
6. Thus corrected. KS. ms. नापिदधत्ये॰, which has been emended by the editor to नापिदधत्य॰, though the context demands the singular form ॰दधाति. The perpendicular stroke of आ is often mistaken for a pṛṣṭha-mātrā standing for ए in old Devanāgarī mss., and thus ॰दधात्य॰ of KS. ms. could easily be read as ॰दधत्ये॰.
7. Schroeder has अभितस्थौ, which gives no sense whatsoever. For our emendation cf. MS. p. 126, ll. 1–2 यथा वै पथौ वर्तनी एवं दर्शपूर्णमासौ.
8. Thus corrected. KS. यथासन्नेषु. Cf. ĀpŚr. XIII, 5, 1 सन्नेषु नाराशंसेषु दक्षिणा ददाति.
9. Thus corrected. Schroeder's emendation of KS. ms. बर्हि to न हि is baseless. For our correction cf. MS. p. 126, l. 13.
10. KS. puts the enclitic अस्य after

अग्निर्वै ब्राह्मणः । अग्नावेव तज्जुहोति । तदस्य स्वदितमेष्टं भवति ॥ ५ ॥
Cf. KS. VI, 6; MS. I, 8, 7. 8. 9.

वाचा वै सह मनुष्या अजायन्त । ऋते[1] वाचो देवाश्चासुराश्च । ते यन्मनुष्या अवदंस्तद्देवा अभवन् । ते देवाश्चासुराश्च प्रजापतिमब्रुवन्निमे वाचेदमभूवन्निति । स वाचः सत्यं निरमिमीत भूर्भुवः स्वरिति । यत्तुरीयमनृतं
5 तन्मनुष्येषु न्यदधात् । एतद्वै वाचो ऽनृतं यन्मनुष्या वदन्ति । भूरितीमामसृजताग्निं रथन्तरं त्रिवृतं गायत्रीम् । भुव इत्यन्तरि[2]क्षं वातं वामदेव्यं त्रिष्टुभं पञ्चदशम्[3] । स्वरिति दिवं सूर्यं बृहदेकविंशं जगतीम् । भूर्भुवः स्वरग्नौ ज्योतिर्ज्योतिरग्नावित्यग्निहोत्रं जुहुयात् । एतद्वै वाचः सत्यमेतन्मिथुनमेतद्ब्रह्म । तेनैव जुहोति । इमा एवैतदिष्टका उपधत्ते । इमा एवैत-
10 दिष्टका उपधायोत्तमं नाकं रोहति । उत्तमः समानानां भवति यस्यैवमग्निहोत्रं हूयते ॥

वाचं यच्छेदग्निहोत्र उन्नीयमाने । तपसा वै प्रजापतिः प्रजा असृजत । स यन्न व्याहरत्तदेवातप्यत । सृष्टिर्वा एतद्यदग्निहोत्रम् । सृष्टिरेतद्व्रतम् । ता उद्भव स्थेत्युदभावयत् । यर्हि बिन्दव इवे स्युस्तर्ह्यवेक्षेतोद्भव स्थोदहं
15 प्रजया प्र पशुभिर्भूयासमिति । उद्भूतिर्वा एतत्प्रभूतिर्यदग्निहोत्रम् । उत्प्रजया प्र[4] पशुभिर्भवति यस्यैवमग्निहोत्रं हूयते । अग्निनावेक्षते । प्रजननं वा एतद्यदग्निहोत्रम् । अग्निः प्रजनयिता । प्रैव जनयति । रेतो वा एतद्धीयते यदग्निहोत्रम् । न सुशृतं कुर्याद्रेतः कूडयेत् । नो अशृतम् । अन्तरेवैवं[6]

तानि, its right position in the sentence, although it is related to गृहे further on. Cf. MS. p. 127, l. 2 अथो ब्राह्मणायैवास्याग्रतो गृह आहरेयुः.

1. KS. ते to be emended, the meaning of the passage being: men were verily born with speech, the devas and asuras without speech.

2. KS. भुवरित्य०. भुवस् (originally the nom. pl. of भूर्) has passed on to भुवर्, being influenced by भूर् and स्वर्.

3. KS. पञ्चदश is to be corrected.

4. The ms. omits it.

5. प्र is missing in the ms.

6. KS. अन्तरेणैव. ĀpŚr. VI, 6, 1 has the Kap. reading: नो ऽशृतमन्तरेवैव स्यात् (the commentary runs: नो अशृतं च भवति । यथान्तरा मध्य इव शृताशृतयोर्भवति तथैव स्यात्).

स्यात् । रुद्र मृडानाभेव मृड धूर्ते नमस्ते ऽस्त्विति[1] हुत्वोदङ्ङुद्दिशेत् । एतानि वै रुद्रस्य क्रूराणि नामानि । तैरेष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानः । तान्येवास्य प्रतिनुदति तानि शमयति । यर्ह्ययं देवः[2] प्रजा अभिमन्येत सजूर्जातवेदो दिवा पृथिव्या हविषो वीहि स्वाहेत्यग्निहोत्रं[3] जुहुयात् । या वा अग्नेर्जातवेदास्तनूस्तयैष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानः । 5
तामेवास्य शमयति । तस्यै तज्जुहोति[4] । तदजाम्याहुत्योराग्नेय्येषाग्नेयीतरा । संवत्सरं वा एतमिन्धते ऽग्निं वैश्वानरम् । न वा एतस्य संवत्सरे ऽप्यस्ति न वैश्वानरे यो ऽनाहिताग्निः । यानि[5] दारूणि ते मासाः । ये स्थूला अङ्गारास्त[6] ऋतवः । ये ऽणीयांसस्ते ऽर्धमासाः । मुर्मुरा अहोरात्राणि । यत्सुवर्णं ज्योतिस्तद्बार्हस्पत्यम् । यन्न सुवर्णं न लोहितं तन्मैत्रम् । यल्लोहितं तद्वारुणम् । यत्सहधूमं[7] तद्वैश्वदेवम् । यत्राङ्गारेष्वग्निर्लेलायेव तदस्यास्यमाविर्नाम । 10
तद्ब्रह्म । तस्मिन्होतव्यम् । मुखेन वा अश्नात्यङ्गान्यवत्याविः प्रजासु भवति श्वःश्वो वसीयान्भवति यस्यैवमग्निहोत्रं हूयते ॥ ६ ॥ Cf. KS. VI, 7; MS. I, 8, 4. 5. 6.

ओदनपचनो गार्हपत्य आहवनीयो मध्याधिदेवनमामन्त्रणमेषा वै विराट् पञ्चपदा । तामेवाप्नोति तामवरुन्द्धे । यस्य ह्येषावरुद्धा स मनुष्याणां श्रेष्ठो भवति । यदि सायमग्निहोत्रस्य कालो ऽतिपद्येत दोषा वस्तोः[8] स्वाहेति जुहुयात् । सैव तत्राहुतिः । तेनास्य तदनतिपन्नं भवति । यदि प्रातरग्निहोत्रस्य कालो ऽतिपद्येत दिवा वस्तोः स्वाहेति जुहुयात् । सैव तत्राहुतिः । तेनास्य तदनतिपन्नं भवति । न स्वाहाकुर्यात्[9] । स्वाहाकारो 15

1. =रुद्र मृड । अनाभेव (MS. p. 121, l. 10 अनाभो) मृड । धूर्ते नमस्ते (MS. ib. नमन्ते) ऽस्तु.
2. KS. देवाः to be corrected. The plural form देवाः is incompatible with singular अयं and अभिमन्येत.
3. KS. स्वाहेति द्वादश रात्रीरग्निहोत्रं.
4. Schroeder understood it as तस्य एतत् जुहोति, which is impossible.
5. The ms. या.
6. The ms. ०स्ता, KS. ०स्ते.
7. KS. MS. p. 123, l. 10 सधूमं.
8. The ms. वस्थः.
9. In Schroeder's KS. स्वाहाकुर्यात् is missing. This spoils the text, for neither can न stand alone nor can the enclitic वै occupy the third position in the sentence.

वा अग्निहोत्रस्याहुतिं युवते । यर्हि वार्क्[1]प्रवदेत्तर्हि जुहुयात् । स ह्यग्निहोत्रस्य वषट्कारः । सजूरग्निर्दिवा पृथिव्येति द्यावापृथिवी अग्निं तानेव प्रीणाति तानवरुन्द्धे । सजूर्देवेन सवित्रेति । न हि सवितुर्ऋत आहुतिरस्ति । सजूः पूष्णान्तरिक्षेणेति । पशवो वै पूषा पशवो ऽन्तरिक्षम् । पशूनेवावरुन्द्धे ।
5 सजू रात्र्येन्द्रवत्या स्वाहेति रात्रीमेवैतदभिजुहोति । न हीन्द्रादृत आहुतिरस्ति । देवा वै पुराग्निहोत्रमहौषुः[2] । तस्मात्पुरा बृहन्महानजनि । सजूरह्नेन्द्रवता स्वाहेति । बार्हतं वा अहर्बार्हतः सूर्यः । अहश्चैवास्यैतत्सूर्यश्चाभिजितावभिहुतौ[3] भवतः । आनुष्टुभी वै रात्री त्रैष्टुभमहः । रात्रीं चैवै[4]तदहश्चाभिजुहोति । अग्ने[5] गृहपते[6] जुषस्व स्वाहेत्युत्तरामाहुतिं जुहोति । यथाग्नये समवद्यत्येवमेव
10 तत् । अपिप्रेरग्ने स्वां तन्वमयाड्[7] द्यावापृथिवी ऊर्जमस्मासु धेहीति तृणमत्त्वानु[8]प्रहरति । संस्थितिरेवैषा स्वगाकृतिः । अग्निहोत्रस्य वा एषो ऽशान्तमनु प्रजा हिनस्ति यत्तृणमनु[9]प्रहरति । तेनैवैनच्छमयति[10] । अग्ने गृहपते ऽदाभ्य[11] जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोति । यथा पत्नीः संयाजयत्येवमेव तत् । अनु वा एष एतद्ध्यायति यत्पश्चाद[12]धिश्रित्य पुरो[13] जुहोति । यत्स्रुवेण
15 गार्हपत्ये जुहोति तेनैवैनं प्रीणात्यननुध्यायिनं करोति । आस्यै[14]ग्निहोत्री

1. KS. वाव, as emended by Schroeder. The reading of Kap. is वाक् and not वाव, which he ascribes to Kap. Cf. HirŚr. III, 16 यर्हि वाक् प्रवदेत् तर्हि होतव्यमित्येकेषाम्. So also BhārŚr., Agnihotra ch. Mahādeva, the commentator of HirŚr. explains it thus: यर्हि यदा वाक् पक्षिणां प्रवदेत् प्रकटा भवेत् तर्हि तदा प्रातरग्निहोत्रं होतव्यमित्येके शाखिनः. Thus it is beyond doubt that Schr.'s text is to be corrected.
2. The ms. अहुषुः.
3. The ms. ०जितौ for ०हुतौ.
4. The ms. चैव.
5. The ms. आग्ने.
6. KS. ऽदाभ्य. Cf. note 11.
7. KS. अयान् is to be corrected. Cf. Āp. Śr. VI, 14, 2.
8. The ms. अनुत्प्र०
9. KS. adds अक्त्वा. Cf. ĀpŚr. VI, 13, 1.
10. The ms. ०वैनं शमयति.
11. KS. omits ऽदाभ्य. Cf. note 6.
12. KS. पश्चा for पश्चात्.
13. KS. पुरा.
14. For आस्य (=आ अस्य) KS. has अस्य, which cannot however begin a sentence. Of Kap. copies also only Prof. Caland's copy retains आ. KS. is to be corrected.

प्रजायां जायते यस्यैवमग्निहोत्रं हूयते ॥ ७ ॥ Cf. KS. VI, 8; MS. I, 8, 7.

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।
आरे अस्मे च शृण्वते ॥
अस्य प्रत्नामनु द्युतं शुक्रं दुदुह्रे अह्रयः ।
पयः सहस्रसामृषिम् ॥ 5
अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥

उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै ।
उभा दाताराविषां रयीणामुभा वाजस्य सातये हुवे वाम् ॥
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । 10
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥
अयं ते योनिर्ऋत्वियः[1] ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥

त्वमग्ने सूर्यवर्चाः सं मामायुषा वर्चसा[2] सृज । सं त्वमग्ने सूर्यस्य ज्योति- 15
षागथाः । समृषीणां स्तुतेन सं प्रियेण[3] धाम्ना समहमायुषा सं वर्चसा सं
प्रजया सं रायस्पोषेण ग्मीय ॥

इन्धानास्त्वा शतं हिमा द्युमन्तः समिधीमहि ।
वयस्वन्तो वयस्विनं यशस्वन्तो यशस्विनम् ।
सुवीरासो अदाभ्यमग्ने सपत्नदम्भनम् ॥ 20

आयुर्धा अग्ने ऽस्यायुर्मे धेहि । वयोधा अग्ने ऽसि वयो मे धेहि । वर्चोधा अग्ने ऽसि वर्चो मे धेहि । तनूपा अग्ने ऽसि तन्वं मे पाहि । यन्मे अग्न ऊनं[4] तन्वस्तन्म आपृण । अग्नेः समिदस्यभिशस्त्या मा पाहि । सोमस्य समिदसि परस्पा म एधि । यमस्य समिदसि मृत्योर्मा पाहि । अग्ने

1. Kap. cites the verse by pratīka, for in I, 16 it has been given sakalapāṭhena. KS. gives the complete verse.

2. The ms. adds प्रजया, but the brāhmaṇa does not support it.

3. The ms. त्रेषण.

4. The ms. क्रूरं.

यत्ते तपस्तेन तं प्रतितप यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अग्ने यत्ते शोचि-
स्तेन तं प्रतिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अग्ने यत्ते तेजस्तेन तं
प्रतितित्यग्धि[1] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अग्ने यत्ते ऽर्चिस्तेन तं प्रत्यर्च
यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अग्ने यत्ते हरस्तेन तं प्रतिहर यो
5 ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अग्ने रुचां पते नमस्ते रुचे मयि रुचं धेहि ।
चित्रावसो स्वस्ति ते पारमशीय । अर्वाग्वसो स्वस्ति ते पारमशीय ॥ ८ ॥
Cf. V, 3. 4. 5; KS. VI, 9; VII, 4. 5. 6; MS. I, 5, 1. 2. 5. 6. 8. 9; TS. I, 5, 5. 7.

इति कपिष्ठलकठसंहितायां चतुर्थो ऽध्यायः ॥

---

1. The ms. प्रतितिग्धी, but the brāhmaṇa supports the reading adopted above, which is identical with KS. In this section त्य must have fallen out in our ms.
प्रतितितिग्धि of MS. p. 68, l. 6 was perhaps the original for KS. and Kap. as well. तित्यग्धि is the intensive of √ त्यज् . Here we expect the root underlying तेजस्, and as such √त्यज् cannot be given preference over √तिज्. Cf. also ĀpŚr. VI, 21, 1 प्रतितिग्धि.

अम्भ स्थाम्भो वो भक्षीय । मह स्थ महो वो भक्षीय । ऊर्ज स्थोर्जं वो भक्षीय । रायस्पोष स्थ रायस्पोषं वो भक्षीय । रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठे । अयं[1] वो बन्धुः । इतो मापगातं[2] । मा मा हासिष्ट । बह्वीर्मे भवन्तु[3] । संहितासि विश्वरूपा[4] मोर्जा विशा गौपत्येना प्रजया रायस्पोषेण । मयि ते रायः श्रयन्ताम् । सहस्रपोषं ते पुष्यासम् ॥ 5

संपश्यामि प्रजा अहमिड[5]प्रजसो मानवीः ।
बह्वीर्भवन्तु नो गृहे ॥
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । 10
वर्धमानं स्वे दमे ॥
स नः पितेव सूनवे ऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ 15
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं रयिं दाः ।

1. The ms. adds च.
2. The ms. मापगात्. The other Saṃhitās मापगात.
3. So also a KS. ms.
4. Schroeder's accentuation in विश्वरूपा excludes आ from the next sentence. मा cannot begin the sentence. Hence विश्वरूपा is to be corrected to विश्वरूपा. Cf. MS. p. 68, l. 12; TS. sec. 2.
5. So also MS. p. 70, l. 1, and TS. sec. 1; but KS. इडा॰, which is to be corrected after its brāhmaṇa इड॰.

स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात् ॥

ऊर्जा वः पश्याम्यूर्जा मा पश्यत । रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यत । इडा स्थ मधुकृतः स्योना माविशतेरंमदः । मयि वो रायः श्रयन्ताम् । सहस्रपोषं वः पुष्यासम् ॥ १ ॥ Cf. KS. VII, 1. 7. 8; MS. I, 5, 2. 3. 9. 10; TS. I, 5, 6. 8.

5 महि त्रीणामवो ऽस्तु द्युक्षं[1] मित्रस्यार्यम्णः ।
दुराधर्षं वरुणस्य ॥
नहि तेषाममा चन नाध्वसु वारणेषु ।
ईशे रिपुरघशंसः ॥
यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय ।
10 ज्योतिर्यच्छन्त्यजस्रम् ॥
सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः[2] ॥
यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः ।
स नः सिशक्तु यस्तुरः ॥
15 मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य ।
रक्षा णो ब्रह्मणस्पते ॥
कदा चन स्तरीरसि[3] ॥
परि ते दूडभो[4] रथो ऽस्माँ अश्नोतु विश्वतः ।
येन रक्षसि दाशुषः ॥

20 अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि । निम्रदो ऽसीदमहं तं निर्मृ[5]णामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । अभिभूँ[6]रस्यभ्यहं तं भूयासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रभूरसि प्राहं तमतिभूयासं यो ऽस्मान्द्वेष्टि यं

1. The ms. द्युष्यं.
2. The ms. कुशिजः.
3. KS. gives the complete verse. The verse has already been given sakalapāṭhena in Kap. III, 8.
4. One of my Utrecht copies had दूळभो.
5. The ms. omits नि.
6. KS. विभूर् is to be corrected. Cf. its brāhmaṇa p. 71, l. 11; MS. p. 71, l. 6.

च वयं द्विष्मः । पूषा मा प्रपथे पातु । पूषा मा पशुपाः पातु । पूषा माधि-
पतिः पातु । प्राची दिगग्निर्देवता । अग्निं स ऋच्छतु[1] यो मैतस्या दिशो
ऽभिदासति । दक्षिणा दिगिन्द्रो देवता । इन्द्रं स ऋच्छतु[1] यो मैतस्या दिशो
ऽभिदासति । प्रतीची दिक्सोमो देवता । सोमं स ऋच्छतु[1] यो मैतस्या
दिशो ऽभिदासति । उदीची दिङ् मित्रावरुणौ देवता । मित्रावरुणौ स     5
ऋच्छतु[1] यो मैतस्या दिशो ऽभिदासति । ऊर्ध्वा दिग्बृहस्पतिर्देवता । बृह-
स्पतिं स ऋच्छतु[1] यो मैतस्या दिशो ऽभिदासति । इयं दिगदितिर्देवता ।
अदितिं स ऋच्छतु[1] यो मैतस्या दिशो ऽभिदासति । ज्योतिषे तन्तव आशि-
षमाशासे[2] ऽसावनु मा तनु ॥

धनं मे शंस्य पाहि । तन्मे गोपाय ॥     10

मम नाम प्रथमं जातवेदो माता पिता च दधतुर्न्वग्रे ।
तत्त्वं गोपाया पुनर्मदैतोस्तवाहमग्ने बिभराणि नाम[3] ॥

प्रजां मे नर्य पाहि । तां मे गोपाय ॥

इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् ।
अविनष्टानविह्रुतान्पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥     15

अन्नं मे पुरीष्य पाहि । तन्मे गोपाय ॥

धनं मे शंस्याजुगुपः । तन्मे पुनर्देहि[4] ॥

मम च नाम तव च[5] जातवेदो वाससी इव विवसानौ चरावः ।

1. The ms. सा रिछतु.
2. KS. आशास्ते is to be corrected. Cf. its brāhmaṇa p. 71, l. 17. Devapāla, the commentator of KāṭhGr. also cites the mantra with आशासे.
3. KS. तत्त्वं गोपाया पुनर्ददै ते वयं बिभराम तव नाम. Here ददै ते is to be corrected to मदैतोर्. The third pāda would thus mean: that thou protect till I come back. अग्ने is to be supplied in the fourth pāda. अग्ने in ĀśŚr. II, 5, 3 is a corruption.
4. The ms. धनं मे शंस्य पाहि तन्मे गोपाय, which is impossible. Now the person has returned from the journey and begs the fire to give back all the wealth which he had entrusted to him (fire) while proceeding on his travels.
5. KS. omits च. Keith agrees to the insertion of च in KS. at this place but suggests मम नाम (for मम च नाम) after TS. I, 5, 10, 1.

ते बिभूवो महसे[1] जीवसे च यथायथं नौ तन्वौ जातवेदः ॥
अग्ने सहस्राक्ष शतमूर्धञ्छततेजः शतं ते प्राणाः सहस्रं व्यानाः ।
साहस्रो वाजो ऽसि[2] । तस्य नो रास्व । तस्य ते भक्तिवानो भूयास्म ॥
प्रजां मे नर्याजुगुपः । तां मे पुनर्देहि[3] । अग्ने गृहपते सुगृहपतिरहं त्वया
5 गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूयाः । अस्थूरि णौ
गार्हपत्यं दीदायच्छतं हिमाः[4] ॥

अन्नं मे पुरीष्याजुगुपः । तन्मे पुनर्देहि[5] ॥ २ ॥ Cf. V, 8; VI, 1; KS. VII, 2. 3. 9. 11; MS. I, 5, 4. 11. 14; TS. I, 5, 6. 8. 10.

अग्निहोत्रे स्तोमो योक्तव्यः । यस्य वा अग्निहोत्रे स्तोमो युज्यते वसीयान्भवति । उपप्रयन्तो अध्वरमिति । प्रजा वा इमा उप । ताः सत्सत्स्तोमैः[6] ।
10 ता एवोपयुनक्ति । अस्य प्रत्नामनु द्युतमिति । देवा वै प्रत्नम् । ते सत्सत्स्तोमैः[7] ।
तानेव प्रायुङ्क्त[8] स्वर्गाय । उपोपेन्नु मघवन्भूय इन्नु त इति । इयं वा उप । स्वर्गमेवेत्वास्यां प्रतितिष्ठति । या वै प्रजा आभविष्यन्तीस्ता उप । ता एवोपयुनक्ति ।
परि ते दूडभो रथ इति स्तोममेवैतया युक्तं परिगृह्णाति । अग्निर्मूर्धा दिवः ककुदित्येषा मिथुना रेतस्वती पशव्या । यासौ धुरां गायत्री प्रथमा सैषा
15 गायत्र्योपास्थित । उभा वामिन्द्राग्नी इति । सूर्यो वा इन्द्रः । सो ऽग्निं नक्तं प्रविशति[9] । उभा वेवैनौ सहेष्टे । यासौ धुरां त्रिष्टुप्प्रथमा सैषा त्रिष्टुभोपास्थित । अयमिह प्रथमो धायीति । अग्निर्ह्येवास्मिंल्लोक इह प्रथमो ऽधीयते[10] ।
यासौ धुरां जगती प्रथमा सैषा जगत्योपास्थित । अयं ते योनिर्ऋत्विय इति ।

1. KS. दक्षसे. Cf. MānŚr. I, 6, 3, 16 ते हि बिभूवो महसे जीवसे च.
2. KS. त्वं साहस्रस्य राय ईशिषे. The Kap. mantra is not recorded in Vedic Concordance.
3. The ms. प्रजां मे नर्य पाहि तां मे गोपाय. See page 51, note 4.
4. The ms. दीदाय शतं हिमाः. KS. MS. I, 4, 2 add द्यायू. Cf. VS. II, 27 अस्थूरि णौ गार्हपत्यानि सन्तु शतं हिमाः.
5. The ms. अन्नं मे पुरीष्य पाहि तन्मे गोपाय. See note 3.
6. Thus KS. and Kap. ms., though Schroeder's Kap. copy had सत्सस्तोमस्.
7. The ms. सत्सस्तोमस्.
8. KS. प्रायुङ्क्त.
9. KS. प्राविशति is probably to be corrected. Cf. MS. p. 73, l. 12.
10. The ms. धीयते. Cf. MS. p. 73, l. 15.

इयं ह्यग्नेर्योनिरग्निः सूर्यस्य। यासौ धुरामनुष्टुप्प्रथमा सैषानुष्टुभोपास्थित ॥

दधिक्राव्णो अकारिषमिति। एषा वा अग्नेः पशव्या तनूर्या दधिक्रावती। तामेवास्य गृह्णाति। उपस्थायुका एनं पशवो भवन्ति। पशुर्वा अग्निः। यथा वै गौर्जीर्यति यथाश्व एवमेष आहितो जीर्यति। अग्न्याधेयस्यर्ग्भिरुपस्थेयः। तन्वो वा अस्यैताः। ताभिरेवैनं पुनर्णवं करोति। यच्छन्दोभिरुपतिष्ठते तैरेवैनं पुनर्णवं करोति। यथाग्र आहित एवमस्य भवति। उपतिष्ठते। योग एवास्यैषः। याच्ञ[1] एवास्यैषः। यथा श्रेयस आहृत्य नमस्यत्येवमेव तत् ॥ ३ ॥ Cf. IV, 8; KS. VII, 4; VI, 9; MS. I, 5, 5. 6. 1; TS. I, 5, 7. 5.

अग्नीषोमीयया पूर्वपक्ष उपातिष्ठेत। अग्नीषोमयोर्वा एतद्भागधेयं यत्पौर्णमासम्। ताभ्यामेवैनं परिददाति। तावेनमनुप्रे[2]क्रामन्तौ गोपायतः। ऐन्द्राग्न्यापरपक्षे। इन्द्राग्न्योर्वा एतद्भागधेयं यदमावस्या। ताभ्यामेवैनं परिददाति। तावेनमनु[2]प्रेक्रामन्तौ गोपायतः। अग्नीषोमावेवैनं पूर्वपक्षाय परिदत्तः। इन्द्राग्नी अपरपक्षाय। संप्रदायं ह वा एनं देवा अनुप्रेक्रामन्तो गोपायन्ति य एवं विद्वानग्निमुपतिष्ठते। कस्मै कमग्निरुपस्थीयत इत्याहुः। आशित्रं वा एतदग्नेर्यदग्निमुपातिष्ठते। अग्नय एवैतदशित्रं क्रियते। सायमुपतिष्ठते न प्रातः। तस्मात्सायमतिथये प्रत्येनसो नोत तथा प्रातः। यज्ञस्ययज्ञस्य वा आशीरस्ति यदग्निमुपतिष्ठते। अग्निहोत्रस्यैवैतामाशिषमाशास्ते। प्रजापतिः प्रजा असृजत। सो ऽग्निमेवाग्रे ऽसृजत। सो ऽस्मा एतद्भागधेयमपश्यद्[3]यदग्न्युपस्थानम्। यदग्निमुपतिष्ठते स्वेनैवैनं भागधेयेन समर्धयति। अग्निर्वै प्रयुक्तिमभ्यकामयत यथाश्वो रथकाम्यति। यदग्निमुपतिष्ठते प्रैवैनं युङ्क्ते। काममस्यर्ध्नोति। मनुष्यस्येन्नु[4] यः काममृध्नोति स वसीयान्भवति। ऋध्नोति वसीयान्भवति य एवं विद्वानग्निमुपतिष्ठते। उपेति संभवत्येवैतया। अग्निर्मूर्धेति रेत एवैतया प्रसिञ्चति। उभा वामिन्द्राग्नी इति प्राणापानावे-

1. Thus KS. The Kap. ms. यज्ञ. Kāṭhaka seems to have preserved the right reading. Cf. TS. sec. 4 याच्ञैवास्यैषा, where the word appears in its usual feminine form.
2. KS. अनप०.
3. KS. तस्मा एतद्भागधेयमकल्पयद्.
4. The ms. मनुष्यस्येदं.

वैतया दधाति । अयमिह प्रथमो धायीति गर्भमेवैतया दधाति । अस्य प्रत्नामनु द्युतमित्यूध एवैतया करोति । अयं ते योनिर्ऋत्विय इति जनयति चैवैतया वर्धयति च[1] । क्लृप्ता ह वा अस्य प्रजा जायते य एवं विद्वानग्निमुपतिष्ठते ॥ ४ ॥

Cf. IV, 8; KS. VII, 5; VI, 9; MS. I, 5, 6. 7. 1.

अहर्वै देवानामासीद्रात्र्यसुराणाम् । ते देवास्तमसोऽन्धसो मृत्यो
5 रात्र्या अभ्यासत्रमानादबिभयुः । ते छन्दोभिरग्निमन्वारभन्त गायत्र्या वसवस्त्रिष्टुभा रुद्रा जगत्यादित्याः । अम्भ स्थेति पशव इन्धाना इति मनुष्याः । ते देवास्तमसोऽन्धसो मृत्यो रात्र्याः पारमतरन् । यच्छन्दोभिरग्निमुपतिष्ठते तमस एवैषान्धसो मृत्यो रात्र्याः पारतीर्तिः । त्वमग्ने सूर्यवर्चा इत्यग्नय एवैतामाशिषमाशास्ते । सं मामायुषा वर्चसा सृजेत्यात्मन एवैतामाशिषमा-
10 शास्ते । सं त्वमग्ने सूर्यस्य ज्योतिषागथा इत्यग्नय एवैतामाशिषमाशास्ते । [[2]समृषीणी स्तुतेनेति । छन्दांसि वा ऋषीणी स्तुतम् । छन्दोभिरेवैनं समर्धयति । सं प्रियेण धाम्नेति । पशवो वा अग्नेः प्रियं धाम । पशुभिरेवैनं समर्धयति ।[2] ] समहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मीयेत्यात्मन एवैतामाशिषमाशास्ते । [[3]इन्धानास्त्वा शतं हिमा इति । एतद्ध वै दाशर्म
15 आरुणिमुवाचाग्निमादधिवांसमुद्दातः केनाग्निरुपस्थेय इति । तस्मै हैतदग्न्युपस्थानमुवाच । स होवाचानयोपस्थेय इन्धानास्त्वा शतं हिमा इति । यो वा एतयोपतिष्ठते पापीयानस्माद्भ्रातृव्यो भवति पापीयान्सपत्नः । सर्वमायुरेति । आ जीवितोरन्नमत्ति । आयुर्धा अग्नेऽस्यायुर्मे धेहीत्यात्मन एवैतामाशिषमाशास्ते । वयोधा अग्नेऽसि वयो मे धेहीत्यात्मन एवैतामाशिषमाशास्ते ।
20 तनूपा अग्नेऽसि तन्वं मे पाहीत्यात्मन एवैतामाशिषमाशास्ते ।[3] ] यन्मे अग्न ऊनं तन्वस्तन्म आपृणेति यदेवास्योनमात्मनस्तदापूरयते । अग्नेः समिदस्यभिशस्त्या मा पाहीति सर्वस्मादेवैनमेताः पान्तु । अग्ने यत्ते तपस्तेन तं प्रतितप यो

1. च is missing in the ms.

2-2. The ms. leaves out this passage.

3-3. The omission of this long passage is to be accounted for by the wandering of the copyist's eye from the one इत्यात्मन एवैतामाशिषमाशास्ते preceding this passage to the other at its end.

4. KS. adds after पाहि the opening words of the remaining two mantras of this series. As in the case of the

ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति तेनैवैनं प्रतितपति प्रतिशोचति प्रतितित्यक्ति[1] प्रत्यर्चति प्रतिहरति । एतद्ध वा आरुणिरुवाचैतेन चाहं[2] सर्वान्सपत्नान्सर्वान्भ्रातृव्यानभ्यभवमिति । श्रेयाञ्छ्रेयानात्मना [ भ[3]वति पापीयान्पापीयान्य एनं द्वेष्टि यो ऽस्मा अरातीयति य एवं विद्वानग्निमुपतिष्ठते । ......[4] ॥ ५ ॥ ] Cf. IV,8; KS. VII, 6; VI, 9; MS. I, 5, 8. 9. 2; TS. I, 5, 7. 5.

5

next series, so here also Kap. cites only the first formula.

1. The ms. ०तित्यस्वि. See note in the mantra section.
2. KS. एतेनाहं.
3. From here onwards there is a big lacuna in Kap. covering KS. VII, 7. 8 and a considerable portion of anuvāka 9. The text within brackets is, as usual, from the Kāṭhaka.
4. The missing portion of Kap. could not have been materially different from KS., but as there must have been verbal variations, we have preferred to give the Kāṭh. text in the footnotes :

**अग्ने रुचां पते नमस्ते रुचे मयि रुचं धेही**ति सर्वा एव शुचश्शमयित्वा रुचमात्मन्धत्ते । **चित्रावसो स्वस्ति ते पारमशीयार्वाग्वसो स्वस्ति ते पारमशीये**ति । रात्री वै चित्रावसुरहरर्वाग्वसुः । अहोरात्रयोरेवैषा परीतिः । न नक्तं न दिवार्तिमार्छति य एवं वेद । भङ्गे वा एते यज्ञस्याग्नी रात्र्यसा आदित्यो ऽहः । एते एव भङ्गे ईट्टे । ईश्वरो भूतं च भविष्यच्चाज्ञातोर्य एवं वेद ॥ ६ ॥ For references see above.

**अम्भस्स्थे**ति । अम्भो ह्येताः । **महस्स्थे**ति । महो ह्येताः । **ऊर्जस्स्थे**ति । ऊर्जो ह्येताः । **रायस्पोषस्स्थे**ति । रायस्पोषो ह्येताः । **रेवती रमध्व**मिति । पशवो वै रेवतीः । पशव एतद्यदन्तराग्नी । स्व एवैना गोष्ठे रमयामकः । **अस्मिन्योना** इति । एष ह्यासां योनिः । **अस्मिन्गोष्ठ** इति । एष ह्यासां गोष्ठः । **अयं वो बन्धुरितो मापगाते**ति । उपोपैवैनं पशवो यन्ति नापक्रामन्ति य एवं विद्वानग्निमुपतिष्ठते । एति वा एषो ऽस्माल्लोकाद्यो ऽग्निमुपतिष्ठते । **अम्भस्स्थे**ति । पशवो वा अम्भः पशवो ऽन्तरिक्षम् । पशुष्वेव प्रतितिष्ठति । बिभ्यति वै देवेभ्यः पशवः । देवानामेष एको यो ऽग्निमुपतिष्ठते । ते ऽस्मादीश्वराः प्रत्रसः । **संहितासि विश्वरूपे**ति । एतानि वै गोर्नामानि संहिता विश्वरूपा गौः । तान्येवास्य गृह्णात्यप्रत्रासाय । **संहितासि विश्वरूपे**ति । रूपेणरूपेण ह्येषा संहिता । **आ मोर्जा विशा गौपत्येना प्रजया रायस्पोषेणे**त्येतैर्ह्येषा विशन्त्याविशति । **मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुषेय**मिति साहस्रीमेव पुष्टिं न्यङ्क्ते । वत्सं पराहन्ति । वत्सनिकान्ताः पशवः । पशूनामनुक्शात्यै । अभिका एनं पशवो भवन्ति । सप्त वै बन्धुमतीरिष्टका अग्नौ चित्य उपधीयन्ते । तास्ता अमुष्मै लोकाय । सप्त ग्राम्याः । ता अत्रोपधेयाः । गौश्चाश्वश्चाविश्चाजा चाश्वतरश्च गर्दभश्च पुरुषः । यद्गां पराहन्ति ता एवैतद्( thus corrected; Schroeder एवैतद० ) पधत्ते । अथो गवैवैनं चिनुते ॥ ७ ॥ Cf. KS. VII, 1; Kap. V, 1; MS. I, 5, 9. 10. 2.

**संपश्यामि प्रजा अह**मिति सर्वा एव प्रजा अवरुन्द्धे । **इडप्रजसो मानवी**रिति । एडीर्हि प्रजा मानवीः । ये च वै ग्राम्याः पशवो ये च रण्यास्त उभये नक्तं संसृज्यन्ते । तस्मादपि ये ऽल्पाः पशवस्ते नक्तं बहव इव दृश्यन्ते । त

.....[ यत्पुत्रं ह्वयति ] प्रजामेवानुसंतनोति । नास्यात्मनः प्रजा पापीयसी भवति । मानुषमिव वा एतदुपावर्तते[1] यत्पुत्रं ह्वयति । अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदीति देवलोकं चैव मनुष्यलोकं च संतनोति । उभौ लोकावाजयति । निम्रदो ऽसीत्यव तं गृह्णाति यो ऽस्य पश्चाद्भ्रातृव्यः । अभि

ईश्वरा अमुं लोकमनुपदः । यदेतद्यजुर्वदत्यस्मिन्नेवैनांल्लोके यच्छति । अग्निर्वा एतस्यास्मिंल्लोके ऽग्रे जायते य आहिताग्निः । सो ऽस्य पशूननुपजायमानान्हिनस्ति । **उप त्वाग्ने दिवेदिव** इत्युपैवैनं जायमानेभ्यश्शमयति । **दोषावस्तर्धिया वयं नमो भरन्त एमसी**ति नमस्वत्योपास्थित । **राजन्तमध्वराणां गोपामृतस्य दीदिविम्** । **वर्धमानं स्वे दम** इति वृधद्वत्या । **स नः पितेव सूनवे ऽग्ने सूपायनो भव** । **सचस्वा नस्स्वस्तय** इति स्वस्तिमत्या । **अग्ने त्वं नो अन्तम** इति । एतद्ध वै दिवोदासो भैमसेनिरारुणिमुवाचाग्निमादधिवीसमुद्रातः केन गार्हपत्य उपस्थेय इति । तस्मै हैता उवाच । स होवाचाभिरुपस्थेयो **ऽग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्य** इति । एषा वा अग्नेः प्रिया तनूर्या वरूथ्या । प्रिययैवैनं तन्वोपास्थित । द्विपदाभिः । द्विपात्पुरुषः । गृहा गार्हपत्यः । गृहेष्वेव प्रतितिष्ठति । तिस्रः पूर्वाः । चतस्र एताः । तास्सप्त । सप्त ग्राम्याः पशवः । तानेवावरुन्द्धे । **ऊर्जा वः पश्याम्यूर्जा मा पश्यते**त्यूर्जमेव गृहेषु पशुष्वात्मन्धत्ते । अथो या अमूरिष्टका उपधत्ते ता एवैतत्कल्पयति । **इडास्स्थ मधुकृत** इति । इडा ह्येता मधुकृतः । **स्योना माविशतेमद्** इति स्योना ह्येता इरया सहाविशन्ति । **मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुषेय**मिति साहस्रीमेव पुष्टिं न्यङ्क्ते । वत्सं पराहन्ति । वत्सनिकान्ताः पशवः । पशूनामनुक्रात्यै । अभिका एनं पशवो भवन्ति । अथो

इष्टकामेवैतां गार्हपत्य उपाधत्ते ॥ ८ ॥ Cf. KS. VII, 1; Kap. V, 1; MS. I, 5, 10. 3.

**महि त्रीणामवो ऽस्त्वि**त्येष प्राजापत्यस्त्रिचः । प्राजापत्या इमाः प्रजाः । सर्वा एव प्रजा अवरुन्द्धे । प्रजापतिर्वा एताः । प्रजापतिमेवैतदुपेत्य सर्वमाप्त्वा सर्वमवरुध्य **सोमानं स्वरणं कृणुहि ब्रह्मणस्पत** इति ब्राह्मणस्पत्या । ब्रह्मवर्चसमेवैतयात्मन्धत्ते । वैश्वदेवीर्वा एताः । वैश्वदेवीरिमाः प्रजाः । ब्रह्मणो योनेः प्रजाः प्रजायन्ते । यदेषा ब्राह्मणस्पत्या ब्रह्मण एवैना योनेः प्रजनयति । एताभिर्वा अदितिः पुत्रानन्वैच्छत यत्सोममाहरन्नमुष्माल्लोकात्स्वस्ति पुनरागच्छन्सह सोमेन । यमेव कामं कामयते तं स्पृणोति । यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभिरन्वीक्षेत । स्वस्त्येव पुनरागच्छति ॥ **कदा चन स्तरीरसि** ॥ **परि ते दूडभो रथ** इति स्तोमस्यैवैतद्योगः । **कदा चन स्तरीरसी**ति । एतद्ध वा आरुणिरुवाच न तावद्रात्रीस्तर्यमुवस यावदेतामृचमश्रृणवमिति । न रात्रीस्तर्यं वसति य एवं वेद । गायत्रो वा अग्निर्गायत्रच्छन्दाः । तं छन्दसा व्यर्धयति यद्विच्छन्दोभिरुपतिष्ठते । यदेषा गायत्र्युत्तमा स्वेनैवैनं छन्दसा समर्धयति । सर्वं वा एष आप्त्वा सर्वमवरुध्य स्वर्गं लोकमेति यो ऽग्निमुपतिष्ठते । व्यस्य प्रजा छिद्यते । This together with the next sentence put in brackets above, brings the Kap. lacuna to an end.

1. KS. उपावर्तेत to be corrected.

तं भवति य एनेन सदृङ्[1] । अति तं क्रामति यो ऽस्मात्पूर्वः । पूषा मा प्रपथे पाविति । इयं वै पूषा प्रपथे । अन्तरिक्षं पशुपाः । द्यौरधिपतिः । इम एवैनं लोकाः पान्तु[2] । अग्निं समिन्धे ऽनुसंतत्यै । प्राची दिगग्निर्देवतेत्येता एव स देवता आर्च्छति[3] य एनमेताभ्यो दिग्भ्यो ऽभिदासति । ज्योतिषे तन्तव आशिषमाशास इत्याशिषमेवाशास्ते । यो ऽस्य प्रियः पुत्रः स्यात्तस्य नाम गृह्णीयात् । 5
तस्मिन्नेव ता आशिषो दधाति ॥ ८ ॥[4] Cf. V, 2; KS. VII, 9. 2; MS. I, 5, 11. 4.

अहर्वावासीन्न रात्री । सा यमी भ्रातरं मृतं नामृष्यत । तां यदपृच्छन्यमि कर्हि ते भ्रातामृतेत्यद्येत्येवाब्रवीत् । ते देवा अब्रुवन्नन्तर्दधामेदं रात्रीं करवामेति । ते रात्रीमकुर्वन् । ते रात्र्यां भूतायां पशून्नापश्यन् । सावेन्न वै पश्यन्तीति । सा न व्यौच्छदरेक्णस्यत्पशुषु[5] । तान्देवा इच्छन्तः 10
पल्यायन्त । तांश्छन्दोभिरन्वपश्यन् । तस्माच्छन्दोभिर्नक्तमाग्निरुपस्थेयः पशूनामनुख्यात्यै[6] । नास्मात्पशवस्तिरोभवन्ति । सावेदनु माख्यन्निति । सा व्यौच्छत् । ते देवा अब्रुवन्नमा वै नो वस्वभूदिति । सामावस्या । अमा ह वा अस्य वसु भवति विन्दते ऽन्यस्य वसु नास्यान्यो वसु विन्दते य एवं विद्वानग्निमुपतिष्ठते ॥ 15

देवा वा अह्वो रक्षांसि निरघ्नन् । तानि रात्रीं प्राविशन् । तां देवा न व्येतुमधृष्णुवन् । त इन्द्रमब्रुवंस्त्वं वै न ओजिष्ठो ऽसि त्वमिमां वीहीति । स्तुत मेत्यब्रवीन्नास्तुतो वीर्यं कर्तुमर्हामीति । ते ऽब्रुवन्नेष ते ऽग्निर्नेदिष्ठमेष त्वा स्तौत्विति[8] । तमग्निरस्तौत् । स स्तुतः सर्वा मृधः सर्वाणि रक्षांस्यतरत् ।

1. The ms. संदृङ्.
2. KS. पान्ति.
3. KS. ऋत्वा पराभवति.
4. The ms. ॥ ५ ॥
5. ? Thus KS. Perhaps the original was the denominative अरेक्णस्यत्. Our ms. सा म व्यौत्सदरेस्तस्य पशुषु. Cf. MS. p. 81, 1. 6 सा वै रात्रिः सृष्टा पशूनभिसममिलत्.
6. KS. अनुक्शात्यै. Kāṭh. uses both the roots क्शा and ख्या. The root क्शा is recognised by Kātyāyana (on Pāṇini II, 4, 54) and it is used in MS. to the entire exclusion of √ख्या. कश् and क्शा are Indo-Iranian roots. Cf. Avestic a–haxšta corresponding to Sanskrit a–saṃkhyāta.
7. Thus the ms. KS. वा अ०.
8. The ms. ते ऽग्निमब्रुवन्नेष ते नेदिष्ठमेष त्वा

इन्द्रो यजमानः । यदग्निमुपतिष्ठते सर्वा एव मृधः सर्वाणि रक्षांसि तरति । नास्य नक्तं रक्षांसीशते य एवं वेद । त्वष्टा वै भूत्वा प्रजापतिः प्रजा असृजत । त्वष्टा यजमानः । यद्वै वाचा वदति तद्भवति । यद्यदेवैतदुद्द्रवति[1] तत्तद्भवति तत्तत्सृजते ॥ ९ ॥[2] Cf. KS. VII, 10; MS. I, 5, 12.

इति कपिष्ठलकठसंहितायां पञ्चमो ऽध्यायः ॥

---

स्तौ[त्वि]ति.

1. Thus the ms. KS. त्वष्टा यजमानस्स यद्वाचावदत्तदभवद्यद्वै वाचा वदति तद्भवति यद्यदेव वाचा वदति suffers from meaningless repetition.

2. The ms. ॥ ६ ॥

[1]धनं मे शीस्य पाहीति । आहवनीयो वै शीस्यः । तस्मा एव धनं परिददाति प्रवत्स्यन् । सो ऽस्य धनं प्रवसतो गोपायति । मम नाम प्रथमं जातवेद इति तन्वावेवैतेन विपरिदधाते विप्रवसन्तौ । न ह प्रवसन्नार्तिमार्छति य एवं विद्वानग्निमुपस्थाय प्रवसति । प्रजां मे नर्य पाहीति । गार्हपत्यो वै नर्यः । तस्मा एव प्रजां परिददाति प्रवत्स्यन् । सो ऽस्य प्रजां प्रवसतो गोपायति । इमान्मे मित्रावरुणाविति । अहोरात्रे वै मित्रावरुणौ । इयं पूषा । तेभ्य एव गृहान् परिददाति प्रवत्स्यन् । ते[2] ऽस्य गृहान्प्रवसतो गोपायन्ति । अन्नं मे पुरीष्य पाहीति । ओदनपचनो वै पुरीष्यः । तस्मा एवान्नं परिददाति प्रवत्स्यन् । सो ऽस्यान्नं प्रवसतो गोपायति ॥

धनं मे शीस्याजुगुप[3] इत्याहवनीयं पुनरेत्यापान्योपतिष्ठते । आहवनीयो वै शीस्यः । तेनैव धनं गुप्तम् । तदपानेनात्मन्धत्ते । मम च नाम तव च जातवेद इति तन्वावेवैतेन व्याकरोत्यात्मनश्चाग्नेश्च यौ विप्रवसन्तौ विपरिदधाते । अग्ने

1. In this section the Kap. is very different from the Kāṭhaka, and presents new material. It gives the names of the fires addressed to in the second and third mantras. तदपानेनात्मन्धत्ते is of particular interest, for of all the known Saṃhitās the in-breathing (अपान) is nowhere else said to be the means of taking back to one's self all that one had previously entrusted to Agni and other gods. Ap. and Hir. Śrauta-sūtras developed upon it and made the out-breathing (प्राण) the means of entrusting. See ĀpŚr. VI, 25, 10 (अभिप्राण्य), VI, 26, 5 (अभ्यपान्य), HirŚr. VI, Paṭala 6 (अभिप्राण्य and अभ्यपान्य).

In this section the Kap. pratīkas are shorter than those of the Kāṭh.

2. The ms. सो.

3. The ms. पाहि for अजुगुपः. See note 4 on page 51.

4. व्याकरोति in the sense of 'he exchan-

सहस्राक्ष शतमूर्धञ्छततेज इति । सर्वेण वा एतौ तेजसा सर्वैः प्राणैः सर्वेणेन्द्रि-[1]येण व्यृध्येते विप्रवसन्तौ । तान्येवैतेनात्मंश्चाग्नौ च दधाति । प्रजां मे नर्याजुगुप[2] इति गार्हपत्यं पुनरेत्यापान्योपतिष्ठते । गार्हपत्यो वै नर्यः । तेनैव प्रजा गुप्ता । तामपानेनात्मन्धत्ते । अग्ने गृहपत इति शतं समा जीवतो नार्तिमार्छतः । अन्नं मे पुरीष्याजुगुप[2] इत्योदनपचनं पुनरेत्यापान्योपतिष्ठते । ओदनपचनो वै पुरीष्यः । तेनैवान्नं गुप्तम् । तदपानेनात्मन्धत्ते ॥ १ ॥ Cf. V, 2; KS. VII, 11. 3; MS. I, 5, 14.

यो[3] अश्वत्थः शमीगर्भ आरुरोह त्वय्यपि ।
तं ते हरामि यज्ञियैः केतुभिः सह ॥
मयि गृह्णाम्यहमग्रे अग्निं रायस्पोषेण सह वर्चसेह देवाः ।
मयि प्रजां मयि पुष्टिं दधामि मदेम शतहिमाः सुवीराः ॥
यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्यां[4] आविवेश ।
तमात्मनि परिगृह्णीमहे वयं मैषो अस्मानवहाय परागात् ॥
सं वः सृजामि हृदयं संसृष्टं मनो अस्तु वः ।
संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ।
सं या वः प्रियास्तन्वः संप्रिया हृदयानि वः ॥
आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥
यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥
यदन्तरिक्षस्य यद्दिवो अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

अग्ने गृहपते ऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं

ges back' is not known from any other source. It is the substitute of Kāṭh, p. 73, l. 3 तन्वं यथायथं कुरुते which itself is taken over from the last quarter of the verse मम च नाम ...... यथायथं नौ तन्वौ जातवेदः.

1. The ms. सर्वांद्रियेण.

2. The ms. पाहि for अजुगुपः. See note 4 on page 51.

3. In this and the following two sections Kap. has omitted several Kāṭh. verses and has arranged the rest in its own way.

4. The ms. मर्त्यं.

विन्द् यजमानाय पृथिव्या मूर्धन्सीद् यज्ञिये लोके यो। नो अग्ने निष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामि। ·········[1]यजमानाय पृथिव्या मूर्धन्सीद् यज्ञिये लोके। यो नो अग्ने निष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। 5
आस्मिन्हव्या जुहोतन ॥
उदग्ने तव तद्घृतादर्ची रोचत आहुतम्।
निंसानं जुह्वो मुखे[2] ॥
घृतेनाग्निः समिध्यते मधुप्रतीक आहुतः।
रोचमानो विभावसुः ॥ 10
यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम्।
ताभिः संभूय सगणः सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ २ ॥ Cf. KS. VII, 12. 13; MS. I, 6, 1.

या वाजिन्नग्नेः प्रिया तनूः पशुषु पवमाना तामावह। तया मा जिन्व। या वाजिन्नग्नेः प्रिया तनूरप्सु पावका तामावह। तया मा जिन्व। या वाजिन्नग्नेः प्रिया तनूः सूर्ये शुक्रा शुचिमती तामावह। तया मा जिन्व। 15 ओजसे बलाय त्वोद्यच्छे वृष्णे शुष्माय। सपत्नतूरसि वृत्रतूः ॥

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्ने[3] भवेह।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥

नाको ऽसि ब्रध्नो ऽसि प्रतिष्ठा संक्रमणः[4] ॥

सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन। 20

1. The ms. न पा न वा भा सु रा पा ग्न स ग्रा ज्ञा ग क पा टा हृ व न । पा प वा टा व प्प ॥ २ च्चा ला व हृ. It is hopelessly corrupt.

2. The ms. जुह्वो३मुखे. The verse is from ṚV. VIII, 43, 10 where the svarita followed by the udātta is marked as जुह्वो३ मुखे.

3. So also KS. p. 76, l. 1.

4. KS. p. 76, l. 15 नाको ऽसि ब्रध्नः प्रतिष्ठा संक्रमणं. Cf. ĀpŚr. V, 14, 13 नाको ऽसि ब्रध्नः प्रतिष्ठा संक्रमण इति, MānŚr. I, 5, 4, 10 नाको ऽसि ब्रध्नो ऽसि प्रतिष्ठा संक्रमणतममिति.

वैश्वानर्या समिधा दीदिही न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मिवत्या ज्योतिष्मत्या ॥

ये अग्नयो दिवो ये अन्तरिक्षाद्ये पृथिव्याः समाजग्मुरिषमूर्जं वसानाः ।
ते अस्मा अग्नये द्रविणानि दत्त्वा तृप्ताः प्रीताः पुनरस्तं परेत ॥

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः[1] ॥
ये अग्नयः समनसः सचेतस ओषधीष्वप्सु प्रविष्टाः ।
ते सम्राँजमभिसंयन्तु[2] सर्व ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥

या ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश याग्नौ या रथन्तरे या गायत्रे छन्दसि या त्रिवृति स्तोमे तां त एतदवरुन्धे । तस्यै स्वाहा । या ते अग्ने पावका तनूरन्तरिक्षमन्वाविवेश या वाते या वामदेव्ये या त्रैष्टुभे छन्दसि या पञ्चदशे स्तोमे तां त एतदवरुन्धे । तस्यै स्वाहा । या ते अग्ने शुचिस्तनूर्दिवमन्वाविवेश या सूर्ये या बृहति या जागते छन्दसि या सप्तदशे स्तोमे तां त एतदवरुन्धे । तस्यै स्वाहा ॥ ३ ॥ Cf. KS. VII, 13. 14; MS. I, 6, 2.

वातः प्राणः । तदयमात्मा । पुरीषमसि संप्रियः पशुभिः । यच्छा तोकाय तनयाय शं योः । घर्मः शिरः । तदयमग्निः । पुरीषमसि संप्रियः पशुभिः । स्वदितं नः पितुं पच । अर्कश्चक्षुः । तदसौ सूर्यः । पुरीषमसि संप्रियः पशुभिः । यत्ते शुक्र शुक्रं धाम शुक्रा तनूः शुक्रं ज्योतिरजस्रं यत्ते ऽनाधृष्टं नामानाधृष्यं[3] तेन त्वादधे ॥

द्यौर्मह्नासि भूमिर्भूम्ना । तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नपत्यायादधे ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥
अस्य प्राणादपानत्यन्तश्चरति रोचना ।

1. The ms. सुव्रताः. विरा०.
2. The ms. सव्रा०. Cf. MS. p. 89, 1. 7
3. The ms. नामाधृष्यं.

व्यख्यन्महिषो दिवम् ॥
त्रिंशद्धाम विराजति वाक्पतङ्गा अशिश्रयुः ।
प्रति वस्तोरह द्युभिः ॥ ४ ॥ Cf. KS. VII, 13. 14; MS. I, 6, 1. 2.

अदितिर्वै प्रजाकामौदनमपचत् । तस्योच्छिष्टमाश्नात् । सा गर्भमधत्त । तत आदित्या अजायन्त । य एष ओदनः पच्यत आरम्भणमेवैतत् । आक्रमणमेव । प्रादेशमात्रीः समिधो भवन्ति । एतावान्ह्यात्मा प्रजापतिना संमितः । अग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छत । एषास्य घृत्या तनूर्यद्घृतम् । यद्घृतेन समिधो ऽनक्ति ताभ्यामेवैनं तनूभ्यां संगमयति । निर्मार्गस्याद-धाति । अपगूर्त्या वै वीर्यं क्रियते । यन्निर्मार्गस्यादधात्यपगूर्त्या एव । संवत्सरो वै प्रजननमग्निः प्रजनयिता[1] । तत्प्रजननं यत्पुरा संवत्सरादग्नौ[2] समिध आदधाति । प्रजननादेवैनं प्रजनयिता[3] प्रजनयति । अभक्तर्तुर्वै पुरुषः । न हि तद्वेद यमृतुमभिजायते यन्नक्षत्रम् । यत्समिध आदधाति य एवास्यर्तुर्यन्नक्षत्रं तदाप्नोति । य एष ओदनः पच्यते योनिरेवैष क्रियते । यत्समिध आधीयन्ते रेत एवैतद्धीयते । संवत्सरे वै[4] रेतो हितं प्रजायते । यत्संवत्सरे पर्येते ऽग्निमाधत्ते प्रजातमेवैनमाधत्ते । द्वादशसु रात्रीषु पुराधेयाः । ता हि संवत्सरस्य प्रतिमा । अथो तिसृष्वथो द्वयोरथो पूर्वेद्युराधेयास्त एवाग्निमादधानेन । आदित्या वा इत उत्तमा अमुं लोकमायन् । ते पथिरक्षयः । त इयक्षमाणं प्रतिनुदन्ते । उच्छेषणभागा वा आदित्याः । यदुच्छिष्टेन[5] समिधो ऽनक्ति तेभ्य एव प्रावोचत । तेभ्य एव प्रोच्य स्वर्गं लोकमारोहति ॥ ५ ॥ Cf. KS. VII, 15.

दिशो वै नाकल्पन्त न प्राज्ञायन्त[6] । तत एतामग्नये प्राचीं दिशमरोचयन्यत्कृत्तिकाः । यत्कृत्तिकास्वग्निमाधत्ते प्राच्यामेवैनं दिश्याधत्ते । एष

1. Thus KS. Our ms. प्रजनयति.
2. Thus KS. Our ms. प्रजननं यत्पुरा संवत्सराच्चाग्नौ ( Cf. a Kāṭh. ms. संवत्सर ऋचाग्नौ ). Cf. GopBr. I, 2, 15.
3. The ms. प्रजनयति ताः.
4. The ms. omits वै.
5. The ms. उच्छिष्टस्य.
6. KS. प्राजायन्त is to be corrected. Kap. gives better sense: the quarters were not in order; they were not discerned. This accords with the next sentence.

वावैकः प्राङवस्यति य आहिताग्निः । प्रत्यञ्चो ऽन्ये । आग्नेयमेतन्नक्षत्रं
यत्कृत्तिकाः[1] । यत्कृत्तिकास्वग्निमाधत्ते स्व एवैनं नक्षत्र आधत्ते । प्रजापतेर्वा
एतच्छिरो यत्कृत्तिकाः । यत्कृत्तिकास्वाग्निमाधत्ते शीर्षण्यो मुख्यो भवति ।
सप्त वै कृत्तिकाः । सप्त शीर्षण्याः प्राणाः । प्राणा इन्द्रियाणि । प्राणा-
5 नेवेन्द्रियाण्याप्नोति[2] । [ रोहिण्यामाधेयः[3] । ] रोहिण्यां वा एतं देवा आद-
धत । तया रोहमरोहयन्[4] । तद्रोहिण्या रोहिणीत्वम् । रोहिण्यां वा एतं
प्रजापतिराधत्त । तया रोहमरोहयत्[5] । तद्रोहिण्या रोहिणीत्वम् । एष वै मनुष्यस्य
स्वर्गो लोको यदस्मिंल्लोके वसीयान्भवति । ऋद्ध्या एव रोहिण्यामाधेयः ॥

कालकाञ्जा वै नामासुरा आसन् । त इष्टका अचिन्वत । तदिन्द्र
10 इष्टकामप्युपाधत्त । तेषां मिथुनौ दिवमाक्रमेताम् । ततस्तामावृहत्[6] । ते
ऽवाकीर्यन्त । तावेतौ दिव्यौ श्वानौ । यो ऽयवृह्यत स एष ऊर्णवाभिः
स्वैरान्त्रैः संतितिंसति[7] । ओजो वावैषां तद्वीर्यमाधत्त । ओज एव वीर्यं
भ्रातृव्यस्याधत्ते यच्चित्रायामग्निमाधत्ते । तदेतदैन्द्रं नक्षत्रमभिभूतिमत् ।
पूर्वासु फल्गुणीष्वादधीत यः कामयेत भगी स्यामिति । भगस्य वा
15 एतन्नक्षत्रम् । भगी भवति । उत्तरास्वादधीत यः कामयेत दानकामा मे प्रजाः
स्युरिति । अर्यम्णो वा एतन्नक्षत्रम् । एषो ऽर्यमा यो ददाति । दानमिमाः
प्रजा उपजीवन्ति । दानकामा अस्मै भवन्ति । राजन्यस्यादध्यात् । राजन्यो
हि दानमुपजीवति । वसन्ते[8] ब्राह्मणेनाधेयः । वसन्तो वै ब्राह्मणस्यर्तुः ।
स्व एवैनमृतावाधत्ते । तेजो ब्रह्मवर्चसमुपाधत्ते । ग्रीष्मे राजन्येनाधेयः ।
20 ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधत्ते । ओजो वीर्यमुपाधत्ते । शरदि
वैश्येनाधेयः । शरद्वै वैश्यस्यर्तुः । स्व एवैनमृतावाधत्ते । ऊर्जं पशूनुपाधत्ते ।
सोमेन यजा इति वा अग्निमाधत्ते । यस्मिन्नेव कस्मिंश्चर्तावादधीत सोमेन

1. यत्कृत्तिकाः has fallen out in our ms.
2. प्राणानेवेन्द्रियाणि has fallen out in our ms. Further on KS. adds: पुष्टिमावद्भूयिष्ठमेकं नक्षत्रं पुष्टिमेव प्रजायाः पशूनां गच्छति.
3. रोहिण्यामाधेयः is supplied from KS.
4. KS. अरोहन्. Cf. MS. p. 100, l. 20; TB. sec. 2.
5. KS. अरोहत्.
6. The ms. ०वृ०.
7. The ms. सयिरात्रींसिंचितांसति.
8. KS. वसन्ता.

यत्त्यमाणः[1]। एतद्ध्यवर्धयद्यः[2] सोमेन यजते । फल्गुनीपूर्णमास[3] आधेयः । एतद्वा ऋतूनां मुखम् । ऋतुमुख एवैनमाधत्ते । [शिशिर आधेयः । शिशिरं वा अग्नेर्जन्म । प्रजातमेवैनमाधत्ते ।[4]] सर्वासु दिक्ष्वृध्नुवानीति[5] वा अग्निमाधत्ते । सर्वासु दिक्ष्वग्निः शिशिरे । सर्वास्वेव दिक्ष्वृध्नोति यः शिशिरे ऽग्निमाधत्ते । पूर्णमासे वामावस्यायां वादधीत । एतद्वै पुण्याहम् । पुण्याह एवैनमाधत्ते । 5
तस्मादिष्टया वाग्रायणेन वा पशुना वा सोमेन वा पूर्णमासे[6] वामावस्यायां वा यजेत । एष वै[7] यज्ञः । यज्ञमेवं प्रति यज्ञमालभते ॥ ६ ॥ Cf. KS. VIII, 1; MS. I, 6, 9; TB. I, 1, 2.

यद्वा इमे[8] व्यैतां यदमुष्या यज्ञियं[9] तदिमामभ्यसृज्यं[10]तोषाः । यदूषा भवन्त्यनयोरेवैनं यज्ञिय आधत्ते । प्राजापत्या वा एते[11] । श्वःश्वो भूयीसो भवन्ति । प्रजननायैवैते । पशूनां वा एतत्प्रियं धाम[12] । यदूषा भवन्ति 10
पशूनामेव प्रियं धामोपाप्नोति । अलेलेद्वा इयं पृथिवी । साबिभेदग्निर्मातिधक्ष्यतीति । अबिभेदग्निर्हरो मे विनेक्ष्यं[13]तीति । आर्द्रेव हीयमासीत् । तां देवाः शर्कराभिरदृंहन् । तेजो ऽग्नावदधुः[14]। यच्छर्करा भवन्तीमामेव दृंहति ।

1. So KS. The ms. यत्त्वमाणा.
2. ? The ms. एतद्धेः वर्द्धन्यः. KS. omits यः.
3. The ms. °पौर्ण°.
4. The three sentences enclosed within brackets have fallen out in Kap. ms.
5. The ms. °ध्नु°.
6. The ms. पौर्ण°.
7. The ms. यजेतोषधी for यजेत । एष वै.
8. KS. adds एतत्.
9. Schroeder prints अमुष्यायाज्ञियम्, which can only be understood as अमुष्य । अयज्ञियम्. Cf. MS. p. 91, l. 2 एतावद्वा अमुष्या इह यज्ञियं यदूषाः; III, 2, 3: p. 18, ll. 15-17 इमे वै सहास्ताम् । ते वियती अब्रूतामस्तु नौ प्रियं धाम सहेति । आपो वा अस्या यज्ञिया मेध्याः । ता अमूः । ऊषा अमुष्या यज्ञिया मेध्याः । त इमे; TS. V, 2, 3, 3 द्यावापृथिवी सहास्ताम् । ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत्तदस्यामदधात् । त ऊषा अभवन्. Thus it is clear that Schroeder did not understand the text.
10. The ms. °ज°.
11. KS. ऊषाः.
12. KS. adds यदूषाः.
13. The three copies of Kap. ms. have three different readings: Lahore copy विनक्षति, Utrecht copy विनेक्ष्यति, Göttingen copy विनेक्षति. KS. has विनेष्यति.
14. The ms. °ग्नावेदधुः which could stand for °ग्नावे[वा]दधुः.

तेजो ऽग्नौ दधाति । अभिमृता वा इयं वृत्रेण । वम्रियस्त्वै[1] तद्विदुर्यत्रास्या
जीवं याज्ञियम् । यद्वल्मीकवपा भवत्य[2]स्या एवैनं जीवे याज्ञिय आधत्ते ।
आपो वा इदमासन् । सलिलमेव स प्रजापतिर्वराहो भूत्वोपन्यमज्जत् ।
तस्य यावन्मुखमासीत्तावतीं मृदमुदहरत् । सेयमभवत् । यद्वराहविहतं भव-
5 त्यस्यामेवैनं प्रत्यक्षमाधत्ते । वराहो वा अस्यामन्नं पश्यति । तस्मा इयं
विजिहीते । यद्वराहविहतं भवति तदेवान्नमवरुन्द्धे । यत्तदादत्त तददि-
तिर्यदप्रथत तत्पृथिवी यदभवत्तद्भूमिः । यद्वराहविहतं भवति प्रथत एव
प्रजया पशुभिः[3] । नाना वै पशूनामन्नान्यन्यद्गोरन्नमन्यदश्वस्यान्यदवेरन्य-
दजाया अन्यत्पुरुषस्य । आपो ऽन्नम् । यदप उपसृजति यावदेवान्नं तदवरुन्द्धे ।
10 [4]पञ्चैते संभाराः । पञ्च वै पुरुषे वीर्याणि । करोत्यनया वीर्यं करोत्यनया
करोत्यनेन । यावदेव वीर्यं तदाप्नोति । पञ्चैते संभाराः । पाङ्क्तो यज्ञः ।
यज्ञमेवावरुन्द्धे[4] । न वा ऋत ऊर्जो ऽन्नं धिनोति । ऊर्गुदुम्बरः । यदौदुम्बराणि
भवन्त्यन्न एवोर्जं दधाति । शमीमयानि भवन्ति मिथुनत्वाय । अग्निं वै सृष्टं
प्रजापतिस्तं शम्याग्रे समैन्द्ध[5] । यच्छमीमयानि भवन्ति स्वयैवैनं समिधा
15 समिन्द्धे । अश्वो वै भूत्वाग्निर्देवेभ्यो ऽपाक्रामत् । स यत्रातिष्ठत्तदश्वत्थः
समभवत् । तदश्वत्थस्याश्वत्थत्वम् । यदाश्वत्थानि भवन्ति यदेवास्य तत्र
न्यक्तं तत्तैः संभरति । अग्निर्वै मनुष्यैर्देवेभ्यो ऽपाक्रामत् । तं देवा अमन्यन्तायं
वावेदं भविष्यतीति । तस्य मरुत स्तनयित्नुना हृदयमाच्छिन्दन्[6] । सा दिव्या-

1. The Kāṭh. and Kap. वम्रियस् is not known from any other source. MS. p. 90, ll. 12. 13 replaces it by वल्मीक (derived from वल्म, a dialectical variation for वम्र). The New Indo-Aryan बम्बी and बांबी are most probably developments of वम्रियस्. For the insertion of b in between m and r see NIA आंब, अम्बी > Skt. आम्र, NIA तांबा > Skt. ताम्र. The change of इय to ई is evidenced even today in loan-words: इन्द्रिय is pronounced इन्द्री.
2. KS. भवन्त्य॰ to be corrected.
3. In Prof. Caland's copy the sentence is wrongly placed after तदाप्नोति in line 11. My Lahore copy omits it altogether.
4–4. Kap. ms. puts the passage after अन्न एवोर्जं दधाति in line 13.
5. The ms. शमयत्.
6. The ms. आच्छृंदं.

शनिरभवत् । यद्वृक्षस्याशनिहतस्य भवन्ति[1] यदेवास्य तत्र न्यक्तं तत्तैः संभरति । पर्णमयानि पञ्चथानि[2] भवन्ति पाङ्क्तत्वाय ॥ ७ ॥ Cf. KS. VIII, 2; MS. I, 6, 3; TB. I, 1, 3.

अष्टसु प्रक्रामेषु[3] ब्राह्मणेनाधेयः । अष्टाक्षरा गायत्री । गायत्रच्छन्दा ब्राह्मणः । स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते[4] । यथा पिता पुत्रं जिन्वत्येवमेनं[5] स्वं छन्दो जिन्वति । एकादशसु प्रक्रामेषु[6] राजन्येनाधेयः । एकादशाक्षरा त्रिष्टुप् । त्रिष्टुप्छन्दा राजन्यः । स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते[7] । यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो जिन्वति । [द्वादशसु प्रक्रामेषु[6] वैश्येनाधेयः । द्वादशाक्षरा जगती । जगच्छन्दा वैश्यः । स्वस्यैवैनं छन्दसः प्रात्येनस्य आधत्ते । यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो जिन्वति[8] । ] अपरिमितमवरुणधा इति[9] वा अग्निमाधत्ते । अपरिमित आधेयो ऽपरिमितस्यावरुद्ध्यै । यावति चक्षुषा मन्येत तावत्यादधीत । सत्यं वै चक्षुः । सत्य एवैनमाधत्ते । पूर्वाह्ण आधेयः । एतद्वै पुण्याहम् । पुण्याह एवैनमाधत्ते । व्युष्टायां पुरा सूर्यस्योदेतोराधेयः । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । ताः प्राजायन्त । प्रजननायैवमाधेयः । आग्नेयी वै रात्र्यैन्द्रमहः । यदुदिते सूर्य आदधीताग्नेयाद्वर्णादियात् । यदनुदित ऐन्द्रात् । अनुदिते ऽपर आधेय उदिते पूर्वः । उभावेवेन्द्राग्न्योर्वर्णावाप्नोति । असुर्या वै रात्री वर्णेन शुक्रियमहः । शुक्रिय आधत्ते यदु[10]दिते सूर्य आधत्ते । नक्तं वा[11] अनुदितेन दिवोदितेन । दिवाधत्ते यदुदिते सूर्य आधत्ते ।

1. Schroeder's भवति to be corrected.
2. The ms. पंचथानि.
3. KS. अष्टासु प्रक्रमेषु. Kap. uses both प्रक्रम and प्रकाम.
4. The meaning is not clear. The emendation is tentative. The ms. reads स्वोदैनं छन्दसः पांक्तेनप्याधत्ते. Cf. further on, and TB. I, 1, 9, 6. 7 स्वस्य छन्दसः प्रत्ययनस्त्वाय. प्रत्ययनस् in the same word as प्रत्यनेस् For the interchange of e and aya see Wackernagel's Altindische Grammatik, vol. I, p. 54, l. 4 seq.—MS. क्षेण "wohnlich": VS. TS. क्षयण, etc.
5. KS. °मेवैनं.
6. KS. प्रक्रमेषु.
7. The ms. स्वेवैनं छन्दसः प्राङ्नेनस्याधत्ते.
8. The passage within brackets is missing in Kap. ms.
9. The ms. °मवरुणधायेति.
10. KS. यः for यद्.
11. The ms. omits वा.

न वै सु विदुरिवं मनुष्या नक्षत्रम्। मीमींसन्त इवं ह्युदितेन वाव पुण्याहम्। पुण्याह आधत्ते यदुदिते सूर्य आधत्ते ॥

सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि।
सप्त होत्रा अनु विद्वान्सप्त योर्नीरापृणस्व घृतेन ॥[6]

5 इति यावतीर्वा अग्नेस्तन्वः। यो वा अस्य ता आदधानो वितर्षयति[7] वि ह तृष्यति। एतावतीर्वा अग्नेस्तन्वः षोढा सप्तसप्त। ता एवास्य प्रीणाति। न वितृष्यति। पूर्णया स्रुचा जुहोति। पूर्णः प्रजापतिः। प्रजापतिमेवाप्नोति ॥ ८ ॥ Cf. KS. VIII, 3; MS. I, 6, 10; TB. I, 1, 4.

अङ्गिरसां त्वा देवानां व्रतेनादध इति ब्राह्मणेनाधेयः। ये वै देवा-
10 नामङ्गिरसस्ते ब्राह्मणस्य प्रत्येनसो ऽग्निर्वायुर्वाग्बृहस्पतिः। ततोबन्धुरस्य यज्ञस्ततआयर्नः। यतोबन्धुरेवास्य यज्ञो यतआयर्नः। तत एनं प्रतीच्छति। इंद्रस्य त्वा मरुत्वतो व्रतेनादध इति राजन्येनाधेयः। ये वै देवानां राजानस्ते राजन्यस्य प्रत्येनस इन्द्रो वरुणो धाता त्वष्टा। ततोबन्धुरस्य यज्ञस्ततआयर्नः। यतोबन्धुरेवास्य यज्ञो यतआयर्नः। तत एनं
15 प्रतीच्छति। मनोस्त्वा ग्रामण्यो व्रतेनादध इति वैश्येनाधेयः। मरुतो वै देवानां विशः। ते वैश्यस्य प्रत्येनसः। ततोबन्धुरस्य यज्ञस्ततआयर्नः। यतोबन्धुरेवास्य यज्ञो यतआयर्नः। तत एनं प्रतीच्छति ॥

इडा वै मनावासीत्। सासुरानग्निमादधानानगच्छत्। त आहवनीयमग्र आदधताथ गार्हपत्यमथौदनपचनम्। तानब्रवीदाप्त्वा श्रियं प्रत्यवारुत्स-
20 न्पुण्या भविष्यन्ति परा [तु] भविष्यन्तीति। सा देवानग्निमादधानानगच्छत्।

1. The ms. विद्रवै.
2. The ms. मीमांसतैव.
3. KS. यः for यद्.
4. The ms. सप्त ऋषयः.
5. KS. योनीरा°.
6. The mantra occurs here for the first time and hence it is given in full. But in Kāṭh. it is read sakalapāṭhena in all the four anuvākas in which it occurs: VII, 14, here (VIII, 3) and XVIII, 4; XXXIV, 19.
7. Thus KS. The ms. वितृषति.
8. Schroeder does not consider ततः and यतः as compounded with the following words बन्धुः and आयनः. He is apparently mistaken.
9. The ms. °त्त°.
10. The ms. अथाहवनीयं. Cf. the next note.

त ओदनपचनमग्र आदधताथ गार्हपत्यमथाहवनीयम्[1]। तानब्रवीदापङ्क्त्रियं[2] वीमं लोकमच्छिन्दन्पुण्या भविष्यन्ति प्रजास्त्वेषां[3] न भविष्यन्तीति । सैडैव मनोरादधात् । साब्रवीत्तथा वै[4] ते ऽग्निमाधास्यामि यथा मनुष्या देवानुप प्रजनिष्यन्त इति । सा गार्हपत्यमग्र आदधादथौदनपचनमथाहवनीयमनयोर्लोकयोर्व्यवगृहीत्यै । ततो मनुष्या देवानुप प्राजायन्त । प्रजननायैवमाधेयः । अथो अनयोरेव लोकयोर्व्यवगृहीत्यै ॥

प्रजापतिर्वै यदग्रे व्याहरत्स सत्यमेव व्याहरत् । एतद्वाव स त्रिर्व्याहरद्भूर्भुवः स्वरिति । एतद्वै वाचः सत्यम् । यदेव वाचः सत्यं तेनाधत्ते । भूष्णु[5] वै सत्यम् । य एवं विद्वानेतेनाधत्ते भवत्येव । अयं वा अपरो भूरसौ पूर्वो भुवः । भूर्भुव इत्यपर आधेयः सत्यस्याननुगत्यै । भूर्भुवः स्वरिति पूर्वः । तत्पुरः सर्वमाप्यते । वाग्वै देवतां निरवदत । निरुदितदेवतां[6] हि वै वाक् । अथ तत्सर्वं न सत्यं यद्वाचा शपते यत्प्राशूर्भवति । यां वै तां वाग्देवतां निरवदत्तैषां[7] वाव सा यदेता व्याहृतयः । एतद्वै वाचः सदेवम् । यदेव वाचः सदेवं तेनाधत्ते । अयं वा अपरो भूरसौ पूर्वो भुवः । भूर्भुव इत्यपर आधेयः । उभावेवैनौ सहाधत्ते । एष ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधिसृज्यते । यद्द्वितीयं ज्योतिस्तदेव तत् । भूर्भुवः स्वरिति पूर्व आधेयः । उभावेवैनौ सहाधत्ते । एष ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधि प्रह्रियते । अयं वावाग्निर्यो ऽयमन्तराग्निः[8] । यो ऽसौ पूर्वो ऽसावेवैष आदित्यो यो ऽसावमुष्मादधि प्रह्रियते । यत्तृतीयं ज्योतिस्तदेव तेनाप्यते । असौ वावैष आदित्यः प्रत्यङ्ङाधीयते । तस्मादेष सर्वाः प्रजाः प्रत्यङ् । अग्निना वै देवा अन्नमदन्ति । प्रत्यग्वा अन्नमद्यते । यत्प्रत्यङ्ङाधीयते ऽन्नाद्याय । प्राचो वै देवान्प्रजापतिरसृजतापाचो ऽसुरान् । सो ऽसुरान्ब्रह्मणापानुदत । अग्निर्ब्रह्म । यत्प्रत्यङ्ङाधीयते भ्रातृव्यस्यापनुत्त्यै । इममर्धमाग्निना परियन्तीममर्धमुपच-

1. The ms. अथोदनपचनं.
2. Thus Schroeder. The ms. ०पं श्रियं.
3. The ms. प्रजास्तेषां. KS. प्रजा तेषां and accordingly न भविष्यतीति further on.
4. KS. omits वै.
5. The ms. पूष्णो.
6. The ms. निर्ऋतिदेवता.
7. The ms. ०वदत्यैषा.
8. KS. ०राग्नि.

रन्ति । देवानामेवार्धं परियन्ति देवानामर्धमुपचरन्ति । इमां दिशमभ्यावृत्य जुहोति । एतस्यां हि देवा दिशि । यस्यामेव देवा दिशि तां दिशमभ्यावृत्य जुहोति ॥ ९ ॥ Cf. KS. VIII, 4; MS. I, 6, 5. 13; TB. I, 1, 4. 5.

इति कपिष्ठलकठसंहितायां षष्ठो ऽध्यायः ॥

---

अग्निर्वै प्राङ्ङुदेतुं नोपाकामयत[1] । तमश्वेनोदवहन् । यत्पूर्वमुदवहंस्तत्पूर्ववाहः पूर्ववाट्त्वम् । अग्निर्वै प्रजापतिः । तस्याश्वश्चक्षुः । यदश्वं पुरो नयन्ति स्वमेव तच्चक्षुः पश्यन्ननूदेति[2] । स्तोमपुरोगा वै देवा एभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । स्तोमादश्वः संभूतः । यदश्वं पुरो नयन्ति स्तोमपुरोगा एवैभ्यो लोकेभ्यो[3] भ्रातृव्यं प्रणुदते । अग्निं वै जातं रक्षांस्यधूर्वन् । तान्येनमभिसमलभन्त[4] । तान्यश्वेनापाहत । यदश्वं पुरो नयन्ति रक्षसामपहत्यै । अश्वो वै भूत्वा यज्ञो मनुष्यानत्यक्रामत् । तमेतमतिक्रामन्तं[5] मन्यन्ते । यदश्वमभ्यावर्तयन्ति यज्ञमेवैतद्यजमानमभ्यावर्तयन्ति । अग्निर्वा अश्वं प्राविशत् । कृष्णो भूत्वा सोऽत्रागच्छद्यत्रैष मृगशफः[6] । तस्मादाक्रम्यः । यदश्वमाक्रमयति तमेवावरुन्द्धे । वास्तु वा एतत् । अथो अन्तर्हितमिव । तस्मान्नाक्रम्यम्[7] । इन्द्रो वै यतीन्सालावृकेयेभ्यः[8] प्रायच्छत् । तेषामद्यमानानां स्यूमरश्मि[9]र्ऋषिरश्वं प्राविशत् । तस्मादश्वः स्वं शकृदुपजिघ्रति कच्चिद्[10]ऋषिं

1. KS. नाकामयत. Kāṭh. does not use an upasarga with √ कम् when it governs an infinitive. Cf. Kāṭh. VIII, 9: p. 92, l. 15 अग्निर्वा इमं लोकं नोपाकामयत.

2. Thus KS. The ms. तच्चक्षुरन् दयति.

3. The ms. अस्माल्लोकाद्.

4. The ms. ०मभिशमलपंत.

5. KS. ०द०.

6. KS. adds इव.

7. Thus the ms. KS. ०क्रम्यः.

8. The ms. ०वृकेभ्यः.

9. The ms. सौमि०.

10. KS. कश्चिद् for कच्चिद्. It is impossible to construe कश्चिद् with निरास्थाम् in the first person. कच्चिद् is the correct reading: Agni verily entered the horse......(and) the ṛṣi Syūma-raśmi (also) entered the horse. Therefore, the horse smells his dung (thinking) have I not thrown out the ṛṣi and the agni ?

चाग्निं च न निरास्थामिति । अग्निं वै विभाजं नाशक्नुवन् । तमश्वेन व्यभजन् । यदश्वं पुरो नयन्त्यग्नेरेव विभक्त्यै । यौ वाव तावृषिश्चाग्निश्च ते एवैनं तद्देवते[1] विभजतः । अश्वो देयः । प्राजापत्यो वा अश्वः । यदश्वं ददाति सर्वा एवास्य[2] देवता अभीष्टाः प्रीता भवन्ति । परमा वा एषा दक्षिणा यदश्वः । यदश्वं ददाति पर्याप्त्यै[3] । वही देयः । वहिनो वै पशवो भुञ्जन्ति । यज्ञो ऽग्नेर्वही[4] । भुनक्त्येनमग्निराहितः । हिरण्यं देयं सतेजस्त्वाय । शतमानं वीरं वा एष जनयति यो ऽग्निमाधत्ते । शतदायो वीरः । [5]त्रिंशन्माने पूर्वयोर्हविषोर्देये । चत्वारिंशन्मानमुत्तमे ऽभिक्रान्त्यै । अभिक्रान्तेन हि यज्ञस्यर्ध्नोति । आत्मा वै हविः । पवित्रं हिरण्यम् । सर्वेष्वेवैनं हविःषु पुनाति । अग्निर्वै वरुणानीरभ्यकामयत । तस्य तेजः परापतत् । तद्धिरण्यमभवत् । यद्धिरण्यमुपास्यति स्वेनैवैनं तेजसा समर्धयति । नोपास्य पुनरादधीत[6] । ग्रसितमस्य निष्खिदति घोधुको भवति । अग्निं वै वरुणानीरभ्यकामयन्त । आपो वरुणानीः । ताः समभवन्[7] । यदग्ने रेतो ऽसिच्यत तद्धरितमभवत् । यदपां तद्रजतम् । तस्माद्धरितरजताभ्यामुभयाहिरण्यः । यद्गर्भस्य शमलं तद्दुर्वर्णम् । तस्माद्ब्राह्मणेन दुर्वर्णं न भर्तव्यम् । शमलं हि तत् । यद्धिरण्यमुपास्यति स्वेनैवैनं रेतसा समर्धयति ॥ १ ॥ Cf. KS. VIII, 5; MS. I, 6, 4.

सह वा इमा अग्नेस्तन्वः । इयमोदनपचनो ऽन्तरिक्षं गार्हपत्यो द्यौराहवनीयः । यो वा अस्यैता अव्याकृत्याधत्ते[9] न पाप्मना व्यावर्तते घातुको[10] ऽस्य रुद्रः पशून्भवति । ता[11] एवैता[12] व्याकृत्य[13] यथायोनि प्रतिष्ठाप्याधत्ते वि पाप्मना वर्तते ऽघातुको[14] रुद्रः पशून्भवति । द्यौर्महासीति

1. The ms. तयैवैनं तद्देवते.
2. KS. adds तेन.
3. The ms. पर्याप्ती.
4. The ms. ॰र्वहो.
5. The ms. ति॰.
6. The ms. ॰ददीत.
7. KS. reverses the order : तास्समभवदापो वरुणानीः.
8. यद् is to be supplied in KS.
9. The ms. ॰ताव्याक्लृप्याधत्ते.
10. KS. घातको to be corrected.
11. Before ता KS. inserts यदेतैरुपतिष्ठते.
12. KS. एवास्यैत॰.
13. The ms. ॰व्याक्लृप्त्य.
14. KS. ऽघातको ऽस्य.

महानग्निमाधाय भवति । भूमिर्भूम्नेति श्वःश्वो भूयान्[1]भवति । तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नपत्यायादध इत्यन्नादमेवैनमन्नाद्यायान्नपत्यायाधत्ते[2] । अत्त्यन्नं य एवं विद्वानग्निमाधत्ते । आयं गौः पृश्निरक्रमीदित्येताः सर्पराज्ञ्या ऋचः । इयं वै सर्पराज्ञी । अन्नं सार्पराज्ञम् । अन्नाद्यायाग्निमाधत्ते । अत्त्यन्नं य एवं विद्वानग्निमाधत्ते । वसन्तो वा इमाः प्रजा उपरुणद्धि ग्रीष्माय । ग्रीष्मो वर्षाभ्यः । वर्षाः शरदे । शरद्धेमन्ताय । हेमन्तः शिशिराय । शिशिरमग्नये । अग्निर्यजमानाय[2] । अत्त्यन्नं य एवं विद्वानग्निमाधत्ते ॥

अजो देयः सयोनित्वाय । वासो देयम् । सर्वदेवत्यं वासः । देवतानामभीष्ट्यै । वर्धमाना दक्षिणा देया । दक्षिणाया वै वृद्धिं यजमानो ऽनुवर्धते । उपाहरन्ती दक्षिणा देया । धेनुर्वा उपाहरन्ती । उप ह्येषा पय आहरति । नास्याग्निमादधानस्य कनीयो भवति । धेनुं होत्रे दद्यादाशिषामवरुद्ध्या अनड्वाहमध्वर्यवे । वह्न्येव यज्ञस्यावरुन्द्धे । रथो देयः । देवरथो वा एष प्रयुज्यते यद्यज्ञः । मनुष्यरथेनैव देवरथमभ्यातिष्ठति । मिथुनौ गावौ देयौ मिथुनस्यावरुद्ध्यै । षड् देयाः । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठति । द्वादश देयाः । द्वादश मासाः संवत्सरः । संवत्सरस्याप्त्यै । यदि द्वादशातिप्रच्यवेत चतुर्विंशतिं दद्यात् । चतुर्विंशत्यक्षरा गायत्री । गायत्री यज्ञमुखम् । गायत्रीमेव यज्ञमुखं नातिक्रामति ॥ २ ॥ Cf. KS. VIII, 6. 8.

त्रीणि हवीँषि भवन्ति । त्रय इमे लोकाः । इमानेव लोकानाप्नोति । त्रिर्विराड् व्यक्रमत[3] । विराज एवैनं विक्रान्तमनु विक्रमयति । यत्[4]पवमानं पुनात्येवैनं तेन । यत्पावकम[5]न्नमेवास्मै तेन प्रयच्छति । यच्छुचये मेध्यमेवैनं[6] यज्ञियं तेन करोति । पशुमानसानि प्रजावानसानि तेजस्व्यसानीति वा अग्निमाधत्ते । प्राणो वै पवमान[7]ः । प्राणादधि पशवः प्रजायन्ते । यदग्नये

1. The ms. वसीयान्.
2. KS. adds अन्नाद्यायाग्निमाधत्ते.
3. The ms. व्यक्रमयते. See the second note in the next section.
4. The ms. यत्पा॰. Cf. TB. I, 1, 5 यदग्नये पवमानाय निर्वपति पुनात्येवैनम्.
5. KS. adds अन्नं वै पावकम्.
6. KS. शुचिमेवैनं मेध्यं.
7. The ms. पवमानाः. So also in sec. 5.

पवमानाय[1] पशूनेवास्मै तेन प्रजनयति । आपो वै पावकाः । अद्भ्यः प्रजाः प्रजायन्ते । यदग्नये पावकाय प्रजामेवास्मै तेन प्रजनयति । असौ वा आदित्यः शुचिः । एष तेजसः प्रदाता । यदग्नये शुचये ऽसावेवास्मा आदित्यस्तेजः प्रयच्छति । देवाश्च वा असुराश्च संयत्ता आसन् । सो
5 ऽग्निर्विजयमुपयत्सु[2] त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयम् । यदेतानि हवीँषि निरुप्यन्ते ता एवास्यैतत्तन्वः संभरति । [ सतनूरेवैतत्सतेजा आधीयते । इमे वै लोका एतानि हवीँषि । ना]नाबर्हीँषि भवन्ति । इमानेव लोकानाप्नोति[3] । यन्नानाबर्हीँषि[4] लोकं प्रजननाय । नोच्छिनष्टि[5] । ऊनं वै प्रजा उपप्रजायन्ते । समानबर्हिषी
10 उत्तरे कार्ये । लोकमेव प्रजननायाकः । तमुपप्रजायते । विद्म वा अमुं[6] लोकं विद्मेमं नामुं पश्यामो वाँ[7] न वा । तस्मात्समानबर्हिषी उत्तरे कार्ये । पशवो वा एतानि हवीँषि । घृतं पुरोडाशः[8] । रुद्रो ऽग्निः । यदग्नो ऽनुनिर्वपेद्रुद्राय पशूनपिदध्यादपशुः स्यात् । संवत्सरे ऽनुनिरुप्याणि[9] । संवत्सरेणैवैनं शमयति । शिथिलं वा एतद्यज्ञस्य क्रियते ऽसयोनि यत्संवत्सरे
15 ऽनुनिर्वपति । अग्न एवानुनिरुप्याण्यँ[10]शिथिलत्वाय सयोनित्वाय ॥ ३ ॥

Cf. KS. VIII, 8.

निरुप्ती हविरुपसन्नमप्रोक्षितं भवति । अथ मध्याधिदेवनमवोक्ष्याक्षान्न्युप्य

निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।

साम्राज्याय सुक्रतुः[11] ॥

इति मध्याधिदेवने जुहोति । त्रिर्वै विराड् व्यक्रमत[12] गार्हपत्यमाहवनीयं मध्याधिदेवनम् । विराज एवैनं विक्रान्तमनुविक्रमयति । प्रत्येव तिष्ठति ।

1. The ms. पा०.
2. The ms. विजयत्सु. Cf. Kap. VIII, 3 देवा विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत.
3. KS. आप्नृणाति.
4. KS. adds स्युः.
5. KS. नोच्छिंषेत्.
6. KS. इमं.
7. KS. adds तु.
8. KS. ०शाः. in the second section.
9. The ms. नन्नुरूप्याणि. KS. ऽनुनिरुप्यी.
10. The ms. अननुरूप्याणम०. KS. ०निरुप्यम०.
11. Kap. gives the mantra in full, for it occurs here for the first time.
12. The ms. व्यक्रमयत्.

गच्छति प्रतिष्ठाम् । धर्मधृत्या जुहोति । धर्मधृतमेवैनं करोति सवितारं धारयितारम् । गां घ्नन्ति । तां विदीव्यन्ति[1] । तां सभासद्भ्य उपहरन्ति । तेनास्य सो ऽभीष्टः प्रीतो भवति ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाँसि चक्रिरे ॥ 5

इत्यामन्त्रणे जुहोति मन्त्रवत्या वैश्वदेव्या । मन्त्रमेवास्मै गृह्णाति । तमभिसमत्य मन्त्रयन्ते । सह वै देवाश्च मनुष्याश्चौदनपचन आसन् । ते मनुष्या देवानत्यचरन् । तेभ्यो देवा अन्नं प्रत्युह्य गार्हपत्यमभ्युदक्रामन् । तांस्तस्मिन्नन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । [तेभ्यो देवाः] पशून्प्रत्युह्याहवनीयमभ्युदक्रामन् । तांस्तस्मिन्नन्वागच्छन् । ते 10 मनुष्या एव देवानत्यचरन् । तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रामन् । तांस्तस्यामन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवा विराजं प्रत्युह्यामन्त्रणमभ्युदक्रामन् । तांस्ततो नानुप्राच्यवन्त । एते वै देवानां संक्रामाः[2] । श्रेयसिंश्रेयसिं लोकमभ्युत्क्रामति य एवं वेद । एतद्वै देवानां सत्यमनभिजितं यदामन्त्रणम् । तस्मात्सुप्रातरामन्त्रणं गच्छेत् । 15 सत्यमेव गच्छति । तस्मादामन्त्रणं[3][4] नाहूत यायात्[5] । तस्मादामन्त्रणे नानृतं वदेत् । वह्निर्वै नामौदनपचनः । आस्य वह्निर्जायते य एवं वेद । गृहा गार्हपत्यः । गृहवान्भवति य एवं वेद । धिष्ण्या आहवनीयः । उपैनं यज्ञो नमति य एवं वेद । सप्रथा मध्याधिदेवनम् । प्रथते प्रजया च पशुभिश्च य एवं वेद । अनाप्त आमन्त्रणम् । नैनमाप्नोति य ईप्सति य 20 एवं वेद ॥ ४ ॥ Cf. KS. VIII, 7.

अग्निर्वा इमं लोकं नोपाकामयत । यदस्मिन्नामं मांसं पचन्ति यत्पुरुषं

1. KS. °न्ते. Cf. Patañjali on Pāṇini II, 3, 60 and Schroeder's Introduction to MS. p. XVII.

2. KS. संक्रमाः.

3. The ms. यदा°.

4. For āmantraṇa see ĀpDh. II, 2, 5, 4 तस्य पुरस्तादावसथस्तदामन्त्रणमित्याचक्षते. See Prof. Caland's note in Wien. Zeit. K. M., vol. XXIII, pp. 59-60.

5. KS. नाहुत एयात्. The Kap. means: one should not go unless invited.

दहन्ति यत्स्तेयं पचन्ति तदभीमं लोकं नोपाकामयत । स यदिमं लोकमु-
पावर्तत या अस्य यज्ञियास्तन्व आसंस्ताभिरुदक्रामत् । ता एताः पवमाना
पावका शुचिः[1] । तस्य या पवमाना तनूरासीत्पशूंस्तया प्राविशद्या पावका-
पस्तया प्राविशद्या शुचिरमुं तयादित्यं प्राविशत् । प्राणो वै पवमानः ।
5 प्राणेन पशवो यताः । यदग्नये पवमानाय पशूनेवास्मै तेन यच्छति ।
एषा वा अस्य सा तनूर्या[2] पशून्प्राविशत् । यदिदं घृते हुते प्रतीवार्चि[3]रु-
ज्ज्वलत्येषा वा अस्य सा तनूर्यापः प्राविशत् । यदिदमप्सु परीव ददृशे
यद्धस्तावमवनिज्य स्नात्वा श्रादिव धत्ते य एवाप्स्वग्निः स एवैनं तत्पावयति
स स्वदयति । यदग्नये पावकाय सपशुमेवैनं पावयति । एषा वा अस्य सा
10 तनूर्यापः प्राविशत् । यदिदं घृते हुते शोणमिवार्चिरुज्ज्वलत्येषा वा अस्य
सा तनूर्यामुमादित्यं प्राविशत् । यदिदमुपरिष्टाद्धीव भाति यज्ज्योति-
रभवद्यदग्नये शुचय आविर्भूत्या एव[4] घोषायैव श्लोकायैव रुच एव ।
एषा वा अस्य सा तनूर्यामुमादित्यं प्राविशत् । यदिदं घृतं हुते सुवर्णमिवार्चि-
रुज्ज्वलति यदेतानि हवींषि निरुप्यन्ते[5] सतनूरेवैतत्सतेजा आधीयते ।
15 इमे वै लोका एतानि हवींषि । नानाबर्हींषि[6] भवन्ति । नाना हीमे लोकाः
प्रतिष्ठिताः ॥ ५ ॥ Cf. KS. VIII, 9.

गायत्रीः संयाज्या भवन्ति । गायत्रो वा अग्निर्गायत्रच्छन्दाः । आग्ने-
यमेतत्क्रियते यदग्न्याधेयम् । अग्नावेवैतदग्निः प्रतितिष्ठन्नेति यदाग्नेयानि ह-
वींषि । अग्निनाग्निः समिध्यत इत्युत्तरयोर्हविषोरनुवाक्यां कुर्यात्तेजस आयत-
20 नाय । उर्वशी देवी[6] पुरूरवस्यासीत् । सान्तर्वती देवान्पुनः परैत् । सो ऽदो[7]
देवेष्वायुरजायत । तामन्वागच्छत् । तां पुनरयाचत । तामस्मै न पुनरददुः ।
तस्मा आयुं प्रायच्छन्नेष आयुरिति । अग्निं चोरव्यम् । उखायी समुप्यैतमा-

1. The ms. पवमानाः. So also in VII, 3. Very probably it is due to the following घोषायैव and श्लोकायैव.
2. KS. तनूर्यया for तनूर्या.
3. The ms. प्रतीचा॰. Cf. further on यदिदमुपरिष्टाद्धीव भाति.
4. The ms. आविर्भूत्यायैव. (correct ॰येव). But this retaining of final य् is rare.
5. KS. adds ता एवास्यैतत्तन्वस्संभरति.
6. KS. वै.
7. The ms. ज्ञो.

धत्स्व तेन प्रजनिष्यस इति । स वृक्षस्य शाखायामग्निमासज्याशुना ग्राममभ्यवैत् । स पुनरैमीत्येद्वृक्षस्याग्रे ऽग्निं ज्वलन्तम्[1] । सो ऽचिकेदयं वाव[2] सो ऽग्निरिति । तस्यारणी आदायाग्निं मथित्वाधत्त । तेन प्राजायत । यदारोहस्यारणी भवतः प्रजननाय । अदित्यै घृते चरुं पशुकामो ऽनुनिर्वपेत् । इयं वा अदितिः । अस्यामधि पशवः प्रजायन्ते । यज्ञमुखमग्न्याधेयम् । 5
यज्ञमुखमेवालभ्य पशूनवरुन्द्धे । चातुष्प्राश्यो भवति । आचतुरं हीमे पशवो द्वन्द्वं मिथुनाः । ते वीर्यकृतः । अग्नीषोमीयमेकादशकपालं ऽनुनिर्वपेत् । आग्नेयो वै ब्राह्मणः । देवतया सोमराजा । यज्ञमुखमग्न्याधेयम् । यज्ञमुखमेवाक्रम्य स्वाराज्यमुपैति । देवान्वै यज्ञो नाभ्यनमत् । ते ऽश्राम्यन्यज्ञो नो नाभिनमतीति । सो[3] ऽग्नीषोमावेवाग्रे यज्ञो ऽभ्यनमत् । ते ऽविदुरग्नीषोमौ वै नो ऽग्रे यज्ञो ऽभ्यनीस्तयोर्यज्ञस्याभिनतिमिच्छामहा इति । 10
ते ऽब्रुवन्युवां वै नो ऽग्रे यज्ञो ऽभ्यनान्युवयोर्नो[4] ऽधि यज्ञो ऽभिनमत्विति । तावब्रूतां[5] वार्यं वृणावहा आवामेवाग्र आज्यभागौ यजानिति । तस्मादग्नीषोमावेवाग्र आज्यभागौ यजन्ति । वार्यवृतं ह्यनयोः । यदग्नीषोमीयमनुनिर्वपति यज्ञस्याभिनत्यै । अतो हि देवानग्रे यज्ञो ऽभ्यनमत् । यदन्यदनुनिर्वपेद्देवतया यज्ञमन्तर्दध्यात् । मिथुनं वा अग्निश्च सोमश्च । सोमो रेतोधा अग्निः प्रजनयिता । अग्निर्वावेदं सर्वम् । आप ओषधयो वनस्पतयः । तदेव सोमः । एतौ वै नो देवानां नेदिष्ठम् । एतौ हि पश्यामः । यथा वा इदं 15

1. So also the Kāṭh. mss. Schroeder, however, changed एद् to ऐद् which is wrong. The substantive अग्निं followed by the participle ज्वलन्तं in the accusative is governed by आ (एद् being composed of आ and इत्), which is repeated from the previous ऐमि. Cf. ŚatBr. II, 2, 3, 3 पुनरैम इति देवा एदग्निं तिरोभूतम्. In all instances where एद् is used, it is always to be reduced to आ and इत्, and this आ is invariably the repetition of a previous आ compounded with the root इ 'to go'. B. Delbrück takes एद् as one particle and compares it with Latin en (Altindische Syntax). See also Prof. Caland's Introduction to Kāṇ. ŚatBr. p. 35.

2. The ms. वावा. So also a KS. ms.

3. KS. तेषाम्.

4. The ms. ऽभ्यन्नात्युभयोर्णो.

5. KS. ता अब्रुवतां.

मनुष्या उपासत एवमेतं देवा उपासत । ते ऽचिक्रयुरुद्धृतेन वा[1] अनेनाभिज-
येमेति । तमुदहरन्त । तेनाभ्यजयन् । अभिजित्या एवैष उद्ध्रियते ।
अग्निर्वै निराधानादबिभेत् । नातिदूर आधेयो निराधानाय ॥ ६ ॥
Cf. KS. VIII, 10; MS. I, 6, 12.

आधेयो ऽग्नी३र्नाधेया३[2] इति मीमांसन्ते । श्वो ऽग्निमाधास्यमाने-
5 नेति । आधेय[3] एव । अयज्ञो ह्येष यो ऽनग्निः । अजो बद्धस्तां रात्रीं वसेत् ।
अग्नितेजसं वा अजः । तदेव तमग्निमाधत्ते । कल्माषः स्यात् । स हि सर्व-
देवत्यः । यस्ती श्वो ऽग्निमाधास्यन्स्यात्स तां रात्रीं व्रतं चरेत् । न मांसम-
श्नीयात् । न स्त्रीमुपेयात् । सर्वो वै पुरुषो ऽग्निमान् । अग्निरस्मादपक्रामेत् ।
एष ह्येतस्य योनिः । एतस्माद्ध्येषो ऽधि सृज्यते यस्तमुद्धरति । यो दक्षिणो
10 ब्रह्मवर्चसायैवैष मथ्यते । अथो अग्निभ्यामेवैनं सयोनिं करोति । दुर्गोपस्तु ।
अहरहरस्य मन्थेयुः । यत एव कुतश्चाहरेत् । एषा वा अस्यानवरुद्धा तनूः ।
तामेवावरुन्द्धे । यत्र दीप्यमानं परापश्येत्तत आहरेत् । देवता वा एता
आविर्भवन्ति । ता एवावरुन्द्धे । भृज्जनादाहरेदन्नकामस्य[4] । एषा वा अ-
स्यान्नादी तनूः । तामेवावरुन्द्धे । यो ब्राह्मणो वा वैश्यो वा पुष्टो ऽसुर इव[5]
15 स्यात्तस्य गृहादाहरेत् । यैव सा पुष्टिर्यदन्नं तदवरुन्द्धे । गृहे त्वस्य[6] ततो
नाश्नीयात् । त्रिरुद्यच्छते । त्रय इमे लोकाः । इमानेव लोकानाप्नोति ।
यदुद्यच्छत इमं तेन लोकमाप्नोति । यत्प्राङुद्द्रवत्यन्तरिक्षं तेन । यदादधात्यमुं
तेन । नाधाय पुनरुद्गृह्णीयात् । अपक्रमः सः । पापीयान्भवति । प्राणेभ्यो
वै प्रजापतिः प्रजा असृजत । ताः प्राजायन्त । तया मात्रयोद्गृह्णीयात्प्रजन-
20 नाय । नात्युद्गृह्णीयात् । अग्निरस्य प्राणानुद्दहेत्प्रमीयेत । नाधो दध्नुयात् ।
अपक्रमः सः । पापीयान्भवति ॥ ७ ॥ Cf. KS. VIII, 12; MS. I, 6, 11.

अग्निं वै सृष्टमग्निहोत्रमन्वसृज्यत । तस्मादग्निमाहितमग्निहोत्रेणानूद्द्र-
वन्ति । आग्नेयी सायमाहुतिः सौरी प्रातः । यदाग्नेय्या प्रातर्जुहुयात्प्रजननं
पुरस्तात्परिहरेत् । अयथापूर्वं कुर्यात् । पूर्णया स्रुचा मनसा प्रजापतये जुहो-

1. KS. त्वा.
2. The ms. does not give the figure 3.
3. KS. ०मानना ३ इत्याधेय.
4. The ms. भृज्यमानादा०.
5. The ms. एव.
6. The ms. न्वस्य.

ति । पूर्णः प्रजापतिः । प्रजापतिमेवाप्नोति । पूर्णो वै प्रजापतिः समृद्धिभिरूनो व्यृद्धिभिः[1] । पूर्णः पुरुषः कामैरूनः समृद्धिभिः[2] । पूर्णेनैव पूर्णः[3] समृद्धीरवरुन्द्धे । आनीता वा अन्येषां देवानां स्मो ऽनानीता अन्येषाम् । संस्पर्शेनान्येषां जीवामः सकाशेनान्येषाम् । पृथिव्या वातस्यापां तेषामानीताः स्मस्तेषां संस्पर्शेन जीवामः । अग्नेः सूर्यस्य दिवस्तेषामनानीताः 5 स्मस्तेषां सकाशेन जीवामः । तानेवैतदालभ्य[4] । त एनमानेषत । श्रेयसो भ्रातृव्यस्य भवति । नास्य मनुष्याः पापवसीयसस्येशते । यदात्मनालभेत प्रमायुकः स्यात् । आज्येन चौषधीभिश्चालभते ऽप्रमायुको भवति । आनीतो वा एष देवानां य आहिताग्निः । अदन्त्यस्यान्नम् । पूर्णया स्रुचा जुहोति । पूर्णयाग्नये ऽलमकः । अलमस्मै भवति । ओषधयश्च वै वनस्पतयश्च दिवा 10 समदधुः । त इतो ऽन्यत्सर्वमबाधन्त । स प्रजापतिरमन्यतेमे वावेदमभूवन्निति । सो ऽग्निं सृष्ट्वा तमाधत्त । तेनैनान्न्यभावयत्[5] । भ्रातृव्यसहनो वावैष आधीयते हुताद्यार्यं[6] । एष वा अहुताद्यो ऽलमग्न्याधेयाय सन्ननाहिताग्निः । हुतमेवैतेन स्वदितमत्ति ॥ ८ ॥ Cf. KS. VIII, II.

इति कपिष्ठलकठसंहितायां सप्तमो ऽध्यायः ॥

---

1. The ms. वियृध्यति.
2. The ms. समृद्धयति.
3. Thus the ms. KS. पूर्णयैव पूर्णाः.
4. The ms. तानेवैतदालभ्य.
5. The ms. तयेन॰. This sandhi is rare.
6. The ms. भ्रातृव्यसहनाय यावावैषाधीयते आहुताद्या वा वावैषाधीयत.

अहुतादो वा एतस्य पुरा देवाः । अथैतद्धुताद उपावर्तते । ते ऽस्यो-
र्जापक्रामन्ति । ऊर्जमेवावरुन्द्धे । तानेव भागिनः करोति । यजन्त्यमुष्मि-
ञ्जुह्वत्यस्मिन्पचन्त्यमुष्मिन्ननन्तरयायैतस्यै[1] । अथो[2] वैश्वानरतायामेवैनमुपा-
तिष्ठिपत् । ये वै यज्ञेनायजन्ताग्र्नुर्वैस्ते । न वै सु विदुरिव मनुष्या यज्ञम् ।
5 तस्मान्न सर्व इवर्ध्नोति । यद्दक्षिणां ददाति यज्ञस्यार्धः[3] । दक्षिणावद्ध्र्यी ह
स वै पुरा दर्शपू[4]र्णमासाभ्यां यजन्ते । य एष ओदनः पच्यते दक्षिणामे-
वैतां ददाति यज्ञस्यर्द्ध्यै । इष्टी वा एतेन यद्यजते । य एष ओदनः पच्यते
तेन पूर्ती । एष वावेष्टापूर्ती य एतं[5] पचति । प्रजापतिर्वै देवेभ्यो भागधे-
यानि व्यादिशत् । यज्ञमेव सो ऽमन्यतात्मानमन्तरगामिति । स एतमो-
10 दनमपश्यत् । तमात्मने भागमकल्पयत् । प्रजापतेर्वावैष भागः । महान्तम-
परिमितं पचेत् । अपरिमितः प्रजापतिः । प्रजापतिमेवाप्नोति । देवाश्च वा
असुराश्चास्पर्धन्त । ते[6] देवाः प्रजापतिमेवाभ्ययजन्त । अन्यो ऽन्यस्यासन्नसुरा
अजुहवुः । ते देवा एतमोदनमपश्यन् । तं प्रजापतये भागमनुनिरवपन् ।
तं भागं पश्यन्प्रजापतिर्देवानुपावर्तत । ततो देवा अभवन्परासुरा अभवन् ।
15 य एवं विद्वानन्वाहार्यमाहरति भवत्यात्मना परास्य भ्रातृव्यो भवति । ईड्या
वा अन्ये देवाः सपर्येण्या अन्ये । देवा ईड्या ब्राह्मणाः सपर्येण्याः । यज्ञे-
नैवेड्यान्प्रीणात्यन्वाहार्येण सपर्येण्यान् । तस्योभये प्रीता यज्ञे भवन्ति ।
प्रजापतेर्भागो ऽस्यूर्जस्वान्[7] । अक्षितो ऽस्यक्षित्यै त्वा । अक्षितो नामासि मा

1. The ms. ०ननंतरतायैतस्य.
2. The ms. असौ.
3. This sentence is not found in KS.
4. The ms. ०पौ०.
5. The ms. एवं.
6. The ms. omits ते.
7. KS. adds पयस्वान्.

मे देष्ठाः । प्राणापानौ मे पाहि[1] । उदानरूपे मे पाहि । ऊर्गस्यूर्जं मयि धेहि । प्रजापतिं त्वया समक्षमृध्यासमिति तमेव समक्षमृध्नोति ॥ १ ॥ Cf. KS. VIII,13.

यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे[2] ।
आदित्या विश्वे तद्देवा वसवः पुनराभरन् ॥
यत्त्वा[3] क्रुद्धः परोवप मन्युना यदवर्त्या । 5
सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुधीतिमग्ने[4] ।
इहैव धेह्यधि दक्षमुग्रमश्वावद्गोमद्यवमत्सुवीर्यम् ॥
पुनस्त्वा मित्रावरुणौ पुनरिन्द्रः पुनर्भगः ।
पुनस्त्वा विश्वे देवा ब्राह्मणा उददीदिपन् ॥ 10
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ।
पुनर्नः[6] पाह्यंहसः ॥
सह रय्या निवर्तस्वाग्ने[5] पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

केतः सकेतः सुकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु 15 स्वाहा । सलिलः सलिगः सगरस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । दिवो ज्योतिर्विवस्वँ[7] आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वम् । आदित्येभ्यः स्वाहा ॥ २ ॥ Cf. VIII, 4. 6; KS. VIII, 14; IX, 1. 3; MS. I, 7, 1. 4. 5; TS. I, 5, 3. 4.

अग्नेर्वै भागः पुनराधेयम् । तं[8] भागं प्रेप्सन्व्यर्धयति । यद्याधाय मन्येत व्यृध्यते स्य इति[9] पुनरादधीत । यं भागं प्रेप्सन्व्यर्धयति तं प्राप्यार्धयत्येव । 20

1. KS. adds समानव्यानौ मे पाहि.
2. The ms. ०दध्मसे.
3. KS. यत्ते.
4. KS. ०धीतमग्ने.
5. The ms. निर्व०.
6. The ms. पुनर्णः:
7. KS. ज्योते विवस्व. But in IX, 3 KS. agrees with Kap. Cf. MS. देवजूते विवस्वन्.
8. The ms. omits तं. Cf. MS.
9. The ms. आस्येति. KS. ऽस्या इति. स्यः with the verb in the third person is equivalent to अहं. The lengthening in स्या in MS, यद्यादधानो मन्येत

सर्वमाग्नेयं क्रियते । यदेव किंच सर्वमग्नये भागं प्रादात्सर्वामृद्धिमृध्नोति । न संभाराः संभृत्या इत्याहुर्न यजुः कार्यमिति । संभृतसंभारो ह्येष कृतयजुः । तत्तन्न सृत्त्यर्म् । संभृत्या एव संभाराः कार्यं यजुः । पुनरुत्स्यूतं वासो देयं पुनरुत्सृष्टो ऽनड्वान्पुनर्निष्कृतो रथः । एतानि वै पुनराधेयस्य रूपाणि । 5 रूपैरेवैनत्समर्धयति । अग्निर्वा उत्सीदन्नप ओषधीरनूत्सीदति । एता वा आप[1] ओषधयो यद्दर्भाः । यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्यो ऽध्यवरुन्द्धे ॥

देवाश्च वा असुराश्चास्पर्धन्त । ते देवा विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत । यदि जयेमेमा उपावर्तेमहि यदि नो जयेयुरिमा अभ्युपधावेमेति । 10 ते ऽभिजित्यान्वैच्छन्सर्वेषां नः सहेति । सो ऽग्निरब्रवीद्यो मा मद्देवत्यमाद्धातै[2] स[3] एताभिस्तनूभिः संभवादिति । तं देवा आदधत । तैं[3] एताभिस्तनूभिः समभवन् । एताभिरेव तनूभिः संभवति य एवं विद्वानेतमाधत्ते । त्वष्टा पशुकाम आधत्त । तैं[3] इमे त्वाष्ट्राः पशवः । तेनर्द्धाः । मनुः पुष्टिकाम आधत्त । स इमान्पोषानपुष्यत् । तेनर्द्धाः । प्रजापतिः प्रजाकाम आधत्त । ता 15 इमाः प्राजापत्याः प्रजाः प्राजायन्त । तेनर्द्धाः । यो वै तमाधत्त स तेन वसुना समभवत् । तस्मात्पुनर्वसुः । तस्मात्पुनर्वसावाधेयः । आर्ध्नोद्धै स यस्तमाधत्त । तस्मादनूराधाः । तस्मादनूराधास्वाधेयः ॥ ३ ॥ Cf. KS. VIII, 15; MS. I, 7, 2; TS. I, 5. 1. 2.

वि स्या ऋध्यता इत्युत्साद्य पुनरादधीत is inexplicable. This use of the pronoun त्यद् is very common in the Jaiminīya Brāhmaṇa and very often the sentence expresses unfavourable circumstances. In KS. MS. and TS. quite a number of such instances can be noted: KS. XXIII, 2 (p. 75, l. 1); XXIV, 9 (p. 100, l. 5); MS. III, 6, 4 (p. 63, l. 17); TS. II, 5, 2, 6; II, 6, 6, 1. An interesting interchange of अस्मद् and त्यद्, similar to the one observable in Pañcaviṃśa and Jaiminīya Br. is met with in Mait. and Kāṭh. Saṃhitās: अस्ति वा इदं त्यस्मिन्नन्तर्वीर्यम् MS, II, 4, 3 (p. 40, l. 19) as against वीर्यं वा इदं मय्यस्ति KS, XII, 3 (p. 164, l. 16). For Jaim-Br. passages see Prof. Caland's paper "Over en uit het JaimBr." in Versl. en Med. 5, 1, 1. This use of त्यद् is restricted to the Brāhmaṇas.

1. KS. आप एता.
2. The ms. ॰दधाति तत.
3. The ms. omits त.

अग्निर्वा उत्सीदन्संवत्सरमनूत्सीदति। सप्तदश सामिधेनीः कार्याः। पञ्चर्तवः। द्वादश मासाः। एष वाव स[1] संवत्सरः। संवत्सरादेवाधि यज्ञमुखं प्रतनुते[2]। तदाहुः पञ्चदशैव कार्या न सप्तदशेति। एतद्धि संवत्सरस्य संक्रमणतरं यत्पञ्चदश। पञ्चदश सामिधेनीरनूच्यन्ते। पञ्चदशार्धमासस्य रात्रयः। ताभिरेव ता आप्यन्ते। यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि। तैरेव तान्याप्यन्ते। अग्निर्वा उत्सीदन्संवत्सरमनूत्सीदति। षड्वा ऋतवः संवत्सरः। यत्षड्विभक्तयः संवत्सरादेवैनमध्यवरुन्द्धे। संवत्सरो वा अग्निर्वैश्वानरः। षडृतवः। तस्मात्षड्विभक्तयः। यद् द्व्यक्षराः सतीश्चतुरक्षराः क्रियन्त आचतुरं हीमे पशवो द्वन्द्वं मिथुनाः। यद्वा इदमग्निं बहुधा विहरन्ति यदिमान्पोषान्पुपोष तस्मादग्निरेवैतावतीर्विभक्तीरश्नुते नान्या देवता। यज्ञमुखं वै प्रयाजाः। यत्प्रयाजानन्तर्यायज्ञमुखमन्तर्यात्[3]। अन्नं वै प्रयाजाः। यत्प्रयाजानन्तर्यादन्नमन्तर्यात्[3]। यः कामयेतर्ध्नुयामित्युपरिष्टात्प्रयाजानां[4] विभक्तीः कुर्यात्। वीर्यं वै विभक्तयः[5]। वीर्यादेवाधि वषट्करोति। आजिरमृद्धिमभिक्रामति। नानाग्नेयं क्रियत इत्याहुः। कस्मात्सविभक्तयः प्रयाजा भवन्तीति। संवत्सरं वा एते परीज्यन्ते यत्प्रयाजाः। तेनाग्नेयं तेन नानाग्नेयं क्रियते॥

पुनरूर्जा निवर्तस्व[6] पुनरग्न इषायुषा।
पुनर्नः पाह्यंहसः॥

इति पुरस्तात्प्रयाजानां जुहुयात्।

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया।
विश्वप्स्न्या विश्वतस्परि॥

इत्युपरिष्टादनुयाजानां जुहुयात्। ऊर्जा वा एष पशुभिरुत्सीदन्सहोत्सीदति। पुनरेवोर्जं पशूनवरुन्द्धे। अथो उभयत एव यज्ञस्याशिषर्ध्नोति॥ ४॥

Cf. VIII, 2; KS. IX,1; VIII, 14; MS. I, 7, 3. 4. 1.

1. The ms. सु-.
2. KS. संवत्सरादेवैनमध्यवरुन्द्धे.
3. KS. अन्तरियात्.
4. Schroeder's प्रजानां is to be corrected.
5. KS MS. वीर्यं वै प्रयाजाः वीर्यं विभक्तयः.
6. The ms. निर्व॰.

नानाग्नेयं क्रियत इत्याहुः । कस्मादाज्यभागौ यजन्तीति । चक्षुषी वा एते यज्ञस्य यदाज्यभागौ । यदाज्यभागावन्तर्याच्चक्षुषी यज्ञस्यान्तर्यात् । अग्न आयूंषि पवस इत्येती सोमस्याज्यभागस्य लोके कुर्यात् । यदाग्नेयं तेनाग्नेयी यत्पावमानं तेन सौमी । नानाग्नेयं क्रियते । न सोममन्तरेति । अग्निर्मूर्धा
5 दिवः ककुदित्येती सोमस्याज्यभागस्य लोके कुर्यात्प्रजाकामस्य वा पशुकामस्य वा । यन्मिथुना तेन प्रजननवती यद्रेतस्वती तेन सौमी । नानाग्नेयं क्रियते । न सोममन्तरेति ॥

वीरहा वा एष देवानां यो ऽग्निमुत्सादयते । शतदायो वीरः । यदेताः शताक्षरा अक्षरपङ्क्तयो वीरमेवैतद्देवानामवदयते । अन्यस्यै वै प्रमाया आधेयो
10 ऽन्यस्यै पुनराधेयः । न वै तामाधेयेन स्पृणोति यस्यै पुनराधेयः । पुनराधेयेन वाव तां स्पृणोति । जरा वै देवहितमायुः । तावतीर्हि समा जीवति । तस्मादाहुः शतदायो वीरः[2] । यदेताः शताक्षरा अक्षरपङ्क्तयो भवन्ति यावदेव वीर्यं तदाप्नोति तत्स्पृणोति । आयुषा वा एष वीर्येण व्यृध्यते यो ऽग्निमुत्सादयते । शतायुः पुरुषः शतवीर्यः । आयुर्वीर्यं[4] हिरण्यम् । यद्धिरण्यं शतमानं ददात्या-
15 युरेव वीर्यं पुनरालभते[3] ॥ ५ ॥ Cf. KS. IX, 2; MS. 1, 7, 4. 5.

यज्ञेन वा एष वीर्येण व्यृध्यते यो ऽग्निमुत्सादयते । पाङ्क्तो यज्ञः । यत्पञ्चकपालो यज्ञमेवालभते । तदाहुरष्टाकपाल एव कार्यो न पञ्चकपाल इति । अष्टाक्षरा गायत्री । गायत्रो ऽग्निर्गायत्रच्छन्दाः । आग्नेयमेतत्क्रियते यत्पुनराधेयम् । तस्मादष्टाकपालः । तत्तन्न सूर्त्यम् । पञ्चकपाल एव कार्यः । अग्नि-
20 र्वा उत्सीदन्संवत्सरमनूत्सीदति । पञ्च वा ऋतवः संवत्सरः । पञ्चथाद्धा[5] अध्यृतोः षष्ठ ऋतुर्बभूव । समानमेतद्यत्पञ्चथश्चर्तुः षष्ठश्च । यत्पञ्चकपालः संवत्सरादेवैनमाप्नोति[6] । पञ्चर्तवः । प्रजननमृतवः । यत्पञ्चकपालः प्रजननाय । प्रजननं वा ऋतवो ऽग्निः प्रजनयिता । यत्पञ्चकपालः प्रजननादेवैनं प्रजनयिता प्रजनयति ॥

1. The ms. यजानीति.
2. KS. adds इति.
3. KS. पुनरालभेत is to be corrected.
4. The ms. विद्व॰.
5. The ms. पंचधाद्धा.
6. KS. ॰मध्यवरुन्द्धे.

आदित्या वा इतः सर्वेणैव सहामुं लोकमायन् । ते व्यतृष्यन् । ते ऽविदुरमुतःप्रदानाद्वा इहाजगामेति । त एतं पुनरादधत । तेनार्ध्नुवन् । आदित्या वा अस्मिंल्लोक ऋद्धा आदित्या अमुष्मिन् । पशवो ऽस्मिन्नृतवो ऽमुष्मिन् । उभयोरेव लोकयोर्ऋध्नोति य एवं विद्वानेतया यजते[1] ॥

केतः सकेतः सुकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । 5 सलिलः सलिगः सगरस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा । दिवो ज्योतिर्विवस्व आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वम् । आदित्येभ्यः स्वाहेत्येतैर्वै ते तमादधत । यदेवैतैराधत्ते ऽथाहितः । आदित्यो हि पुनराधेयः ॥ ६ ॥ Cf. VIII, 2; KS. IX, 3; VIII, 14; MS. I, 7, 4. 5. 1.

आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो द्वादशकपालः । सारस्वत- 10 श्चरुः । पौष्णश्चरुः । मारुतः सप्तकपालः । वैश्वदेव्यामिक्षा । द्यावापृथिव्य एककपालः । आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो ऽष्टाकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्नो द्वादशकपालः । मारुत्यामिक्षा । वारुण्यामिक्षा । काय एककपालः ॥

नमस्त आतान । अनर्वाक्प्रेहि घृतस्य कुल्यामनु सह प्रजया सह 15 रायस्पोषेण ॥

प्रघास्यान्हवामहे मरुतो यज्ञवाहसः ।
करम्भेण सजोषसः ॥
मो षू ण इन्द्रात्र पृत्सु देवा अस्तु ष्म ते शुष्मिन्नवयाः ।
मही देवस्य मीढुषो ऽवया हविष्मतो मरुतो वन्दते गीः ॥ 20
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
यदेकस्यापि धर्मणीदं तदवयजामहे[2] ॥ स्वाहा ॥
अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा ।
देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥ ७ ॥ Cf. KS. IX, 4; MS. I, 10, 1. 2; TS. I, 8, 2. 3.

1. Thus the ms. KS. विद्वानेतमाधत्ते. 2. The ms. धर्मणीदंन्नदवयज्ञे.

अग्नये ऽनीकवते प्रातरष्टाकपालः । मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः । मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनः ॥

पूर्णा दर्वि परापत सुपूर्णा पुनरापत ।
वस्नेव विक्रीणावहा इषमूर्जं शतक्रतो ॥
5 देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारमिन्नि मे हर निहारं निहरामि ते ॥

मरुद्भ्यः क्रीडिभ्यः प्रातः सप्तकपालः पुरोडाशः । आग्नेयो ऽष्टाकपालः । सौम्यश्चरुः । सावित्रो ऽष्टाकपालः । सारस्वतश्चरुः । पौष्णश्चरुः । ऐन्द्राग्न एकादशकपालः । ऐन्द्रश्चरुः । वैश्वकर्मण एककपालः ॥

10 अग्ने वेर्होत्रं वेर्दूत्यम् । ऊर्ध्वो ऽध्वरे ऽस्थाः । अवतां त्वा द्यावापृथिवी । अव त्वं द्यावापृथिवी । स्विष्टकृदिन्द्राय देवेभ्यो भव । जुषाणो अस्य हविषो घृतस्य वीहि स्वाहा ॥ ८ ॥ Cf. KS. IX, 5; MS. I, 10, 1. 2; TS. I, 8, 4.

सोमाय पितृमत आज्यम् । पितृभ्यो बर्हिषद्भ्यः षट्कपालः पुरोडाशः । पितृभ्यो ऽग्निष्वात्तेभ्यो धानाः । अग्नये कव्यवाहनाय मन्थः । एतत्ते तत 15 ये च त्वानु । एतत्ते पितामह ये च त्वानु । एतत्ते प्रपितामह ये च त्वानु । अत्र पितरो मादयध्वम् ॥

सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुर स्तुतो याहि वशीं अनु योजा न्विन्द्र ते हरी ॥
परेत पितरः सोम्यासो गम्भीरेभिः पथिभिः पूर्विणेभिः ।
20 दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥
अमीमदन्त पितरः ॥
अया विष्ठा जनयन्कर्वराणि स हि[2] घृणिरुरुर्वराय गातुः ।
स प्रत्यङ्डैद्धरुणं मध्वो अग्रं स्वा यत्तनू तन्वं[3] मैरयत ॥
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।

1. The ms. अध्वरायास्त्वा.
2. The ms. omits स हि.
3. The ms. तन्वा॰. The ms. has often तन्वां and वीर्यां for तन्वं and वीर्यं.

अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥

नमो वः पितरो मन्यवे । नमो वः पितरः शुष्माय । नमो वः पितरो जीवाय । नमो वः पितरो रसाय । नमो वः पितरो बलाय । नमो वः पितरो यत्क्रूरं तस्मै । नमो नमो वः पितरः । स्वधा वः पितरः । यात्र पितरः स्वधा यत्र यूयं स्थ सा युष्मासु । तया यूयं यथाविभागं मादयध्वम् । येह पितर 5 ऊर्ग्यत्र वयं स्मः सास्मासु । तस्यै वयं ज्योग्जीवन्तो भूयास्म ॥

मनो न्वाहुवामहे नाराशंसेन स्तोमेन ।
पितॄणां च मन्मभिः ॥
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यं दृशे ॥ 10
पुनर्नः पितरो मनो ददातु दैव्यो जनः ।
जीवं व्रातं सचेमहि ॥ ९ ॥ Cf. KS. IX, 6; MS. I, 10, 3; TS. I, 8, 5.

यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरितानि यानि चकृम ॥

रुद्राखुं ते पशुं करोमि । एष ते रुद्र भागः । सह स्वस्राम्बिकया तं जुषस्व 15 स्वाहा ॥

अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम्[1] ।
यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥
भेषजं गवे ऽश्वाय पुरुषाय सुभगं[2] मेषाय मेष्यै ।
अथो अस्मभ्यं भेषजं सुभेषजं यथासति ॥ 20
त्र्यम्बकं[3] यजामहे सुगन्धिं रयिपोषणम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

भगोऽसि । भगस्य ते लप्सीयें[4] । एष ते रुद्र भागः । तेनावसेन परो मूज-

1. The ms. अवान्व रुद्रामधिमह्यव देवं त्रियंवकं.
2. KS. MS. TS. सुगं.
3. The ms. त्रियंवकं.
4. KS. भगस्थ भगस्य वो लप्सीय is repeated in ĀpŚr. VIII, 18, 4, but MānŚr. I, 7, 7, 8 reads भगो ऽसि भगस्य लप्सीय.

वतो ऽतीहि कृत्तिवासाः पिनाकहस्तो ऽवततधन्वा । एधो ऽस्येधिषीमहि । समिदसि समेधिषीमहि । तेजो ऽसि तेजो मयि धेहि ॥ १० ॥ Cf. KS. IX, 6. 7; MS. I, 10, 3. 4; TS. I, 8, 5. 6.

चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्नीत्[1] । वाचस्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः । इन्द्रं गच्छ स्वाहा । पृथिवी होता । द्यौरध्वर्युः । त्वष्टाग्नीत्[1] । मित्र उपवक्ता । वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे । यज्ञपतये वीर्यमा स्वस्करः । वाचस्पतिः सोमं पिबतु । जजनदिन्द्रमिन्द्रियाय स्वाहा । सोमः सोमस्य पुरोगः । शुक्रः शुक्रस्य पुरोगाः । आतास्ते[2] इन्द्र सोमा वातापयो[3] हवनश्रुतः[4] स्वाहा । अग्निर्होता । अश्विनाध्वर्यू । रुद्रो ऽग्नीत्[1] । बृहस्पतिरुपवक्ता । वाचस्पते हृद्विधे[5] नामन्वाचस्पतिः सोममपात् । आस्मासु नृम्णं धात्स्वाहा । सोमः सोमस्य पुरोगाः । शुक्रः शुक्रस्य पुरोगाः । आतास्ते[2] इन्द्र सोमा वातापयो[3] हवनश्रुतः[4] स्वाहा ॥ ११ ॥ Cf. KS. IX, 8; MS. I, 9, 1.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । वरुणस्त्वा नयतु देवि दक्षिणे । यमायाश्वम् । तेनामृतत्वमशीय । वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे । देवस्य त्वा[6] । वरुणस्त्वा नयतु देवि दक्षिणे । अग्नये हिरण्यम्[7] । रुद्राय गाम्[8] । ग्रास्त्वाकृन्तन्नपसो ऽतन्वत वरुत्रीरवयन् । वरुणस्त्वा नयतु देवि दक्षिणे । बृहस्पतये वासः । तेनामृतत्वमशीय । वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥

क इदं कस्मा अदात् । कामः कामाय । कामो दाता कामः प्रतिग्रहीता । कामः समुद्रमाविशत् । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते ॥

1. KS, ०मित्.
2. The ms. स्थ.
3. KS, वातापे.
4. The ms. ०श्रुच.
5. Thus KS. The ms. रिद्विधे.
6. देवस्य त्वा is the pratika for the mantra given in the beginning of this section.
7. तेनामृतत्वमशीय । वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे । देवस्य त्वा···प्रतिगृह्णामि । वरुणस्त्वा नयतु देवि दक्षिणे is understood after अग्नये हिरण्यम्.
8. तेनामृतत्वमशीय । वयो···प्रतिग्रहीत्रे । देवस्य त्वा···प्रतिगृह्णामि is understood after रुद्राय गाम्.

महाहविर्होता । सत्यहविरध्वर्युः । अचित्तपाजा अग्नीत्[1] । अचित्तमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्चाभिगरौ । अयास्य उद्गाता । वाचस्पते विधे नामान्विधेम ते नाम । विधेस्त्वमस्माकं नाम । मा देवानां तन्तुश्छेदि मा मनुष्याणाम् ॥ १२ ॥ Cf. KS. IX, 9; MS. I, 9, 4. 1.

इति कपिष्ठलकठसंहितायामष्टमो ऽध्यायः ॥

---

1. KS. अग्नित्.

# अथ

# कपिष्ठलकठसंहितायां

# चतुर्थमष्टकम्

ओम्[1] ॥

उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वं सुप्रतीको विभावसुः ॥
प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वा प्रजाः ॥
अक्रन्ददग्निः[2] ॥ 5
अन्नपते अन्नस्य नो दे[3]ह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥
समिधाग्निं दुवस्यत[4] ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥ 10
आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने कृणुध्वं सुरभावु लोके ।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्योनम्[5] ॥
अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ।
गर्भे संजायसे पुनः ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । 15
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥

1. The ms. begins the aṣṭaka with ओं नमो श्री विनायकाय ॥
2. KS. gives the verse sakalapāṭhena, although it has already occurred in XVI, 8. 9 (p. 229, ll. 13-14; p. 230, ll. 19-20). The Kap. pratīka indicates that either one or both the sections XVI, 8. 9 of Kāṭh. formed a part of Kap.
3. The ms. धे॰.
4. KS. repeats the entire verse, for which see Kap. VI, 2.
5. KS. स्वेनम्. See Schroeder's note on MS. स्वेनत्.

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थे ऽन्तरस्यां शिवतमः ॥
5 पुनरूर्जा ॥ सह रय्या ॥
बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति[2] त्वो अनु त्वो गृणाति वन्दारुस्ते[3] तन्वं वन्दे अग्ने ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः ।
युयोध्यस्मद्द्वेषांसि ॥ १ ॥ Cf. XXXI, 2; KS. XVI, 10; XIX, 12; MS. II, 7, 10; III, 2, 2; TS. IV, 2, 3; V, 2, 2.

10 अपेत वीत वि च सर्पतातो ये ऽत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमो ऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥
संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात् । अग्नेर्भस्मासि । अग्नेः पुरीषमसि । चित स्थ परिचित ऊर्ध्वचितः श्रयध्वम् ॥
अयं सो अग्निर्यस्मिन्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
15 सहस्रिणं वाजमत्यं न सप्तिं ससवान्सन्स्तूयसे जातवेदः ॥
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।
याश्चा[4]वस्तादुपतिष्ठन्त आपो या वा परो रोचने सूर्यस्य ॥
अग्ने यत्ते दिवि वर्चः पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ॥
20 पुरीष्यासो अग्नयः प्रावणेभिः[5] सजोषसः ।
जुषन्तां हव्यमाहुतमनमीवा इषो महीः ॥
इडामग्ने पुरुंदंसं[6] सनिं गोः शश्वत्तमं हवमानाय साध ।

1. For sakalapāṭha see VIII, 2.
2. KS. MS. निन्दति. Kap. follows R̥V. I, 147, 2.
3. KS. MS. वन्दारुं ते. Kap. agrees with R̥V. ib.
4. KS. यास्त्वा॰.
5. KS. प्रवणेन. Kap. is identical with R̥V. III, 22, 4.
6. The ms. पुरू॰.

स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥
अयं ते योनिर्ऋत्वियः[1] ॥
चिदसि । तया देवतयाङ्गिरस्वद् ध्रुवा सीद । परिचिदसि । तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥
समितं संकल्पेथां संप्रियौ रोचिष्णू सुमनस्यमानौ । 5
इषमूर्जमभिसंवसानौ ॥
सं वां मनांसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥
अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमाँ[2] असि ।
शिवाः कृत्वा दिशः सर्वाः स्वं[3] योनिमिहासदः ॥ 10
भवतं नः समनसौ[4] ॥
मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनावभारुखा ।
तां विश्वे देवा ऋतुभिः संविदानाः प्रजापतिर्विश्वकर्मा विमुञ्चतु ॥ २ ॥

Cf. XXXI, 3; KS. XVI, 11; XX, 1; MS. II, 7, 11; III, 2, 3; TS. IV, 2, 4. 5; V, 2, 3. 4.

यदस्य पारे रजसश्चित्रं ज्योतिरजायत ।
तन्नः पर्षदति द्विषो[5] अग्ने वैश्वानर द्युमत् ॥ 15
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्विहि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते[6] तुभ्यमस्तु ॥
यत्ते अस्मिन्घोर आसन्जुहोम्येषां बन्धानामवसर्जनाय कम् ।
यां त्वा जनो भूमिरिति प्रमन्दते[7] निर्ऋतिरिति त्वाहं परि वेद विश्वतः ॥ 20
नमः सु ते निर्ऋते तिग्मतेजो ऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधि रोहयैनम् ॥

1. KS. repeats the whole mantra. For Kap. sakalapāṭha see I, 16.
2. The ms. पुष्टिमं.
3. The ms. स्वयं.
4. KS. repeats the whole mantra. For Kap. sakalapāṭha see II, 11.
5. The ms. परिषदति द्वेषो.
6. The ms. निर्ऋति.
7. The ms. प्रवंधते.
8. The ms. नमस्तु.

यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् ।
तं ते विष्याम्यायुषो नु मध्ये ऽधा विषितः पितुमाद्धि प्रमुक्तः ॥
निवेशनः संगमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥
5 सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥
युनक्त सीरा वि युगा तनोत कृते योनिर्वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात्[1] ॥
पूषा युनक्तु सविता युनक्तु बृहस्पतिः सविता देवो अग्निः ॥
10 शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहान्[2] ।
शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम् ॥
लाङ्गलं पवीरवं सुशेवं सोमपित्सरु ।
उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥
घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः ।
15 ऊर्जो भागं मधुमत्पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व ॥
विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारम् ।
ज्योतिरापाम ॥
कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥ ३ ॥ Cf. XXXI, 4; KS. XVI, 12; XX, 2; MS. II, 7, 12; III, 2, 4; TS. IV, 2, 5; V, 2, 4.
20 या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रतो[3] यूयमिमं मे अगदं कृत ॥

1. So also ṚV. X, 101, 3. Devapāla (Prof. Caland's copy) also quotes पक्वमेयात्. KS. reads पक्वमायत्.

2. KS. ṚV. IV, 57, 8 वाहैः. Kap. agrees with AV. III, 17, 5; TS. IV, 2, 5, 6.

3. So also MS. KS. ०क्रतवो.

पुष्पवतीः प्रसूमतीः फलिनीरफला उत ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।
रपांसि विघ्नतीरित रक्षश्चातयमानाः ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथं[1] पूरुषम् ॥
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥
यदोषधयः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष[2] ॥
अति विश्वाः परिष्ठा स्तेन इव व्रजमक्रमुः ।
ओषधयः प्राचुच्यवुर्यत्किंच[3] तन्वो रपः ॥
यास्त आतस्थुरात्मानमाविविशुः परुष्परुः[4] ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥
यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
निष्कृतिर्नाम वो[5] माताथो यूयं स्थ निष्कृतीः[6] ।
सीराः[7] पतत्रिणी स्थन[8] यदामयति निष्कृथ[9] ॥

1. KS. सनवाथ. Kap. follows Ṛ.V. X, 97, 5. One of Kāṭh. mss. also has सनवथ. MS. padapāṭha ms. agrees with Kap.
2. The ms. तव पुरुषः.
3. KS. ०चित्. Kap. follows Ṛ.V. X, 97, 10.
4. The ms. ०विविशुष्प०.
5. The ms. निःकृतिर्नामावा (wrongly written for मावा=म वो ).
6. The ms. तिः. KS. त्वमसि निष्कृतिः. Ṛ.V. X, 97, 9 agrees with Kap.
7. Thus Ṛ.V. ib. The ms. सुराः. KS. सराः.
8. KS. स्थ. Kap. follows Ṛ.V. ib.
9. KS. MS. TS. निष्कृत. Kap. follows Ṛ.V. ib.

साकं यक्ष्म प्रपत चाषेण किकिदीविना ।
साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥
अन्या वो अन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥
5 अवपतन्तीरवदन्दिवो ऽन्तेभ्यस्परि[1] ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः[2] ॥ ४ ॥ Cf. KS. XVI, 13; MS. II, 7, 13; TS. IV, 2, 6.

मा नो हिंसीज्जनिता यः पृथिव्या[3] यो वा[4] दिवं सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
10 वपां ते अग्निरिषितो अरोहत् ॥
अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि ॥
इषमूर्जमहमित आदमृतस्य[5] योनिं महिषस्य धाराम् ।
आ नो गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥
15 अग्ने तव श्रवो वयो महि भ्राजन्ते[6] अर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे ॥
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रः पितरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
20 त्वे विश्वे संदधुर्भूरिवर्पसाश्चित्रोतयो वामजाताः ॥
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो विराजसि[7] पृणक्षि सानसिं रयिम् ॥

1. The ms. अवपश्य०.
2. The ms. पुरुष. Three more verses follow in KS.
3. The ms. पृथिव्यां.
4. KS. omits वा. Kap. agrees with ṚV. X, 121, 9.
5. KS. आघृतस्य.
6. KS. भ्राजन्त्य०. Kap. agrees with ṚV. X, 140, 1.
7. The ms. विराजति.

ऋतावानं महिषं विश्वदर्शतमग्निꣳ[1] सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमं त्वा युजा विप्रासो मानुषा युगा ॥
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसे[2] महे ।
रातिं वामस्य सुभगां महीमिषं पृणक्षि दर्शतं क्रतुम् ॥
आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । 5
भवा वाजस्य संगथे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व [॥ ५ ॥]

Cf. XXXI, 6; KS. XVI, 14; XX, 4; MS. II, 7, 14; III, 2, 5; TS. IV, 2, 7; V, 2, 5, 6.

अपां पृष्ठमसि[3] ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । 10
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
द्रप्सश्चस्कन्द[4] ॥
नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि । 15
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥
य इषवो यातुधानानां[5] ये वा वनस्पतींरनु ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥
ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
ये अप्सु सदांसि चक्रिरे तेभ्यः सर्पेभ्यो नमः ॥ 20

1. The ms. adds न.
2. KS. शवसे. Cf. ṚV. X, 140, 5 राधसो महः.
3. KS. gives the complete verse. For sakalapāṭha we have to refer back to the Kap. anuvāka corresponding to KS. XVI, 3 (p. 238, ll. 4-5), which is now lost.
4. KS. gives the complete verse. For an earlier reference see Kāṭh. XIII, 9 (p. 191, ll. 20-21).
5. The ms. येषु वा यातुधानानां. KS. येषु वा यातुधाना. Cf. MS. TS. VS. XIII, 7.

कृणुष्व पाजः प्रसितिं[1] न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानो ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥
5 प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥
उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्रां ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने[2] ।
10 अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥
अग्नेस्त्वा तेजसा सादयामि । इन्द्रस्य त्वौजसा सादयामि ॥
अयमग्निः [[3]सहस्रिणो वाजस्य शतिनस्पतिः ।
मूर्धा कवी रयीणाम् ॥ ......[4] ॥ ६ ॥] Cf. XXXI, 7; KS. XVI, 15; XX, 5; MS. II, 7, 15; III, 2, 6; TS. IV, 2, 8; V, 2, 6, 7.

1. The ms. प्रासृतिं. This and the next four mantras are Ṛ.V. IV, 4, 1–5.

2. The ms. ०दाविः कृणुष्व दैव्यानग्ने.

3. Here there is a lacuna due to the loss of one leaf.

4. The Kāṭhaka text is as follows:

भुवो यज्ञस्य रजसश्च नेता
यत्रा नियुद्भिस्सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां
जिह्वामग्ने चकृषे हव्यवाहम् ॥ १५ ॥

For references see above.

ध्रुवासि धरुणास्तृता विश्वकर्मणा । मा त्वा समुद्र उद्वधीन्मा सुपर्णः । अव्यथमाना पृथिवीं दृंह । प्रथो ऽसि पृथिव्यसि भूरासि भूमिरस्यदितिरसि । तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥

काण्डात्काण्डात्प्ररोहन्ती परुषस्परुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यै ते देवीष्टके विधेम हविषा वयम् ॥
यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥
या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते ॥

विराड । ज्योतिरधारयत् । स्वराड् ज्योतिरधारयत् । अषाढासि सहमाना सहस्वारातिं सहस्व पृतनायतः । सहस्रवीर्यासि । सा मा जिन्व ॥

मही द्यौः पृथिवी च न
इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥
विष्णोः कर्माणि पश्यत
यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यस्सखा ॥

योऽ[1] अग्निरग्नेस्तपसो ऽधि जातः शोका[2]त्पृथिव्या उत वा दिवस्परि।
येन प्रजा विश्वकर्मा जजान तम[3]ग्ने हेडः परि ते वृणक्तु ॥
इमं मा हिंसीर्द्विपादं पशूनां सहस्राक्ष मेध आचीयमानः।
मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वं निषीद ॥
मयुं ते शुक्। यं द्विष्मस्तं ते शुगृच्छतु ॥ 5
इयं मा हिंसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद ॥
गौरं ते शुक्। यं द्विष्मस्तं ते शुगृच्छतु ॥
इमं साहस्रं शतधारमुत्सं व्यच्यमानं सरिरस्य मध्ये।
घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्। 10
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद ॥
गवयं ते शुक्। यं द्विष्मस्तं ते शुगृच्छतु ॥
इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम्।

सरित्स्रवन्ति सरितो न धेना
अन्तर्हृदा मनसा यश्चिकित्रे।
घृतस्य धारा अभिचाकशीमि
हिरण्ययो वेतसो मध्ये अग्नेः ॥
ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा। अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च। अग्निर्ज्योतिषा ज्योतिष्मान्। रुक्मो वर्चसा वर्चस्वान्। ध्रुवासि धरुणा। सहस्रदा असि सहस्राय त्वा ॥१६॥ Cf. XX, 6. 7. 8; Kap. XXXI, 8. 9. 10; MS. II, 7, 15. 16. 17; III, 2, 6; TS. IV, 2, 9; V, 2, 8.
आदित्यं गर्भं पयसा समञ्जन्
सहस्रस्य प्रतिमां विश्वरूपम्।
परिवृङ्धि हरसा माभिमंस्थाश्
शतायुषं कृणुहि चीयमानः ॥
वातस्य जूतिं वरुणस्य नाभि-
मश्वं जज्ञानं सरिरस्य मध्ये।
शिशुं नदीनां हरिमद्रिबुध्न-
मग्ने मा हिंसीः परमे व्योमन् ॥
अजस्रमिन्द्रमरुषं भुरण्यु-
मग्निमीडे पूर्वचित्तिं नमोभिः।
स पर्वभिर्ऋतुशः कल्पमानस्
स गां मा हिंसीरदितिं विराजम् ॥
वरुत्रीं त्वष्टुर्वरुणस्य नाभि-
मविं जज्ञानां रजसः परस्मात्।
महीं साहस्रीमसुरस्य मायां
तामग्ने हेडः परि ते वृणक्तु ॥

1. In the ms. this verse is preceded by यो अग्निरग्नेरध्यजायत शोकात्पृथिव्या उत वा दिवस्परि। येन प्रजा विश्वकर्मा जजान तमग्ने हेडः परि ते वृणक्तु ॥
2. The ms. स्तो°.
3. The ms. त्वाम°.

त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् ।
मेषमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद ॥
मेषं ते शुत् । यं द्विष्मस्तं ते शुगृच्छतु ॥
अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे ।
5 तेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यासः ।
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वं निषीद ॥
शरभं ते शुत् । यं द्विष्मस्तं ते शुगृच्छतु ॥ ८ ॥ Cf. KS. XVI, 17; MS, II, 7, 17; TS. IV, 2. 10.

अपां त्वेमन्सादयामि । अपां त्वोद्मन्सादयामि । अपां त्वा भस्मनि सादयामि । अपां त्वा ज्योतिषि सादयामि । अपां त्वायने सादयामि । 10 अर्णवे त्वा सदने सादयामि । समुद्रे त्वा सदने सादयामि । सरिरे त्वा सदने सादयामि । अपां त्वा क्षये सादयामि । अपां त्वा सधिषि सादयामि । अपां त्वा सदने सादयामि । अपां त्वा सधस्थे सादयामि । अपां त्वा योनौ सादयामि । अपां त्वा पुरीषे सादयामि । अपां त्वा पाथिषि[1] सादयामि । गायत्रेण त्वा छन्दसा सादयामि । त्रैष्टुभेन जागतेनानुष्टुभेन पाङ्क्तेन 15 त्वा छन्दसा सादयामि ॥

अयं पुरो भूः । तस्य प्राणो भौवायनः[2] । वसन्तः प्राणायनः । गायत्री वासन्ती । गायत्र्यै[3] गायत्रम् । गायत्रादुपांशुः । उपांशोस्त्रिवृत् । त्रिवृतो रथन्तरम् । वसिष्ठ ऋषिः । प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः[4] । अयं दक्षिणा विश्वकर्मा । तस्य मनो वैश्वकर्मणम्[5] । ग्रीष्मो 20 मानसः । त्रिष्टुब् ग्रैष्मी । त्रिष्टुभः स्वारम् । स्वारादन्तर्यामः । अन्तर्यामात्पञ्चदशः । पञ्चदशाद्बृहद् । भरद्वाज[6] ऋषिः । प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः । अयं पश्चाद्विश्वव्यचाः । तस्य चक्षुर्वैश्वव्यचसम् ।

1. The ms. पथिषि.
2. The ms. भूवा०.
3. The ms. गायत्र्यै.
4. In MS. Schroeder does not construe प्रजाभ्यः with गृह्णामि, but wrongly connects it with the next mantra. The mistake is repeated in the following four formulas.
5. The ms. विश्व०.
6. The ms. भारद्वाज.

वर्षाणि चाक्षुषाणि । जगती वार्षी । जगत्या ऋक्समम् । ऋक्समाच्छुक्रः । शुक्रात्सप्तदशः । सप्तदशाद्वैरूपम्[1] । जमदग्निर्ऋषिः । प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः । इदमुत्तरात्स्वः । तस्य श्रोत्रं सौवम् । शरच्छ्रौत्री । अनुष्टुप् शारदी । अनुष्टुभ ऐडम् । ऐडान्मन्थी । मन्थिन एकविंशः । एकविंशाद्वैराजम् । विश्वामित्र ऋषिः । प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः । इयमुपरि मतिः । तस्या वाङ् मात्या । हेमन्तो वाच्यः । पङ्क्तिर्हैमन्ती । पङ्क्त्या निधनवत् । निधनवत आग्रायणः । आग्रायणात्त्रिणवत्रयस्त्रिंशौ । त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररैवते । विश्वकर्मर्षिः । प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥

लोकं पृण च्छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥
ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ९ ॥ Cf. XXXI, 11. 18; KS. XVI, 18. 19; XX, 9; XXI, 3; MS. II, 7, 18. 19. 8, 1; III, 2, 8; TS. IV, 3, 1. 2; V, 2, 10.

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साध्या ।
उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥
कुलायिनी घृतवती पुरंधिः स्योने सीद सदने पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगाय ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥
स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय ।
पितेवैधि सूनव आ सुशेवः स्वावेशया तन्वा संविशस्व ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥
अग्नेः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ।
अश्विनाध्वर्यू सादयतामिह त्वा ॥

1. The ms. °द्विरूपम्.

आदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशाम् ॥
अधिपत्नी[1] भुवनानामूर्मिर्द्रप्सो अपामसि ।
विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैः । अग्नये त्वा
5 वैश्वानराय । अश्विनाध्वर्यू सादयतामिह त्वा ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजू रुद्रैः सजूरादित्यैः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैः[2] । अग्नये त्वा वैश्वानराय । अश्विनाध्वर्यू सादयतामिह त्वा ॥

प्राणं मे पाहि व्यानं मे पाह्यपानं मे पाहि चक्षुर्म उर्विया विभाहि
10 श्रोत्रं मे श्लोकय । अपः पिन्वौषधीर्जिन्व द्विपादव चतुष्पात्पाहि दिवो वा[3] वृष्टिमेरय ॥ १० ॥ Cf. XXXI, 12; KS. XVII, 1; XX, 10; MS. II, 8, 1. 2; TS. IV, 3, 4.

इति कपिष्ठलकठसंहितायां पञ्चविंशतितमो ऽध्यायः ॥

---




1. KS. अधिपत्नीं. In that case Schroeder ought to have joined अधिपत्नीं भुवनानां with the preceding mantra.

2. KS. omits सजूर्देवैः.

3. Kap. omits वा.

त्र्यविर्वयो गायत्री छन्दः । दित्यवाड् वयस्त्रिष्टुप्छन्दः । पञ्चाविर्वयो विराट् छन्दः । त्रिवत्सो वय उष्णिहा छन्दः । तुर्यवाड् वयो ऽनुष्टुप्छन्दः । पष्ठवाड्वयो बृहती छन्दः । उक्षा वयः ककुप्छन्दः । धेनुर्वयो जगती छन्दः । अनड्वान्वयः पङ्क्तिश्छन्दः । ऋषभो वयः सतोबृहती छन्दः । बस्तो वयो युवलं छन्दः । वृष्णिर्वयो विशालं छन्दः । व्याघ्रो वयो ऽनाधृष्यं छन्दः । सिंहो वयश्छदिश्छन्दः । पुरुषो वयस्तन्द्रं छन्दः । क्षत्रं वयो मयन्दं छन्दः । विष्टम्भो वयो ऽधिपतिश्छन्दः । मूर्धा वयः प्रजापतिश्छन्दः । विश्वकर्मा वयः परमेष्ठी छन्दः ॥ १ ॥ Cf. XXXI, 12; KS. XVII, 2; XX, 10; MS. II, 8, 2; TS. IV, 3, 5; V, 3, 1. 5

इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवम् ।
पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥ 10

राज्ञ्यसि प्राची दिक् । विराडसि दक्षिणा दिक् । सम्राडसि प्रतीची दिक् । स्वराडस्युदीची दिक् । अधिपत्न्यासि बृहती दिक् । आयुर्मे पाहि प्राणं मे पाहि । व्यानं मे पाह्यपानं मे पाहि । चक्षुर्मे पाहि श्रोत्रं मे पाहि[1] । मनो मे पिन्व वाचं मे जिन्व । आत्मानं मे पाहि ज्योतिर्मे यच्छ । मा छन्दः । प्रमा छन्दः । प्रतिमा छन्दः । अस्रीवयश्छन्दः । पङ्क्तिश्छन्दः । उष्णिहा छन्दः । अनुष्टुप्छन्दः । विराट् छन्दः । बृहती छन्दः । गायत्री छन्दः । त्रिष्टुप्छन्दः । जगती छन्दः । पृथिवी छन्दः । अन्तरिक्षं छन्दः । द्यौश्छन्दः । समा छन्दः । नक्षत्राणि छन्दः । वाक् छन्दः । मनश्छन्दः । कृषिश्छन्दः । हिरण्यं छन्दः । गौश्छन्दः । अजा छन्दः । अश्वश्छन्दः । 15

1. The ms. puts these two mantras after वाचं मे जिन्व.

अग्निर्देवता । वातो देवता । सूर्यो देवता । चन्द्रमा देवता । वसवो देवता । रुद्रा देवता । आदित्या देवता । मरुतो देवता । विश्वे देवा देवता । इन्द्रो देवता । वरुणो देवता । बृहस्पतिर्देवता । मूर्धासि राट् । ध्रुवासि धरुणा । धर्त्र्यसि धरणी । आयुषे त्वा । वर्चसे त्वा । कृष्यै त्वा । क्षेमाय त्वा । यन्त्री
5 राट् । यन्त्र्यसि यमनी । ध्रुवासि धरित्री । इषे त्वा । ऊर्जे त्वा । रय्यै त्वा । पोषाय त्वा ॥ २ ॥ Cf. XXXI, 13; KS. XVII, 3; XX, 11; MS. II, 8, 3; III, 2, 9; TS. IV, 3, 6. 7; V, 3, 2.

आशुस्त्रिवृत् । भान्तः पञ्चदशः । व्योमा सप्तदशः । प्रतूर्तिरष्टादशः । तपो नवदशः । अभीवर्तः सविंशः । धरुण एकविंशः । वर्चो द्वाविंशः । संभरणस्त्रयोविंशः । योनिश्चतुर्विंशः । गर्भाः पञ्चविंशः । ओजस्त्रि-
10 णवः । क्रतुरेकत्रिंशः । प्रतिष्ठा त्रयस्त्रिंशः । ब्रध्नस्य विष्टपं चतुस्त्रिंशः । नाकः षट्त्रिंशः । वीवर्तो अष्टाचत्वारिंशः । धर्त्रं चतुष्टोमः ॥

अग्नेर्भागो ऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोमः ॥

इन्द्रस्य भागो ऽसि विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदश स्तोमः ॥

नृचक्षसां भागो ऽसि धातुराधिपत्यं जनित्रं स्पृतं सप्तदश स्तोमः ॥

15 मित्रस्य भागो ऽसि वरुणस्याधिपत्यं दिवो वृष्टिर्वात स्पृत एकविंश स्तोमः ॥

वसूनां भागो ऽसि रुद्राणामाधिपत्यं चतुष्पात्स्पृतं चतुर्विंश स्तोमः ॥

आदित्यानां भागो ऽसि मरुतामाधिपत्यं गर्भा स्पृताः पञ्चविंश स्तोमः ॥

20 अदित्या भागो ऽसि पूष्ण आधिपत्यमोज स्पृतं त्रिणव स्तोमः ॥

देवस्य सवितुर्भागो ऽसि बृहस्पतेराधिपत्यं समीचीर्दिश स्पृताश्चतुष्टोम स्तोमः ॥

यवानां भागो ऽस्ययवानामाधिपत्यं प्रजा स्पृताश्चतुश्चत्वारिंश स्तोमः ॥

25 ऋभूणां भागो ऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तं त्रयस्त्रिंश

स्तोमः ॥ ३ ॥ Cf. XXI, 14. 15. 16; KS. XVII, 4; XX, 12. 13; XXI, 1; MS. II, 8, 4. 5; III, 2, 10; TS. IV, 3, 8. 9; V, 3, 3. 4.

एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् । तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत् । पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत् । सप्तभिरस्तुवत सप्तर्षयो ऽसृज्यन्त धाताधिपतिरासीत् । नवभिरस्तुवत पितरो ऽसृज्यन्तादितिरधिपत्न्यासीत् । 5 एकादशभिरस्तुवतार्तवा असृज्यन्तर्तवो ऽधिपतय आसन् । त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरो ऽधिपतिरासीत् । पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रो ऽधिपतिरासीत् । सप्तदशभिरस्तुवत पशवो ऽसृज्यन्त बृहस्पतिरधिपतिरासीत् । नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ताम् । एकविंशत्यास्तुवतैकशफाः पशवो ऽसृज्यन्त वरुणो 10 ऽधिपतिरासीत् । त्रयोविंशत्यास्तुवत क्षुद्राः पशवो ऽसृज्यन्त पूषाधिपतिरासीत् । पञ्चविंशत्यास्तुवतारण्याः पशवो ऽसृज्यन्त वायुरधिपतिरासीत् । सप्तविंशत्यास्तुवत द्यावापृथिवी व्यैतां वसवो रुद्रा आदित्या[1] अनुव्यायंस्त एवाधिपतय आसन् । नवविंशत्यास्तुवत वनस्पतयो ऽसृज्यन्त सोमो ऽधिपतिरासीत् । एकत्रिंशतास्तुवत प्रजा असृज्यन्त[2] यवाश्चायवाश्चाधिप- 15 तय आसन् । त्रयस्त्रिंशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥ ४ ॥ Cf. KS.XVII, 5; MS. II. 8, 6; TS. IV, 3, 10.

अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमना अहेडञ्छर्मंस्ते स्याम त्रिवरूथ उद्भौ ॥
सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । 20
अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रणुदा नः सपत्नान् ॥
षोडशं[3] स्तोम ओजो द्रविणम् । चतुश्चत्वारिंश स्तोमो वर्चो द्रविणम्[4] ॥

1. KS. MS. omit आदित्या. TS. and VS. XIV, 30 agree with Kap.

2. The ms. अधीयन्त. Cf. the beginning of this section.

3. The ms. षोडशी, but compare the brāhmaṇa.

4. KS. MS. TS. reverse the order of these two mantras. VS. XV, 3 agrees with Kap.

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥
एवश्छन्दः । वरिवश्छन्दः । शम्भूश्छन्दः । परिभूश्छन्दः । आच्छच्छन्दः ।
मनश्छन्दः । व्यचश्छन्दः । सिन्धुश्छन्दः । समुद्रं छन्दः । सरिरं छन्दः ।
5 ककुप्छन्दः । त्रिककुप्छन्दः । काव्यं छन्दः । अङ्कुपं छन्दः । क्षुरो भ्रजश्छन्दः ।
अक्षरपङ्क्तिश्छन्दः । पदपङ्क्तिश्छन्दः । विष्टारपङ्क्तिश्छन्दः । आच्छच्छन्दः ।
प्रच्छच्छन्दः । संयच्छन्दः । वियच्छन्दः । बृहच्छन्दः । रथन्तरं छन्दः ।
निकायश्छन्दः[1] । वीवधश्छन्दः[2] । गिरश्छन्दः[3] । भ्रंजश्छन्दः[4] । संस्तुप्छन्दः ।
अनुष्टुप्छन्दः । एवश्छन्दः । वरिवश्छन्दः । वयश्छन्दः । वयस्कृच्छन्दः ।
10 विशालं छन्दः । विष्पर्धाश्छन्दः । छदिश्छन्दः । दूरोहणं छन्दः । तन्द्रं छन्दः ।
अङ्काङ्कं[5] छन्दः ॥ ५ ॥ Cf. XXXI, 17; KS. XVII, 6; XXI, 2; MS. II, 8, 7; III, 2, 10; TS. IV, 3, 12; V, 3, 5.

रश्मिरसि क्षयाय त्वा क्षयं जिन्व । प्रेतिरसि धर्मणे त्वा धर्म[6] जिन्व ।
अन्वितिरसि दिवे त्वा दिवं जिन्व । संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व ।
प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व । विष्टम्भो ऽसि वृष्ट्यै त्वा वृष्टिं
15 जिन्व । प्रवास्यह्ने त्वाहर्जिन्व । अनुवासि रात्र्यै त्वा रात्रीं जिन्व ।
उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व । प्रकेतो ऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व ।
सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्व । ओजो ऽसि पितृभ्यस्त्वा पितॄ-
ञ्जिन्व । तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व । पृतनाषाडसि पशुभ्यस्त्वा
पशूञ्जिन्व । रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व । अभिजिदसि युक्तग्रावेन्द्राय
20 त्वेन्द्रं जिन्व । अधिपतिरसि प्राणाय त्वा प्राणं जिन्व । धरुणो ऽस्यपा-
नाय त्वापानं जिन्व । संसर्पो ऽसि चक्षुषे त्वा चक्षुर्जिन्व । वयोधा असि
श्रोत्राय त्वा श्रोत्रं जिन्व । त्रिवृदसि त्रिवृते त्वा । सवृदसि सवृते त्वा ।

1. KS. निकायं छन्दः.
2. The ms. वीवृध॰.
3. The ms. गिरि॰.
4. KS. भ्राज॰.
5. KS. अङ्कङ्कं is to be corrected.
6. In KS. Schroeder adopts धर्म, which is found only in one ms. The other ms. has धर्मं. Cf. also KS. XXXVII, 17 (p. 97, l. 12).
7. The ms. न्युदीचीर॰.

प्रवृदसि प्रवृते त्वा । अनूवृदस्यनूवृते[1] त्वा । सैरोहो ऽसि । विरोहो ऽसि[2] । प्ररोहो ऽसि । अनूरोहो ऽसि । वसुको ऽसि । वस्यष्टिरसि । वेषश्रीरसि । देवस्य सवितुः प्रसवे बृहस्पतये स्तुत ॥ ६ ॥ Cf. KS. XVII, 7; XXXVII, 17; MS. II, 8, 8; TS. IV, 4, 1; III, 5, 2; V, 3, 6.

राज्ञ्यसि प्राची दिक् । वसवस्ते देवा अधिपतयः । अग्निर्हेतीनां प्रतिधर्ता । त्रिवृत्त्वा स्तोमः पृथिव्यां श्रयतु । आज्यमुक्थमव्यथायै[3] स्तभ्नातु । 5 रथन्तरं साम प्रतिष्ठित्या अन्तरिक्षम् । ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु । विधर्ता चायमधिपतिः । ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥

विराडसि दक्षिणा दिक् । रुद्रास्ते देवा अधिपतयः । सोमो[4] हेतीनां प्रतिधर्ता । पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयतु । प्रउगमुक्थमव्यथायै[5] 10 स्तभ्नातु । बृहत्साम प्रतिष्ठित्या अन्तरिक्षम् । ऋषयस्त्वा प्रथमजाः ०[6] ॥

सम्राडसि प्रतीची दिक् । आदित्यास्ते देवा अधिपतयः । इन्द्रो[7] हेतीनां प्रतिधर्ता । सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयतु । मरुत्वतीयमुक्थमव्यथायै[5] स्तभ्नातु । वैरूपं साम प्रतिष्ठित्या अन्तरिक्षम् । ऋषयस्त्वा प्रथमजाः ०[6] ॥ 15

स्वराडस्युदीची दिक् । मरुतस्ते देवा अधिपतयः । वरुणो हेतीनां प्रतिधर्ता । एकविंशस्त्वा स्तोमः पृथिव्यां श्रयतु । निष्केवल्यमुक्थमव्यथायै[5] स्तभ्नातु । वैराजं साम प्रतिष्ठित्या अन्तरिक्षम् । ऋषयस्त्वा प्रथमजाः ०[6] ॥

अधिपत्न्यसि बृहती दिक् । विश्वे ते देवा अधिपतयः । बृहस्पतिर्हेतीनां प्रतिधर्ता । त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयताम् । 20 वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नीताम् । शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षम् । ऋषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा

1. The ms. अनूवृधः । स्यनूवृधे.

2. This mantra is omitted in the ms.

3. KS. ०मव्यथाय. MS. and VS. XV, 10 agree with Kap.

4. The other Saṃhitās इन्द्रो.

5. KS. ०मव्यथाय. See note 3.

6. KS. gives the full text.

7. KS. MS. TS. सोमो.

प्रथन्तु । विधर्ता चायमधिपतिः । ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ ७ ॥ Cf. KS. XVII, 8; MS. II, 8, 9; TS. IV, 4, 2.

अयं पुरो हरिकेशः सूर्यरश्मिः । तस्य रथकृत्सश्च रथौजाश्च सेनानीग्रामण्यौ । पुञ्जिकस्थला[1] च कृतस्थला चाप्सरसौ । यातुधाना हेतिः । 5 रक्षांसि प्रहेतिः । ते नः पान्तु । ते नो ऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

अयं दक्षिणा विश्वकर्मा । तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ । मेनका च सहजन्या चाप्सरसौ । दङ्क्ष्णवः पशवो हेतिः । पौरुषेयो वधः प्रहेतिः । ते नः पान्तु[2] ॥

10 अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोथश्चासमरथश्च सेनानीग्रामण्यौ । प्रम्लोचन्ती चानुम्लोचन्ती[4] चाप्सरसौ । व्याघ्रा हेतिः । सर्पाः प्रहेतिः । ते नः पान्तु[2] ॥

अयमुत्तरात्संयद्वसुः । तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ । विश्वाची च घृताची चाप्सरसौ । आपो हेतिः । वातः प्रहेतिः । ते 15 नः पान्तु[2] ॥

अयमुपर्यर्वाग्वसुः । तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ । उर्वशी च पूर्वचित्तिश्चाप्सरसौ । अवस्फूर्जन्[5] हेतिः । विद्युत्प्रहेतिः । ते नः पान्तु । ते नो ऽवन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ ८ ॥ Cf. KS. XVII, 9; MS. II, 8, 10; TS. IV, 4, 3.

आयोस्त्वा सदने सादयाम्यवतश्छायायाम् । नमः समुद्राय । नमः 20 समुद्रस्य चक्षसे ॥

प्रोथदश्वो न यवसे ऽविष्यन्यदा महः संवरणाद्[6]व्यस्थात् ।
आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनमस्तु कृष्णम् ॥

1. KS. पुञ्जिग०
2. KS. gives the full text.
3. Thus the ms. KS. रथप्रोत०.
4. The ms. चानि०.
5. KS, MS. अवस्फूर्जद्.
6. KS. संवरणे for संवरणाद्.

बृहस्पतिस्त्वा[1] सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानायापानाय । विश्वं ज्योतिर्यच्छ । अग्निष्टे ऽधिपतिः । विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानायापानाय । विश्वं ज्योतिर्यच्छ । वायुष्टे ऽधिपतिः । प्रजापतिस्त्वा[2] सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानायापानाय । विश्वं ज्योतिर्यच्छ । 5
सूर्यस्ते[3] ऽधिपतिः ॥

मधुश्च माधवश्च वासन्तिकावृतू । अग्नेरन्तःश्लेषो ऽसि ॥
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः[4] ॥
ये अग्नयः समनसो ऽन्तरा द्यावापृथिवी । 10
इमे वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥
शुक्रश्च शुचिश्च ग्रैष्मावृतू[5] । अग्नेरन्तःश्लेषो ऽसि ॥
कल्पेताम् ॥
नभश्च नभस्यश्च वार्षिकावृतू । अग्नेरन्तःश्लेषो ऽसि ॥
कल्पेताम् ॥ 15
इषश्चोर्जश्च शारदावृतू । अग्नेरन्तःश्लेषो ऽसि ॥
कल्पेताम् ॥
सहश्च सहस्यश्च हैमन्तिकावृतू । अग्नेरन्तःश्लेषो ऽसि ॥
कल्पेताम् ॥
तपश्च तपस्यश्च शैशिरावृतू[6] । अग्नेरन्तःश्लेषो ऽसि ॥ 20
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥
ये अग्नयः समनसो ऽन्तरा द्यावापृथिवी ।
इमे शैशिरावृतू[6] अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु ॥

1. KS. प्रजापति॰.
2. KS. परमेष्ठी त्वा.
3. The ms. सूर्यष्टे.
4. The ms. सु॰.
5. The ms. ग्रीष्मा॰
6. The ms. शिशिरा॰.

सहस्रस्य प्रमासि । सहस्रस्य प्रतिमासि । सहस्रस्योन्मासि । साहस्रो ऽसि । सहस्राय त्वा । इमा मे अग्न[1] इष्टका धेनवः सन्तु ॥

एका च दश च[2] । शतं च सहस्रं च[3] । अयुतं च प्रयुतं च[4] । नियुतं चार्बुदं च । अर्बुदं च न्यर्बुदं च । समुद्रश्च मध्यं च । अन्तश्च परार्धश्च । ता मे
5 अग्न इष्टका धेनवः सन्तु ॥

ऋतवः स्थर्तावृधः । ऋतुष्ठा स्थर्तुस्पृशो घृतश्च्युतो मधुश्च्युत ऊर्जस्वतीः स्वधायिनीर्विराजो नाम कामदुघाः[5] ॥ ९ ॥ Cf. XXXI, 18; KS. XVII, 10; XXI, 3; MS. II, 8, 12. 14; III, 3, 3. 4; TS. IV, 4, 3. 6, 11.

इति कपिष्ठलकठसंहितायां षड्विंशतितमो ऽध्यायः ॥

---

1. The ms. इमा ने अग्नय.
2. KS. adds दश च शतं च.
3. KS. adds सहस्रं चायुतं च.
4. KS. adds प्रयुतं च नियुतं च.
5. KS. adds ता म अग्न इष्टका धेनवस्सन्तु.

नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः ।
उतो त इषवे नमः ॥
या ते रुद्र शिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा[1] शंतमया गिरिशन्ताभिचाकशीहि ॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । 5
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥
शिवेन वचसा त्वां गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भयन्[2]सर्वाश्च यातुधान्यो ऽधराचीः परासुव ॥ 10
असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चेमे रुद्रा अभितो दिक्षु श्रिताः सहस्रशो ऽवैषां हेड ईमहे ॥
असौ यो ऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः ।
स दृष्टः किं करिष्यति[3] ॥ 15
नमो ऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानो ऽहं तेभ्यो अकरं नमः ॥
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।

1. The ms. omits त्वा.

2. KS. जम्भय for जम्भयन्. MS. TS. VS. XVI, 5 agree with Kap.

3. Kap. is very defiant. Cf. the other Saṃhitās : स दृष्टो मृडयाति (MS. ॰तु) नः.

याश्च ते हस्त इषवः परा ता भगवो वप ॥
त्रिज्यं धनुः कपर्दिनो विशल्यो बाणवानुत ।
अनेशन्नस्येषव आभुरस्य[1] निषङ्गधिः[2] ॥
या ते हेतिर्मीढुष्टम[3] हस्ते बभूव ते धनुः ।
5 तयास्मान्विश्वतस्त्वमयक्ष्मेण परिभुज ॥
परि ते धन्वनो हेतिरस्मान्वृणक्तु[4] विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥
नमांसि त आयुधाया[5]नातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥
10 अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखं शिवो नः सुमना भव ॥
या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥ १ ॥ Cf. KS. XVII, 11; MS. II, 9, 2; TS. IV, 5, 1.

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः । नमो वृक्षेभ्यो
15 हरिकेशेभ्यः पशूनां पतये नमः । नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमः । नमो बभ्लुशाय व्याधिने ऽन्नानां पतये नमः । नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः । नमो भवस्य हेत्यै जगतस्पतये नमः । नमो रुद्रायाततायिने क्षेत्राणां पतये नमः । नमः सूतायाहन्त्याय वनानां पतये नमः । नमो रोहिताय स्थपतये वृक्षाणां पतये नमः ।
20 नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमः । नमो भुवन्तये वारिवस्कृता[6]यौषधीनां पतये नमः । नम आक्रन्दयत उच्चैर्घोषाय सत्त्वानां पतये नमः । नमः कृत्स्नवीताय[7] धावते पत्तीनां पतये नमः । नमः सह-

1. MS. padapātha ms. TS. VS. XVI, 10 also आभुः; KS. MS. आभूः.
2. MS. var. lec. VS. ib. agree with Kap.; KS. MS. TS. read निषङ्गथिः.
3. The ms. हेतिर्मां for हेति.
4. The ms. वृणोतु.
5. The ms. नमांसि पुष्णाया॰.
6. The ms. ॰धा॰.
7. Thus KS. The ms. कृछ्रविताय. MS. and TS. कृत्स्नवीताय.

मानाय निव्याधिन आव्याधिनीनां पतये नमः । नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमः । नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः । नमो निचराय परिचरायारण्यानां पतये नमः । नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमः । नमः सृगायुभ्यो[1] जिघांसद्भ्यो मुष्णतां पतये नमः । नमो ऽसिमद्भ्यो नक्तं चरेभ्यः[2] प्रकृन्तानां पतये नमः । नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः ॥ २ ॥ Cf. KS. XVII, 12; MS. II, 9, 3; TS. IV, 5, 2. 3.

नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः । नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमः । नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमः । नम आयच्छद्भ्यो ऽस्यद्भ्यश्च वो नमः । नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमः । नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमः । नमः शयानेभ्य आसीनेभ्यश्च वो नमः । नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः । नमः सभाभ्यः सभापतिभ्यश्च वो नमः । नमो ऽश्वेभ्यो ऽश्वपतिभ्यश्च वो नमः । नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमः । नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः । नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमः । नमो गणेभ्यो गणपतिभ्यश्च वो नमः । नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमः । नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः । नमः सेनाभ्यः सेनानीभ्यश्च वो नमः । नमो रथिभ्यो वैरूथिभ्यश्च[3] वो नमः । नमो महद्भ्यो ऽर्भकेभ्यश्च वो नमः[4] । नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः । नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः । नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमः । नमः श्वनिभ्यो मृगयुभ्यश्च[5] वो नमः । नमः श्वभ्यः श्वपतिभ्यश्च वो नमः[6] । नमो भवाय च रुद्राय च । नमः शर्वाय च पशुपतये च । नमो

1. KS. VS. XVI, 21 सृकायिभ्यो. Cf. MS. सृगायिभ्यो, and var. lect. सृगायद्भ्यो, सृगायुद्भ्यो.

2. The ms. नक्तं चरेभ्यः, The other Saṃhitās नक्तं चरद्भ्यः.

3. The ms. वि०.

4. KS. adds: नमो युवभ्य आशिनेभ्यश्च वो नमो.

5. Thus the other Saṃhitās. The Kap. ms. मृगयिद्भ्यश्च. Cf. MS. var. lec. मृगयिभ्यश्च.

6. The ms. omits this mantra. Probab-

नीलग्रीवाय च शितिकण्ठाय च । नमः कपर्दिने च व्युप्तकेशाय च । नमः सहस्राक्षाय च शतधन्वने च ॥ ३ ॥ Cf. KS. XVII, 13; MS. II, 9, 4. 5; TS. IV, 5, 3. 4. 5.

नमो गिरिशाय च शिपिविष्टाय च । नमो मीढुष्टमाय चेषुमते च । नमो ह्रस्वाय च वामनाय च । नमो बृहते च वर्षीयसे[1] च । नमो 5 वृद्धाय च सुवृद्धिने[2] च । नमो ऽग्र्याय च प्रथमाय च । नम आशवे[3] चाजिराय च । नमः शीभाय च शीघ्राय च । नम ऊर्म्याय चावस्वन्यार्ये च । नमो नाद्याय च द्वीप्याय च । नमो ज्येष्ठाय च कनिष्ठाय च । नमः पूर्वजाय चापरजाय च । नमो मध्यमाय चापगल्भाय च । नमो बुध्न्याय च जघन्याय च । नमः सोभ्याय च प्रतिसर्याय[5] च । 10 नम आशुषेणाय चाशुरथाय[6] च । नमो बिल्मिने च कवचिने च । नमो वर्मिणे च वरूथिने च । नमः शूराय चावभेदिने च । नमः श्रुताय च श्रुतसेनाय च । नमो याम्याय च क्षेम्याय च । नम उर्वर्याय च खल्याय च । नमः श्रवाय च प्रतिश्रवाय च । नमः श्लोक्याय चावसान्याय च । नमो कक्ष्याय च वन्याय च । नमो दुन्दुभ्याय चाहनन्याय च । नमो धृष्णवे च प्रमृशाय च । नमो निषङ्गिणे चेषुधिमते च । नमस्तीक्ष्णेषवे चायुधिने च । नमः स्वायुधाय च सुधन्वने च ॥ ४ ॥ Cf. KS. XVII, 14; MS. II, 9, 5. 6. 7; TS. IV, 5, 5. 6. 7.

नम स्रुत्याय[7] च पथ्याय च । नमः काट्याय च नीप्याय च । नमो नाद्याय च वैशन्तार्य[8] च । नमः कुल्याय च सरस्याय च । नमः कूप्याय चावट्याय च । नमो वर्ष्याय[9] चावर्ष्याय[10] च । नमो मेघ्याय च विद्यु-

ly the omission is due to copyist's oversight. Cf. MS. TS. VS. XVI, 28.

1. The ms. वरिषीयसे.

2. Every Saṃhitā presents a different reading: KS. सवृध्वने, MS. सुवृध्वने, TS. संवृध्वने, VS. XVI, 30 सवृधे.

3. The ms. आशिषे.

4. The ms. ०स्विन्याय.

5. Thus the ms. KS. TS. VS. XVI, 33 प्रतिसर्याय, MS. प्रतिसराय.

6. The ms. ०रथ्याय.

7. Thus MS. TS. VS. XVI, 37. The ms. श्रु०, KS. स्र०.

8. The ms. वैशंन्याय.

9. The ms. वरिष्याय.

10. The ms. चावरिष्याय.

त्याय च। नमो वीध्रियाय चातप्याय च। नमो वात्याय च रेष्म्यार्य[1] च। नमो वास्तव्याय च वास्तुपाय च। नमः सोमाय च रुद्राय च। नमस्ताम्राय चारुणाय च। नमः शंगवे च पशुपतये च। नम उग्राय च भीमाय च। नमो हन्त्रे च हनीयसे च। नमो ऽग्रेवधाय च दूरेवधाय च। नमो वृक्षेभ्यो हरिकेशेभ्यः। नमस्ताराय। नमः शंभवे[2] च मयोभवे[3] च। नमः शंकराय च मयस्कराय च। नमः शिवाय च शिवतराय च। नमः किंशिलार्य[4] च क्षयणाय च। नम इरिण्यार्य[5] च प्रपथ्याय च। नमः पुलस्तिने[6] च कपर्दिने च। नमो गोष्ठ्याय च गृह्याय[7] च। नमस्तल्प्याय च गेह्यार्य च। नमः पार्याय चावार्याय च। नमः प्रतरणाय चोत्तरणाय च। नमस्तीर्थ्याय च कूल्यार्य[8] च। नमः फेन्याय च शष्प्याय च। नमः सिकत्याय च प्रवाह्याय च। नमो ह्रदव्याय च निवेष्याय च। नमः काट्याय च गह्वरेष्ठाय च। नमः शुष्यार्य[9] च हरित्याय च। नमो लोप्याय चोलप्यार्य[10] च। नमः पांसव्याय च रजस्याय च। नमः सूर्म्याय चोर्म्याय च। नमः पर्णार्य[11] च पर्णशदार्य[12] च। नम आखिदते च प्रखिदते च। नमो ऽभिघ्नते[13] चापगुरमाणाय च। नम आखिदाय च विखिदाय च ॥ ५ ॥ Cf. KS. XVII, 15; MS. II, 9, 6. 7. 8; TS. IV, 5, 7. 8. 9.

नमो वः किरिकेभ्यो देवानां हृदयेभ्यः। नमो विचिन्वत्केभ्यः। नमो विक्षिणत्केभ्यः[14]। नम आनिर्हतेभ्यः ॥

द्रापे अन्धसस्पते दरिद्र नीललोहित।

1. The ms. रेष्माय.
2. The ms. शंभुवे.
3. The ms. मयोभुवे.
4. The ms. किंशलाय.
5. The ms. इररयाय. So also some MS. mss.
6. The ms. पुलस्थिने.
7. The ms. गृह्याय.
8. The ms. कुल्याय.
9. Thus the ms. and MS. शुष्क्याय of KS. TS. VS. XVI, 45 suits the context better.
10. The ms. चोलुप्याय.
11. Thus also MS. VS. XVI, 46; KS. TS. पर्ण्याय.
12. Thus also VS. ib.; KS. MS. ॰शादाय; TS. ॰शद्याय.
13. The ms. विघ्नते.
14. Thus VS. XVI, 46; the ms. विच्किणत्केभ्यः; KS. TS. विक्षीणकेभ्यो; MS.

आसां प्रजानामेषां पुरुषाणामेषां पशूनाम् ।
मा भैर्मा रुड्[1] मा नः किञ्चनाममत् ॥
इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥
या ते रुद्र शिवा तनूः शिवा विश्वाह भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥
परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान उच्चर पिनाकं बिभ्रदुच्चर ॥
विकिरिद्र[2] विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्रं हेतयो ऽन्यमस्मन्निवपन्तु ताः ॥
सहस्रधा सहस्राणि हेतयस्तव बाह्वोः ।
तासामीशानो भगवः पराचीना मुखा कुरु ॥
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये अस्मिन्महत्यर्णवे अन्तरिक्षे भवा अधि ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपाश्रिताः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये वनेषु[3] शष्पिञ्जरा नीलग्रीवा विलोहिताः[4] ।

आक्षिणाकेभ्यो.

1. Thus MS. The ms. मा भिर्मा रूर्. Cf. भेः, रोक् of VS. XVI, 47 and भः, रौक् of KS.

2. Thus VS. XVI, 52 and MS. pada-pāṭha ms. The ms. तिकिरिद्र. KS. विकिरिड. TS. विकिरिद.

3. MS. TS. VS. XVI, 58 substitute वृक्षेषु.

4. KS. विलीहिताः to be corrected.

तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये ऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥ 5
ये पथीनां पथिरक्षय ईलमृडा यवर्धः[1] ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितस्थिरे[2] । 10
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥

नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः[3] । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु । ते नो मृडयन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥

नमो अस्तु रुद्रेभ्यो ये ऽन्तरिक्षे येषां वात इषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु । ते नो मृडयन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ 15

नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः । तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः । तेभ्यो नमो अस्तु । ते नो मृडयन्तु । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ ६ ॥ 20

Cf. KS. XVII, 16; MS. II, 9, 9; TS. IV, 5, 9. 10. 11.

इति कपिष्ठलकठसंहितायां सप्तविंशतितमो ऽध्यायः ॥

---

1. Thus the ms. The sense is not clear. Cf. KS. ऐडमृदा यव्युधः, MS. ऐलमृडा वो युधः, TS. ऐलबृदा यव्युधः, VS. XVI, 60 ऐलबृदा आयुर्युधः.

2. Thus all the Saṃhitās. The ms. विचष्टिरे.

3. The ms. वरिषमि॰.

अश्मन्नूर्जं पर्वते शिश्रियाणामद्भ्य
ओषधीभ्यो वनस्पतिभ्यो ऽधि संभृताम् ।
तां न ऊर्जं धत्त मरुतः संरराणा
अश्मंस्ते क्षुद्‌धं द्विष्मस्तं ते शुगृच्छतु ॥
5 समुद्रस्य त्वावकयाग्ने परिव्ययामसि ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥
उप ज्मन्नुप वेतसे ऽवतर नदीष्वा ।
10 अग्ने पित्तमपामसि मण्डूकि ताभिरागहि ।
सेमं नो यज्ञं पावकवर्णं शिवं कृधि ॥
अपामिदं न्ययनं समुद्रस्य विमोचनम् ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
15 आ देवान्वक्षि यक्षि च ॥
पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच उषसो न भानुना ।
तुरो न यामन्नेतशस्य नू रण आ यो घृणे न ततृषाणो अजरः ॥
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥

नृषदे वडप्सुषदे[1] वड्वनर्षदे[2] वड् बर्हिषदे वट् स्वर्विदे वट् ॥
ये देवा देवानां यज्ञिया यज्ञियानां संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्स्वयं पिबन्तु मधुनो घृतस्य ॥
ये देवा देवभ्यो अधि देवत्वमायन्ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो नर्ते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु ॥ 5
प्राणदा व्यानदा अपानदा वर्चोदा[3] वरिवोदाः ।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥ १ ॥

Cf. KS. XVII, 17; XXI, 7; MS. II, 10, 1; III, 3, 5. 6; TS. IV, 6, 1; V, 4, 4. 5.

अग्निस्तिग्मेन शोचिषा यांसद्विश्वं न्यत्रिणम् ।
अग्निर्नो वनते रयिम् ॥
य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः । 10
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवरां आविवेश ॥
विश्वकर्मा विमना यो व्योमा धाता विधाता परमोत[5] संदृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तर्षीन्परे एकमाहुः ॥
त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ता सूर्ते[6] रजसि निषत्ता[7] ये भूतानि समकृण्वन्निमानि ॥ 15
यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सन्निनाय ।
यो देवानां नामधा एको अस्ति तं संप्रश्नं[8] भुवना यन्त्यन्या ॥
न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

1. MS. TS. also वट्. KS. VS. XVII, 12 वेट्. Kap. has throughout वट्, which occurs in KS. twelve times.

2. The ms. वनषदे which points to वनर्षदे. KS. वनृषदे, MS. वनर्षदे. Cf. वनसदे in VS. ib. TS. MS. padapāṭha.

3. The ms. °धा. Cf. MS. वर्चोधा वरिवोधाः.

4. In this and the following four sections the Kap. presents a large number of differences from the Kāṭh., and in most instances follows the Ṛgvedic tradition.

5. The ms. परम.

6. The ms. असूर्त्ताः सूर्त्ते.

7. The ms. निसत्ता.

8. The ms. संपृश्नं.

विश्वकर्मा चेदजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
किं[1] स्विद्गर्भं प्रथमं दध्रुरापो[2] यत्र देवाः समपश्यन्त विश्वे ॥
5 तमिद्गर्भं प्रथमं दध्रुरापो[2] यत्र देवाः समपश्यन्त सर्वे ।
अजस्य[3] नामावध्येकमर्पितं तत्रेदं विश्वं भुवनमधि श्रितम्[4] ॥
चक्षुषः[5] पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने[6] ।
यदिद् द्यावापृथिवी अप्रथेतामादिदन्ता अदद्दहन्त पूर्वे ॥
किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
10 मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन् ॥
किं स्विदासीदारम्भणमधिष्ठानं कतमत्स्वित्कथासीत् ।
यतो[7] भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्[8] महिना विश्वचक्षाः ॥
यो विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी[9] जनयन्देव एकः ॥
15 या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं जुषाणः ॥
विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्वं स्वा हि ते ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥
विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
20 तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ॥
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्याहुवेम ।
स नो नेदिष्ठं हवनान्या[10]गमद्विश्वशंभूरवसे साधुकर्मा ॥ २ ॥ Cf. KS. XVIII, 1, 2; MS. II, 10, 2. 3; TS. IV. 6, 1, 2.

1. The ms. किं.
2. Thus the ms. Other Saṃhitās दध्र आपो.
3. The ms. अप्यस्य.
4. The ms. स्रुतम्.
5. The ms. चक्षुषा.
6. The ms. मन्य॰ for नम्र॰.
7. The ms. यतोदद्.
8. The ms. ऊर्णोन् for और्णोन्.
9. The ms. inserts भूमी between द्यावा and पृथिवी.
10. The ms. हवना॰.

उदेनमुत्तरां नयाग्ने घृतेनाहुत ।
रायस्पोषेण संसृज प्रजया च बहुं कृधि ॥
इन्द्रेमं प्रतरं कृधि सजातानामसद्वशी ।
समेनं वर्चसा सृज देवेभ्यो भागदा असत् ॥
यस्य कुर्मो गृहे हविरग्ने वर्धया त्वम् । 5
तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥
उदु त्वा विश्वे देवाः[1] ॥
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे[2] यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥
समिद्धे अग्नावधि मामहान उक्थपत्र ईड्यो गृहीतः[3] । 10
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवाः ॥
दैव्याय धर्त्रे जोष्ट्रे देवश्रीः श्रीमनाः शतपात् ।
परिगृह्य यज्ञमयान् ॥
हरिकेशः सूर्यरश्मिः पुरस्तात्सविता ज्योतिरुदयाँ[4] अजस्रम् ।
तस्य पूषा प्रसवे याति देवः संपश्यन्विश्वा भुवनानि गोपाः ॥ 15
देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतं शमितं शमिता यजध्यै ।
तुर्यो यज्ञो[5] यत्र हव्यमेति ततो वाका आशिषो नो जुषन्ताम् ॥
विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी अन्तरिक्षम् ।
स विश्वाची अभिचष्टे घृताची अन्तरा पूर्वमपरं च केतुम् ॥
उक्षा समुद्रो[6] अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश । 20
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसः पात्यन्तौ ॥
इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥

1. For sakalapāṭha see XXV, 1.
2. The ms. रायस्पोषेण.
3. Other Saṃhitās have the earlier form गृभीतः.
4. Thus TS. VS. XVII, 58. The ms. ०रुदयन्न०. Cf. MS. ०रुदयं अ०.
5. The ms. यज्ञ.
6. In KS. brāhmaṇa XXI, 8 Schroeder also has समुद्रो.

सुम्नहूर्यज्ञ आ च वक्षत् । यक्षदग्निर्देवो देवाँ आ च वक्षत् ॥
वाजस्य मा प्रसवेनोद्ग्राभेणोदजीगृभम् ।
अथा सपत्नानिन्द्रो मे निग्राभेणाधराँ अकः ॥
उद्ग्राभश्च निग्राभश्च ब्रह्म देवाँ अवीवृधत् ।
5 अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥ ३ ॥ Cf. KS. XVIII, 3; XXI, 8; MS. II, 10, 4. 5; III, 3, 8; TS. IV, 6, 3; V, 4, 6.

क्रमध्वमग्निना नाकमुख्यं हस्तेषु बिभ्रतः ।
दिवस्पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥
प्राचीमनु प्रदिशं प्रेहि विद्वान्[2] ॥
पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम् ।
10 दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे[3] ॥
अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥
15 नक्तोषासा[4] ॥
अग्ने सहस्राक्ष शतमूर्धञ्छततेजः शतं ते प्राणाः सहस्रं व्यानाः ।
त्वं साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा ॥
सुपर्णो ऽसि गरुत्मान्पृष्ठे पृथिव्याः सीद ।
भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद्दृंह ॥
20 आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साध्या ।
अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥
तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत्प्रपीनां सहस्रधारां पयसा महीं गाम् ॥

1. KS. सुम्नहुः is to be corrected. Cf. the brāhmaṇa.
2. For sakalapāṭha see VI, 3.
3. The ms. विच्वितेनिरे.
4. For sakalapāṭha see KS. XVI, 8, the corresponding Kap. text having been lost.

अग्ने विधेम ते परमे जन्मन्विधेम स्तोमैरवरे सधस्थे।
यस्माद्योनेरुदारिथा[1] यजा तं प्र त्वे हवींषि जुहुमः समिद्धे ॥
प्रेद्धो अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ।
त्वां शश्वन्त उपयन्ति वाजाः॥
सप्त ते अग्ने समिधः॥ ४ ॥ Cf. KS. XVIII, 4; XXI, 9; MS. II, 10, 6; III, 3, 9; TS. IV, 6, 5; V, 4, 7. 5

आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्।
संक्रन्दनो ऽनिमिष एकवीरः शतं सेना अजयत्साकमिन्द्रः॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥
स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन। 10
संसृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता[3]॥
बृहस्पते परिदीया रथेन रक्षोहामित्रां अपबाधमानः।
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥
बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥ 15
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा।
इमं सजाता अनुवीरयध्वमिन्द्रं सखायो अनु संरभध्वम्॥
अभि गोत्राणि सहसा गाहमानो ऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाडयुध्यो ऽस्माकं सेना अवतु प्र युत्सु॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। 20
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।

1. The ms. °दाहृता.
2. For sakalapāṭha see VI, 8.
3. The ms. °रस्तात्.

अस्माकं वीरा उत्तरे भवन्त्वस्मौ उ देवा अवता हवेषु ॥ ५ ॥ Cf. KS. XVIII, 5; MS. II. 10, 4; TS. IV, 6, 3.

शुक्रज्योतिश्च चित्रज्योतिश्च । सत्यज्योतिश्च ज्योतिष्माँश्च । सत्यश्च-
तपाश्चात्यँहाः । ईदृङ् चान्यादृङ् च । सदृङ् च प्रतिसदृङ् च ।
मितश्च संमितश्च सभराः[1] । ऋतश्च सत्यश्च । ध्रुवश्च धरुणश्च । धर्ता
5 च विधर्ता च विधारय । ऋतजिच्च सत्यजिच्च । सेनजिच्च सुषेणश्च ।
अन्त्यमित्रश्च दूरेअमित्रश्च गणः । ईदृक्षास एतादृक्षास ऊ षु णः ।
सदृक्षासः प्रतिसदृक्षास एतन । मितासश्च संमितासो नो अद्य[2] सभरसो
मरुतो यज्ञे अस्मिन् । इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ।
यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च
10 विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ ६ ॥ Cf. KS. XVIII, 6; MS. II, 11, 1; TS. IV, 6, 5.

वाजश्च मे प्रसवश्च मे । प्रयतिश्च मे प्रसितिश्च मे । धीतिश्च मे क्रतुश्च
मे । स्वरश्च मे श्लोकश्च मे । श्रावश्च मे श्रुतिश्च मे । ज्योतिश्च मे स्वश्च मे ।
प्राणश्च मे व्यानश्च मे । अपानश्च मेऽसुश्च मे । चित्तं च म आधीतं च मे ।
वाक् च मे मनश्च मे । चक्षुश्च मे श्रोत्रं च मे । दक्षश्च मे बलं च मे । ओजश्च
15 मे सहश्च मे । आत्मा च मे तनूश्च मे । शर्म च मे वर्म च मे । अङ्गानि च
मेऽस्थीनि च मे । परूंषि च मे शरीराणि च मे । आयुश्च मे जरा च मे ।
ज्यैष्ठ्यं च म आधिपत्यं च मे । मन्युश्च मे भामश्च मे । अमश्च मे
ऽम्भश्च मे । जेमा च मे महिमा च मे । वरिमा च मे प्रथिमा च मे ।
वर्षिमा च मे द्राघिमा[3] च मे । वृद्धं च मे वृद्धिश्च मे ॥ ७ ॥ Cf. KS. XVIII, 7; MS. II, 11, 2; TS. IV, 7, 1. 2.

20 सत्यं च मे श्रद्धा च मे । जगच्च मे धनं च मे । क्रीडा च मे मोदश्च
मे । वशश्च[4] मे त्विषिश्च मे । सूक्तं च मे सुकृतं च मे । जातं च मे जनिष्य-
माणं च मे । वित्तं च मे वेद्यं च मे । भूतं च मे भविष्यच्च मे । सुगं च मे सुपथ्यं

1. The ms. संभाराः.
2. The ms. नोद्य for नो अद्य.
3. Cf. वर्ष्मा and द्राघ्मा in MS.
4. The ms. वस्वश्च.

च मे । ऋद्धं च म ऋद्धिश्च मे । कॢप्तं च मे कॢप्तिश्च मे । मतिश्च मे सुमतिश्च मे । शं च मे मयश्च मे । प्रियं च मे ऽनुकामश्च मे । कामश्च मे सौमनसश्च मे । भगश्च मे द्रविणं च मे । भद्रं च मे श्रेयश्च मे । वस्यश्च[1] मे यशश्च मे । यन्ता च मे धर्ता च मे । क्षेमश्च मे धृतिश्च मे । विश्वं च मे महश्च मे । संविच्च मे ज्ञात्रं च मे । सूश्च मे प्रसूश्च मे । सीलं[2] च मे लायश्च[3] मे ॥ ८ ॥ 5
Cf. KS. XVIII, 8; MS. II, 11, 3. 4; TS. IV, 7, 2. 3.

ऋतं च मे ऽमृतं च मे । अयक्ष्मं च मे ऽनामयच्च मे । जीवातुश्च मे दीर्घायुत्वं च मे । अनमित्रं च मे ऽभयं च मे । सुगं च मे शयनं च मे । सूषाश्च मे सुदिनं च मे । ऊर्क् च मे सूनृता च मे । पयश्च मे रसश्च मे । घृतं च मे मधु च मे । सग्धिश्च मे सपीतिश्च मे । कृषिश्च मे वृष्टिश्च मे । जैत्रं च म औद्भिद्यं[4] च मे । रयिश्च मे रायश्च मे । पुष्टं च मे पुष्टिश्च 10 मे । विभु च मे प्रभु च मे । पूर्णं च मे पूर्णतरं च मे । कुयवं च मे ऽक्षितिश्च मे । अन्नं च मे ऽक्षुच्च मे । व्रीहयश्च मे यवाश्च मे । माषाश्च मे तिलाश्च मे । नीवाराश्च[5] मे श्यामाकाश्च मे । अणवश्च मे प्रियङ्गवश्च मे । गोधूमाश्च मे मसूराश्च[6] मे । मुद्गाश्च मे खल्वाश्च मे ॥ ९ ॥ Cf. KS. XVIII, 9; MS. II, 11, 3. 4; TS. IV, 7, 3. 4.

अश्मा च मे मृत्तिका च मे । गिरयश्च मे पर्वताश्च मे । सिकताश्च 15 मे वनस्पतयश्च मे । हिरण्यं च मे ऽयश्च मे । सीसं च मे त्रपु च मे । श्यामं च मे लोहितायसं च मे । अग्निश्च म आपश्च मे । वीरुधश्च म ओषधयश्च मे । कृष्टपच्यं च मे ऽकृष्टपच्यं च मे । ग्राम्याश्च मे पशव आरण्याश्च मे । वित्तं च मे वित्तिश्च मे । भूतं च मे भूतिश्च मे । वसु च मे वसतिश्च मे । कर्म च मे शक्तिश्च मे । अर्थश्च म एमश्च मे । इत्या च मे गतिश्च मे । 20 अग्निश्च म इन्द्रश्च मे । सोमश्च म इन्द्रश्च मे । सविता च म इन्द्रश्च मे । सरस्वती च म इन्द्रश्च मे । पूषा च म इन्द्रश्च मे । बृहस्पतिश्च म इन्द्रश्च

1. The ms. वस्वश्च
2. KS, MS. TS, VS. XVIII, 7 सीरं.
3. The ms. ललायश्च. Cf. KS. लायश्च, TS, VS. ib. लयश्च, MS. लयुश्च.
4. The ms. उग्भिदं.
5. The ms. नै०.
6. The ms. मसु०.

मे । मित्रश्च म इन्द्रश्च मे । वरुणश्च म इन्द्रश्च मे । धाता च म इन्द्रश्च मे । त्वष्टा च म इन्द्रश्च मे । मरुतश्च म इन्द्रश्च मे । विश्वे च मे देवा इन्द्रश्च मे । पृथिवी च म इन्द्रश्च मे । अन्तरिक्षं च म इन्द्रश्च मे । द्यौश्च म इन्द्रश्च मे । समाश्च म इन्द्रश्च मे । नक्षत्राणि च म इन्द्रश्च मे । दिशश्च म इन्द्रश्च मे
5 ॥ १० ॥ Cf. KS. XVIII, 10; MS. II, 11, 5; TS. IV, 7, 5. 6.

अंशुश्च मे रश्मिश्च मे । अदाभ्यश्च मे ऽधिपतिश्च मे । उपांशुश्च मे ऽन्तर्यामश्च मे । ऐन्द्रवायवश्च मे मैत्रावरुणश्च मे । आश्विनश्च मे प्रतिप्रस्थानश्च मे । शुक्रश्च मे मन्थी च मे । आग्रयणश्च मे क्षुल्लकवैश्वदेवश्च मे । ध्रुवश्च मे वैश्वानरश्च मे । ऐन्द्राग्नश्च मे वैश्वदेवश्च मे ।
10 मरुत्वतीयश्च मे महेन्द्रीयश्च मे । सावित्रश्च मे सारस्वतश्च मे । पात्नीवतश्च मे हार्योजनश्च मे । स्रुचश्च मे चमसाश्च मे । वायव्यानि च मे द्रोणकलशश्च मे । पूतभृच्च मे ऽपूतभृच्च मे । ग्रावाणश्च मे ऽधिषवणे च मे । अवभृथश्च मे स्वगाकारश्च मे । अग्निश्च मे घर्मश्च मे । अर्कश्च मे सूर्यश्च मे । प्राणश्च मे ऽश्वमेधश्च मे । पृथिवी च मे ऽदितिश्च मे ।
15 दितिश्च मे द्यौश्च मे । शक्करीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्ताम् । व्रतं चर्तुश्च । संवत्सरश्च तपश्च । अहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥ ११ ॥ Cf. KS. XVIII, 11; MS. II, 11, 5. 6; TS. IV, 7, 7. 8. 9.

इति कपिष्ठलकठसंहितायामष्टाविंशतितमो ऽध्यायः ॥

---

त्र्यविश्च मे त्र्यवी च मे। दित्यवाट् च मे दित्यौही च मे। पश्चाविश्च मे पश्चावी च मे। त्रिवत्सश्च मे त्रिवत्सा च मे। तुर्यवाट् च मे तुर्यौही च मे। पष्ठवाट् च मे पष्ठौही च मे। उक्षा च मे वशा च मे। अनड्वांश्च मे धेनुश्च मे। ऋषभश्च मे वेहच्च मे। एका च मे तिस्रश्च मे। तिस्रश्च मे त्रयस्त्रिंशच्च मे। चतस्रश्च मे ऽष्टौ च मे। अष्टौ च मे ऽष्टाचत्वारिंशच्च मे॥

वाजश्च प्रसवश्च। अपिजश्च क्रतुश्च। वाक्पतिश्च[1] वसुश्च। स्वमौर्ध्नो मूर्धा[2]। वैयशनो व्यश्वान्। आन्त्यो ऽन्त्यः। भौवनो[3] भुवनस्पतिः। प्रजापतिराधिपतिः। इयं ते राट्। मित्राय यन्तासि यमनः। ऊर्जे त्वा। वृष्ट्यै त्वा। प्रजानां त्वाधिपत्याय। आयुर्यज्ञेन कल्पताम्[4]। यज्ञो यज्ञेन कल्पताम्। ऋक् च साम च। स्तोमश्च यजुश्च। बृहच्च रथन्तरं च। स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभूम वट् स्वाहा॥ १॥ Cf. KS. XVIII, 12; XXI, 11; MS. II, 11, 6; III, 4, 2; TS. IV, 7, 10. 11; V, 4, 8.

आ मा वाजस्य प्रसवो जगम्यात्[5]॥

वाजस्य नु प्रसवः सुषुवे ऽग्रे[6]॥

वाजस्येदं प्रसव आबभूव॥

1. The ms. वाक्पृथुश्च.
2. Thus KS. The ms. स्वर्मउभ्नयो मुभ्नयो, which may suggest स्वर्मोभ्रर्यो मूभ्रर्यो.
3. The ms. व्यश्वात्यांत्यो भुवनो.
4. KS. adds: मनो यज्ञेन कल्पताम्। प्राणो यज्ञेन कल्पताम्। चक्षुर्यज्ञेन कल्पताम्। श्रोत्रं यज्ञेन कल्पताम्। वाग्यज्ञेन कल्पताम्। आत्मा यज्ञेन कल्पताम्। ब्रह्मा यज्ञेन कल्पताम्। पृष्ठं यज्ञेन कल्पताम्।
5. For sakalapāṭha see KS. XIV, 1.
6. For sakalapāṭha see KS. XIV, 2.

वाजस्य नु प्रसवः शिश्रिये देवी[1] ॥
सोमं राजानमवस इन्द्रं दानाय चोदय ।
विष्णुं वाचं सरस्वतीं सवितारं च वाजिनम् ॥
प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः ।
5 प्र वाग्देवी ददातु नः ॥
अग्ने अच्छा वदेह नः[2] ॥
विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजो अस्मे ॥
वाजस्य नु प्रसवे मातरं महीम् ॥
10 वाजो मे सप्त प्रदिशः ॥

वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति ।
वाजस्य हि प्रसवे नन्नमीति[3] विश्वा आशा वाजपतिर्जयेयम् ॥
वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति ।
वाजस्य हि प्रसवे नन्नमीति[3] सर्वा आशा वाजपतिर्जयेयम् ॥
15 सं मा सृजामि पयसा पृथिव्याः सं मा सृजाम्यद्भिरोषधीभिः ।
सो ऽहं वाजं सनेम्यग्ने ॥
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ।
पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ २ ॥ Cf. KS. XVIII, 13; MS. II, 12, 1; TS. IV, 7, 12.

ऋताषाडृतधामाग्निर्गन्धर्वः । तस्यौषधयो ऽप्सरसो मुदा[4] नाम । स न
20 इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा वट् । ताभ्यः स्वाहा वट् । सुषुम्णः सूर्यरश्मि-
श्चन्द्रमा गन्धर्वः । तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम । स न इदम्० । संहितो
विश्वसामा सूर्यो गन्धर्वः । तस्य मरीचयो ऽप्सरस आयुवो[5] नाम । स न इदम्० ।

1. For sakalapāṭha see KS. XIV, 2.
2. For sakalapāṭha see KS. XIII, 14.
3. The ms. नन्नमेति.
4. The Kap. copies differ, one has मुदा, another मुदो. Both the forms are recorded in the Saṃhitās, मुदा in KS. MS., मुदो in VS. XVIII, 38.
5. Thus the other Saṃhitās. The ms. प्राय्वो.

भुज्युः सुपर्णो यज्ञो गन्धर्वः । तस्य दक्षिणा अप्सरस स्तवा नाम । स न इदम्० । इषिरो विश्वव्यचा वातो गन्धर्वः । तस्यापो ऽप्सरस ऊर्जो नाम । स न इदम्० । प्रजापतिर्विश्वकर्मा मनो गन्धर्वः । तस्यर्क्सामान्यप्सरस एष्टयो नाम । स न इदं ब्रह्म क्षत्रं पातु । तस्मै स्वाहा वट् । ताभ्यः स्वाहा वट् ॥

स नो भुवनस्य पते यस्य त उपरि गृहा विराट्पते । 5

अस्मै ब्रह्मणे ऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥

समुद्रो ऽसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभि मा वाहि स्वाहा । अवस्युरसि दुवस्वाञ्छंभूर्मयोभूरभि मा वाहि स्वाहा । मारुतो ऽसि मरुतां गणः शंभूर्मयोभूरभि मा वाहि स्वाहा ॥ ३ ॥ Cf. KS. XVIII, 14; MS. II, 12, 2. 3; TS. III, 4, 7; IV, 7, 12.

अग्निं युनज्मि[1] शवसा घृतेन दिव्यं सुपर्णं वयसा बृहन्तम् । 10

तेन वयं पतेम ब्रध्नस्य विष्टपं स्वो रुहाणा अधि नाक उत्तमे ॥

इमौ ते पक्षावजरौ पतत्रिणौ याभ्यां रक्षांस्यपहंस्यग्ने ।

ताभ्यां वयं पतेम सुकृतामु लोकं यत्रर्षयो जग्मुः प्रथमाः पुराणाः ॥

इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः ।

महान्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिंसीः ॥ 15

दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।

विश्वायुः शर्म सप्रथा नमस्पथे विश्वस्य मूर्धन्नधितिष्ठासि श्रितः ॥

समुद्रे ते हृदयमन्तरायुरपो देह्युदधिं भिन्धि ।

दिवस्पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो मा वृष्ट्याव ॥

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या । 20

सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशः पृथिव्याम् ॥

सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।

मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥

त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः ।

सपत्नहाग्ने अभिमातिजित्स्वे गये जागृह्यप्रयुच्छन् ॥ 25

इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन्पूर्वचितो निकारिणः ।

1. The ms. युनग्मि.

क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृत ॥
क्षत्रेणाग्ने स्वेनं संरभस्व मित्रेणाग्ने मित्रधेये यतस्वं[1]।
सजातानां मध्यमेष्ठेयाय राज्ञामग्ने विहव्यो दीदिहीह ॥
अति निहो अति स्रिधो अत्यचित्तिमति निर्ऋतिमद्य ।
5 विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दाः ॥
अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीहं[3]।
विश्वा अमीवाः प्रमुञ्चन्मानुषेभ्यः शिवेभिरद्य परिपाहि नो वृधे ॥
अमुत्रभूयादध यद्यमस्य बृहस्पते[4] अभिशस्तेरमुञ्चः ।
प्रत्यूहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥
10 उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥
बृहस्पते सवितर्बोधयैनं संशितं चित्संतरं संशिशाधि ।
वर्धस्वैनं[5] महते सौभगाय विश्व एनमनुमदन्तु[6] देवाः ॥
क्षत्रभृदग्निरनिभृष्टतेजाः सहस्रियो द्योततामिध्यमानः ।
15 वर्ष्मन्पृथिव्या अधि जातवेदा उदन्तरिक्षमारुहदगन्द्याम् ॥ ४ ॥ Cf. KS. XVIII, 15. 16; XXII, 1; MS. II, 12, 3. 5; III, 4, 4. 6; TS. IV, 1, 7. 7, 13; V, 1, 8, 4, 10.

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥
तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथो अनक्तु मध्वा घृतेन ॥
20 मध्वा यज्ञं नक्षति प्रीणानो नराशंसो अग्ने ।

1. The ms. स्वा स्वेन.
2. The ms. यजस्व.
3. The ms. क्षत्रममिदीदिहीह.
4. The ms. बृहस्पतेर्.
5. The ms. वर्द्धस्येनं. The other Saṃhitās वर्धयैनं.
6. Thus the other Saṃhitās. The ms. व्यंदति for मदन्तु.
7. The ms. नद्या. In KS. MS. this pāda forms a part of the preceding mantra. This leads to a further difference in the arrangement of the following verses upto वसुश्चेतिष्ठो वसुधातमश्च. TS. and VS. XXVII, 12. 13. 14. 15 agree with Kap.

सुकृद्देवः सविता विश्ववारः ॥
अच्छायमेति शवसा घृतेनेडानो[1] वह्निर्नमसा ।
अग्निं स्रुचो अध्वरेषु प्रयत्सु ॥
स यक्षदस्य महिमानमग्नेः स ई[2] मन्द्रा सुप्रयसः ।
वसुश्चेतिष्ठा वसुधातमश्च[3] ॥ 5
द्वारो देवीरन्वस्य विश्वा व्रता ददन्ते अग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः[4] ॥
ते अस्य योषणे दिव्ये न योनावुषासानक्ता ।
इमं यज्ञमवतामध्वरं नः ॥
दैव्या होतारोर्ध्वमिममध्वरमग्नेर्जिह्वयाभिगृणीतमुक्थम्[5] । 10
कृणुतं नः स्विष्टिम् ॥
तिस्रो देवीर्बर्हिरेदं स्योनमिडा सरस्वती मही: ।
भारती गृणाना ॥
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीर्यम् ।
रायस्पोषं विष्यतां[6] नाभिमस्मे ॥ 15
वनस्पते ऽवसृजा रराणस्त्मना देवेषु ।
अग्निर्हविः शमिता सूदयाति ॥
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् ।
विश्वे देवा हविरिदं जुषन्ताम् ॥ ५ ॥ Cf. KS. XVIII, 17; MS. II, 12, 6; TS. IV, 1, 8.

येनर्षयस्तपसा सत्रमासतेन्धाना अग्निं स्वराभरन्तः । 20
तस्मिन्नहं निदधे नाके अग्निं यमाहुर्मनव स्तीर्णबर्हिषम् ॥
तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।

1. The ms. °ह्रा°.
2. Thus MS. VS. XXVII, 15. TS. स ई. KS. स्तनी, and further मन्द्रस्सुप्रयक्षुः. The ms. सर्येन्.
3. The ms. °तमस्य.
4. The ms. पच्य°.
5. उक्थं is an addition of Kap.
6. The ms. °तं. One of the mss. of MS. also विष्यतां.

नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥
आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुतां[1] ये पृतन्यवः ॥
अयमग्निर्वीरतमो वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।
5 विभ्राजमानः सरिरस्य मध्य उपप्रयाहि दिव्यानि धाम ॥
संप्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान्कृणुध्वम् ।
पुनः कृण्वन्ता पितरा युवानान्वातांसीत्त्वयि तन्तुमेतम् ॥
उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सं[2]सृजेथामयं च ।
अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥
10 अयं ते योनिर्ऋत्वियः[3] ॥
येन सहस्रं वहसि येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥
इष्टो यज्ञो भृगुभिर्द्रविणोदा यति[4]भिराशीर्दा वसुभिराशीर्वा[5] अथर्वभिः ।
इष्टो अग्निराहुतः स्वाहाकृतः पिपर्तु मेष्टिं हविः स्वगेदं[6] देवेभ्यो नमः
15 ॥ ६ ॥ Cf. KS. XVIII, 18; MS. II, 12, 4; TS. IV, 7, 13.

जुहूं संमार्ष्टि । यज्ञमुखं वै जुहूः । यज्ञमुखमेवालभते । जुह्वा वै देवा विराजमह्वयन् । तज्जुह्वा जुहूत्वम् । अग्निर्वै विराट् । अग्निमेवैतद्विराजं ह्वयति । छन्दांसि देवेभ्यो ऽपाक्रामन्यज्ञे भागधेयमिच्छमानानि न वो भागधेयानि हव्यं वक्ष्याम इति । तेभ्य एतच्चतुर्गृहीतं प्रायच्छन्ननुवाक्यायै याज्यायै देवतायै च वषट्काराय । यच्चतुर्गृहीतेन जुहोति च्छन्दांस्येव भागधेयवन्ति करोति । सावित्राणि जुहोति प्रसूत्यै । एति वा एतद्यज्ञमुखा-
20 द्यदनाग्नेयमग्रे यज्ञस्य क्रियते । यदष्टौ कृत्वो गृहीत्वाष्टावेतानि जुहोति । अष्टाक्षरा गायत्री । गायत्रो ऽग्निः । तेन यज्ञमुखान्नैति । प्रसूत्यै सावित्राणि ।

1. The ms. कुणतां.
2. The ms. omits सं.
3. For sakalapāṭha see I, 16.
4. The ms. यतु°. Cf. MS. यत्ति°.
5. The ms. °र्वं.
6. The ms, स्वाहाकृत पिपर्तु मेष्टहविः स्वगा इदं.
7. For variants see MS. II, 12, 3; TS. V, 6, 8, 6; VS. XVIII, 56; TB. II, 4, 1, 9.

युञ्जते मन इति मनस्वन्ति । मनो ह्यग्रे युज्यते । मनसा यज्ञस्तायते । अग्निर्ज्योतिरिति ज्योतिष्मत् । सविता वा एतत्पृथिव्या ज्योतिः समभरत् । यदेवास्यात्र न्यक्तं तदेतेन संभरति । षडृचो भवन्ति । षडृतवः । ऋतुष्वेव प्रतितिष्ठति । द्वे यजुषी । द्विपाद्यजमानः । प्रतिष्ठित्यै । यदि कामयेत देवतां यज्ञयशसेनाहुत्यार्पयेयमित्यृचमन्ततः कुर्यात् । देवतामेव यज्ञयशसेनाहुत्यार्पयति । यदि कामयेत यजमानं यज्ञयशसेनाहुत्यार्पयेयमिति यजुरन्ततः कुर्यात् । यजमानमेव यज्ञयशसेनाहुत्यार्पयति । ऋचा स्तोमं समर्धयेति समृद्ध्यै । गायत्रेण रथन्तरं बृहद्गायत्रवर्तनीति । इयं वै रथन्तरमसौ बृहत् । व्यष्ट्यै[1] । आहुत्या वा अभिक्रममन्वभिक्रम्य यजमानो वसीयान्भवति । आहुत्या अपक्रममन्वपक्रम्य पापीयान्भवति । सकृत्सर्वाण्यनुद्रुत्योत्तमेन जुहुयात् । आहुत्या एवाभिक्रममन्वभिक्रामति यजमानो[2] वसीयान्भवति । एकमेकं जुहुयाद्यदि कामयेत सदृशो यजमानः स्यादिति । यजूंष्येव नानावीर्याणि करोति । अष्टावेतानि भवन्ति । आहुतिर्नवमी । त्रिवृतमेव यज्ञमुखे संपादयति । त्रिवृद्धि यज्ञमुखम् । पूर्णया स्रुचा जुहोति । पूर्णः प्रजापतिः । प्रजापतिमेवाप्नोति । ऊर्ध्वस्तिष्ठञ्जुहोति । ऊर्ध्वो हि तिष्ठन्वीर्यवत्तरः ॥ ७ ॥ Cf. KS. XVIII, 19; XV, 11; MS. III, 1, 1; II, 7, 1; TS. V, 1, 1; IV, 1, 1.

सावित्रैरभ्रिमादत्ते[3] प्रसूत्यै । इयं वै गायत्र्यन्तरिक्षं त्रिष्टुब्द्यौर्जगती दिशोऽनुष्टुप् । छन्दोभिरेवैनामेभ्यो लोकेभ्य आवर्तयति । उभयतःक्ष्णुर्भवति । अन्यतःक्ष्णुतेन्वै फालेनेयदन्नं क्रियते । अन्नमर्को ऽर्को ऽग्निः । अन्नस्यैवार्कस्यावरुद्ध्यै । अरत्निमात्रीं कुर्यात् । पुरुषेण वै यज्ञः संमितः । यज्ञपुरुषासंमितां व्याममात्रीं कुर्यात् । एतावद्वै पुरुषे वीर्यम् । वीर्येण संमितामपरिमितां कुर्यादपरिमितस्यावरुद्ध्यै । यो वृक्षः फलग्राहिस्तस्य कुर्यात् । एष वै वनस्पतीनां वीर्यवत्तमः । सवीर्यत्वाय । कल्माषीं वैणवीं सुषिरां कुर्यात् । अग्निर्वै देवेभ्यो ऽपाक्रामत् । स वेणुं प्राविशत् । स एतानि

1. The ms. व्यष्ट्या. So also one of the two KS. mss.

2. KS. omits यजमानो.

3. The ms. सावित्रीरभ्रमा०.

वर्माण्यनह्यत यानि परूंषि । स एतं लोकमन्वचरद्यः सुषिरः[1] । स यत्र-
यत्रावसत्तन्निरदहत् । तत्कल्माषमभवत्[2] । यत्कल्माषी वैणवी सुषिरा
भवति । सा ह्याग्नेयीतमा । समृद्ध्यै । अथो यदेवास्यात्र न्यक्तं तस्यावरुद्ध्यै ॥

अग्निर्वै देवेभ्यो ऽपाक्रामत् । स यत्रयत्रावसत्तं प्रजापतिरन्वपश्यत् ।
5 प्राजापत्यो ऽश्वः । यदश्वेन यन्त्यग्नेरेवानुख्यात्यै । एतेन वै देवा असुरानु-
त्तममभ्यभवन्[3] । यदश्वेन यन्ति भ्रातृव्यस्याभिभूत्यै । एतं वै रक्षांसि
नातरन् । यदश्वेन यन्ति रक्षसामतीत्यै । अश्वं पूर्वं नयन्ति गर्दभमपरं पा-
पवसीयसस्य व्यावृत्त्यै । तस्मात्पुण्यं पूर्वं यन्तं पापीयान्पश्चादन्वेति ।
गर्दभेन संभरति । तस्मादेष समावत्पशूनां रेतो दधानानां कनिष्ठः ।
10 अग्निर्ह्यस्य रेतो निरदहत् । यदेतेनास्यामूर्जमर्कं संभरति तस्मादेषो ऽस्यां
जीवितृतमः[4] । प्रतूर्तिं[5] वाजिन्नाद्रव ॥ युञ्जाथां रासभं युवमित्यश्वगर्दभयोरेवैषः ॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे ।

सखाय इन्द्रमूतये ॥

इति । ऊत्यै हि वाजायाग्निश्चीयते । प्रतूर्वन्नेह्यवक्रामन्[6]नशस्तीरिति । बहुर्वै
15 भवतो भ्रातृव्यः । भवत्येष यो ऽग्निं चिनुते । वाज्यश्वः[7] । पापमाशस्ति-
र्भ्रातृव्यः । वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति । रुद्रस्य गाणपत्ये मयोभू-
रेहीति । रौद्रा वै पशवः । रुद्रमेव पशून्निर्याच्यात्मने कर्म कुरुते ।
उर्वन्तरिक्षं वीहि ॥ स्वस्ति गव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सहेति । पूषा
वा अध्वनां संनेता । समष्ट्यै । पृथिव्याः सधस्थादग्निं [ पुरीष्यमङ्गिरस्वदा-
20 भरेति । पुरीषायतनो वा अग्निः ।] अङ्गिरस एतमग्रे देवताभिः[8] समभरन् ।
सायतनमेवैनं देवताभिः संभरति । अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह
येन संगच्छते[9] । सर्वो वै पुरुषो ऽग्निमान् । वाजमेवास्य वृङ्क्ते । प्रजापतये

1. Thus emended. The ms. यः सुषि. KS. यत्सुषिर्. Cf. MS. p. 2, 1. 18; ŚatBr. VI, 3, 1, 31.
2. KS. तत्कल्मषम० to be corrected. Cf. MS. ib. and ŚatBr. ib. कल्माषाणि.
3. The ms. ०जयन्.
4. Thus the ms. KS. जीवित०.
5. Thus the ms.
6. The ms. adds यत्र after अवक्रामन्.
7. The ms. वाजियश्वः.
8. The ms. omits देवताभिः.
9. KS. संगच्छेत.

प्रोच्याग्निश्चेतव्यो राज्ञे प्रोच्य । स हि प्राजापत्यतमः । इयं वै प्रजापतिः । तस्या एष कर्णो यद्वल्मीकः । यद्वल्मीकवपामु[1]द्धृत्याभिमन्त्रयते प्रजापतय एवं[2] प्रोच्याग्निं चिनुते । शृण्वन्त्येनमग्निं चिक्यानम् । असावग्निमचेष्टेति । कर्णो हि कर्णायाह ॥ ८ ॥ Cf. KS. XIX, 1. 2; XVI, 1; MS. III. 1, 2. 3; II, 7, 2; TS. V, 1, 1. 2; IV, 1, 2.

इति कपिष्ठलकठसंहितायां नवविंशतितमो ऽध्यायः ॥

---

1. The ms. ॰द्दृ॰.

2. The ms. च for एव.

अन्वग्निरुषसामग्रमख्यदित्यनुख्यात्यै[1] । आगत्य वाज्यध्वानि सर्वा मृधो विधूनुत इति मृध एवैतयापहते । आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वमिति । ऐच्छद्वा एतं पूर्वया प्रजापतिरविन्ददुत्तरया । इच्छत्येव पूर्वया विन्दत्युत्तरया । द्यौस्ते पृष्ठं पृथिवी सधस्थमिति । वज्री वा अश्वः
5 प्राजापत्यः । लोमभिरुभयादतः पशूनति दद्भिरन्यतोदतः । वज्रेणैव भ्रातृव्य-मवक्रामति[2] । यत्र वै यज्ञस्यानुरूपं क्रियते तत्पशवो ऽनुरूपा जायन्ते । उत्क्राम ॥ उदक्रमीदित्यनुरूपाभ्यामुत्क्रमयति । तस्मात्पशवो ऽनुरूपा जायन्ते । द्वाभ्याम् । द्विपाद्यजमानः । प्रतिष्ठित्यै । यां वा अनग्नावध्वर्युराहुतिं जुहोत्यन्धो ऽध्वर्युर्भवति । रक्षांसि यज्ञं घ्नन्ति । अग्निर्वै वरुणानीरभ्यका-
10 मयत । तस्य तेजः परापतत् । तद्धिरण्यमभवत् । यद्धिरण्यमुपास्य जुहोत्य-ग्निमत्येव जुहोति समृद्ध्यै । नान्धो ऽध्वर्युर्भवति । न[3] रक्षांसि यज्ञं घ्नन्ति । जिघर्म्यग्निं मनसा घृतेनेति । मनो वै वाचः क्षेपीयः । मनसैवाहुतिमाप्नोति । प्रतिक्षियन्तं भुवनानि विश्वेति । तस्मादेष सर्वाः प्रजाः प्रत्यङ् क्षियति[4] । व्यचिष्ठमन्नं रभसं विदानमित्यन्नमेवास्मै स्वदयति । आ त्वा जिघर्मि वचसा
15 घृतेनेति पूर्वमेवोदितमनुवदति । अरक्षसा मनसा तज्जुषेथा[5] इति रक्षसामप-हत्यै । मर्यश्री स्पृहयद्वर्णो अग्निर्नाभिमृशे[6] तन्वा जर्हृषाण इत्यपचितिमेवास्मि-[7]न्दधाति । द्वाभ्यां जुहोति । द्विपाद्यजमानः । प्रतिष्ठित्यै । यज्ञमुखेयज्ञमुखे[8]

1. The ms. ॰मक्षा॰.
2. The ms. अपक्रामति, KS. अवगृह्णाति.
3. न is missing in KS.
4. KS. क्षियते, TS. क्षेति.
5. तज् is missing in the ms.
6. KS. XVI, 2 ॰धृषे.
7. The ms. ॰चितमे॰.
8. The ms. has only one यज्ञमुखे.

वै यज्ञं रक्षांसि जिघांसन्ति । यत्परिलिखति रक्षसामपहत्यै । तिसृभिः परिलिखति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो रक्षांस्यपहन्ति । परि वाजपतिः कविरिति गायत्र्या परिलिखति । ब्रह्म वै गायत्री । ब्रह्मणैवैनं परिगृह्णाति । परि त्वाग्ने पुरं वयमित्यनुष्टुभा । वाग्वा अनुष्टुप्[1] । अनुष्टुप्सर्वाणि च्छन्दांसि परिभूः । वाचैव सर्वाणि च्छन्दांसि परिगृह्णाति । 5
त्वमग्ने द्युभिरिति त्रिष्टुभा । वीर्यं वै त्रिष्टुप् । वीर्येणैवैनं परिगृह्णाति । अनुष्टुभा मध्यतः परिलिखति । वाग्वा अनुष्टुप् । वाचमेव मध्यतो दधाति । तस्मान्मध्यतो वाग्वदति । तेजो वै गायत्री । यज्ञोऽनुष्टुप् । इन्द्रियं त्रिष्टुप् । तेजसा चैवेन्द्रियेण च यज्ञमुभयतः परिगृह्णाति ॥ १ ॥ Cf. KS. XIX, 3; XVI, 2; MS. III, 1, 4; II, 7, 2; TS. V, 1, 2, 3; IV, 1, 2.

सावित्राभ्यां खनति प्रसूत्यै । धूममेवं पूर्वेण विन्दति ज्योतिरुत्तरेण । 10
द्वाभ्याम् । द्विपाद्यजमानः । प्रतिष्ठित्यै । अपां पृष्ठमसि योनिरग्नेरिति पुष्करपर्णमादत्ते[2] । अपां ह्येतत्पृष्ठं योनिरग्नेः । यत्पुष्करपर्णेन संभरति स्वेनैवैनं योनिना संभरति । शान्त्या अनिर्दाहाय । कृष्णाजिनेन संभरति । यज्ञो वै कृष्णाजिनम् । यज्ञेनैव यज्ञं संभरत्यस्कन्दाय । न हि यज्ञे यज्ञ स्कन्दति । एतद्वै ब्रह्मणो रूपं यत्कृष्णाजिनम् । ब्रह्मणा चैवैनमृक्सामाभ्यां च संभरति । शर्म च स्थो वर्म च स्थ इति संस्तृणाति । इयं वै पुष्करपर्णमसौ कृष्णाजिनम् । इमे एवैतत्संस्तृणाति । अच्छिद्रे बहुले उभे इत्यच्छिद्रे हीमे बहुले उभे[3] । व्यचस्वती इति । तस्मादिमे व्यचस्वती । भर्तमग्निं पुरीष्यमिति । पुरीष्यो ह्येषः । संवसाथां स्वर्विदौ[4] समीची उरसा त्मनेति । तस्मादिमे नाना सती समीची । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदिति 20
ज्योतिरेवास्मिन्नजस्रं दधाति । पुरीष्योऽसि विश्वभरा इति । पुरीष्यो ह्येष विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्न इति । प्रजापतिर्वा अथर्वा । प्रजापतिरेतमग्रेऽमन्थत् । प्रजापतिरेवैनं जनयति । तमु त्वा दध्यङ्ङृषिरिति ।

1. The missing अनुष्टुप् is to be supplied in KS.
2. The ms. °माधत्ते.
3. उभे is missing in the ms.
4. The ms. °दू.

दध्यङ् वा आथर्वणस्तेजस्व्यासीत् । तेनैवैनं संभरति । तमु त्वा पाथ्यो वृषेति । पूर्वमेवोदितमनुवदति । चतसृभिः संवपति । चत्वारि वै छन्दांसि । छन्दोभिरेवैनं संवपति । गायत्रीभिर्ब्राह्मणस्य संवपेत् । गायत्रो हि ब्राह्मणः । त्रिष्टुब्भी राजन्यस्य । त्रैष्टुभो हि राजन्यः । जगतीभिर्वैश्यस्य । जागतो
5 हि वैश्यः । यथाछन्दसमेवोभयीभिः संवपेद्यं[1] कामयेत वसीयान्स्यादिति । तेजो वै गायत्री । इन्द्रियं त्रिष्टुप् । तेजश्चैवास्मिन्निन्द्रियं च समीची दधाति । अष्टाभिः संवपति । अष्टाक्षरा गायत्री । गायत्रो ऽग्निः । यावानेवाग्निस्तं संभरति । सीद होतरिति देवता एवास्मिन्संसादयति । नि होतेति मनुष्यानेव । संसीदस्वेति वयांस्येव । जनिष्ट हि जेन्यो अग्रे अह्नामिति देव-
10 मनुष्यानेवास्मिन्संसन्नान्प्रजनयति ।। २ ।। Cf. KS. XIX, 4; XVI, 3; MS. III, 1, 5; II, 7, 3; TS. V, 1, 4; IV, 1, 3.

अपो देवीरुपसृज मधुमतीरित्योषधीनां प्रतिष्ठित्यै । तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः[2] इति । तस्मादोषधयः फलं गृह्णन्ति । सं ते वायुर्मातरिश्वा दधात्विति । तस्माद्वायुर्वृष्टिं वहति । प्राणो वै वायुः । प्राणमेवास्मिन्दधाति । तस्मै देव वषडस्तु तुभ्यमिति । षड् वा ऋतवः । ऋतुष्वेव वृष्टिं
15 दधाति । तस्मादृतुमृतुं वर्षति । यत्प्रत्यक्षं वषट् कुर्याद्यातयामा वषट्कारः स्यात् । यन्न वषट् कुर्याद्रक्षांसि यज्ञं हन्युः । तस्मै देव वषडस्तु तुभ्यमिति परोक्षम् । न यातयामा वषट्कारो भवति न रक्षांसि यज्ञं घ्नन्ति । यदाज्येन जुहुयाच्छुचा पृथिवीमर्पयेत् । अपो निनयति शान्त्या अनिर्दाहाय ।।

सुजातो ज्योतिषा शर्म वरूथमासदत्स्वः ।
20 वासो अग्ने विश्वरूपं संव्ययस्व विभावसो ।।

इति छन्दांसि वा अग्नेर्वासः । छन्दोभिरेवैनं परिददाति । अनुष्टुभा । अनुष्टुब्वा अग्नेः प्रिया तनूः । प्रिययैवैनं तन्वा परिददाति । वेदुको वासो भवति य एवं वेद । वरुणमेनिर्वा एष उपनद्धः । उदु तिष्ठ स्वध्वर ।। ऊर्ध्व ऊ षु ण ऊतय इत्यूर्ध्वामेव वरुणमेनिमुत्सुवति । द्वाभ्यामुपावहरति । द्विपाद्यजमानः ।
25 प्रतिष्ठित्यै । स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीष्विति । तस्मा-

1, KS. संवपेद्य. to be corrected. 2. The ms. °पिःपिला.

दग्निः सर्वा अन्वोषधीः । प्र मातृभ्यो अधि कनिक्रदद्गा इति । ओषधयो वा एतस्य मातरः । ताभ्य एवैनं परिणयति । स्थिरो भव वीड्वङ्ग इति गर्दभ एव स्थेमानं दधाति । तस्मादेष पशूनां भारभारितमः । शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इति । अभि वा एष एतर्हि प्रजाः शोचयति शान्त्यै । मा द्यावापृथिवी अभि शुचो मान्तरिक्षं मा वनस्पतीनित्येभ्य एवैनं लोकेभ्यः शमयति । प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वेति समष्ट्यै । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरेत्यायुरेवास्मिन्दधाति । तस्माद्गर्दभः सर्वमायुरेति । तस्माद्गर्दभे प्रमीते बिभ्यति । वृषाग्निं वृषणं भरन्निति । वृषा ह्येष वृषाणं भरति । अपां गर्भं समुद्रियमिति । अपां ह्येष गर्भः । अग्न आयाहि वीतय इति । अग्निना वै देवा इदमग्रे व्यायन् । वीत्यै । प्रच्युतो वा एष एतर्ह्यायतनादगतः प्रतिष्ठाम् । स यजमानं चैवाध्वर्युं चाध्यायति । ऋतं सत्यमृतं सत्यमिति । इयं वा ऋतमसौ सत्यम् । अनयोरेवैनं प्रतिष्ठापयति । ओषधयः प्रतिगृह्णीताग्निमेतं शिवमायन्तमभ्यत्र युष्मानिति । ओषधयो वा एतस्य भागधेयम् । ताभिरेवैनं सम्यञ्चं दधाति । अथो याभ्य एनं प्रच्यावयति तास्वेनं प्रतिष्ठापयति । पुष्पवतीः सुपिप्पला[1] इति । तस्मादोषधयः फलं गृह्णन्ति । द्वाभ्यामुपावहरति । द्विपाद्यजमानः । प्रतिष्ठित्यै । वि पाजसेति विस्रंसयति । वरुणमेनिमेव विष्यति । आपो हि ष्ठा मयोभुव इत्यप उपसृजति । आपः शान्ताः । शान्ताभिरेवास्य शुचं शमयति । तिसृभिः । त्रिवृद्वा अग्निः । यावानेवाग्निस्तस्य शुचं शमयति । अजलोमैः संसृजति । एषा वा अग्नेः प्रिया तनूर्यदजा । प्रिययैवैनं तन्वा संसृजति । शर्कराभिः संसृजति धृत्यै । अश्मैः कपालैः संसृजति । आरण्यानेव पशूञ्शुचार्पयति । तस्मादेते समावत्पशूनां प्रजायमानानां कनिष्ठाः । शुचा ह्येत ऋताः ॥ ३ ॥ Cf. KS. XIX, 5; XVI, 4; MS. III, 1, 5. 6; II, 7, 4. 5; TS. V, 1, 5. 6; IV, 1, 4. 5.

मित्रः संसृज्य पृथिवीमिति । वरुणमेनिर्वा एषा । मित्रेणैव वरुणमेनिमुपैति[2] । रुद्राः[3] संसृज्य पृथिवीम् ॥ संसृष्टां वसुभी रुद्रैरिति । एताभिर्वा एतां

1. The ms. ०पिःपला.

2. The ms. ०सुपयति.

3. KS. रुद्रस् to be corrected to रुद्रास्.

देवताभिः प्रजापतिः समसृजत् । ताभिरेवैनां संसृजति । प्रान्यैर्यच्छति । अन्वन्यैर्मन्त्रयते । मिथुनमेव करोति । अथो मध्यत एव यज्ञस्याशिषमवरुन्द्धे । मखस्य शिरो ऽसीति । यज्ञो वै मखः । यज्ञस्यैव शिरः करोति । वसवस्त्वा कुर्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वदिति । एताभिर्वा एतां देवताभिः
5 प्रजापतिरकरोत् । ताभिरेवैनां करोति । त्र्युद्धिं[1] करोति । त्रय इमे लोकाः । इमानेव लोकानाप्नोति । धारया मयि प्रजां रायस्पोषं गौपत्यमित्याशीरेवैषा छन्दसां दोहः । अरत्निमात्रीं कुर्यात् । पुरुषेण वै यज्ञः संमितः । यज्ञपुरुषासंमिताम् । यावद्बाहुभ्यां पर्याप्नुयात्तावतीं कुर्यात् । एतावद्वै पुरुषे वीर्यम् । वीर्येण संमिताम् । प्रादेशमात्रीं कुर्यात् । एतावद्वै मुखम् । मुखं देवानामग्निः ।
10 मुखेन संमिताम् । अपरिमितां कुर्यादपरिमितस्यावरुद्ध्यै । चतुस्तनां कुर्याददित्या दोहाय । अष्टास्तनां गायत्र्या दोहाय । षट्स्तनां कुर्यादृतूनां दोहाय । द्विस्तनां कुर्याद् द्यावापृथिव्योर्दोहाय । नवाश्रिमभिचरणीयां कुर्यात् । त्रिवृद्वज्रः । वज्रमेव भ्रातृव्याय प्रहरति । अदित्या रास्नास्यदितिस्ते बिलं गृह्णात्विति यजुषा बिलं करोति । अयजुषा हि मनुष्याः कुर्वन्ति । मानुषेणैवैनां
15 पात्रेण व्यावर्तयन्ति[2] । यद्वा एषा पुरा पक्तोर्भिद्येतार्तिं यजमान आर्छेद्धन्येतास्य यज्ञः । कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नय इति देवताभ्य एवैनां संप्रयच्छति गोपीथाय । वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वदिति । एताभिर्वा एतां देवताभिः प्रजापतिरधूपयत् । ताभिरेवैनां धूपयति । अश्वशकेन धूपयति । प्राजापत्यो वा अश्वः । यज्ञः प्रजापतिः । सयोनित्वाय ।
20 सप्तभिर्धूपयति । शिरो वा एतद्यज्ञस्य यदुखा[3] । सप्त प्राणाः । शीर्षण्येव प्राणान्[4]दधाति । तस्मात्सप्त शीर्षण्याः प्राणाः ॥ ४ ॥ Cf. KS. XIX, 6; XVI, 5; MS. III, 1, 6. 7; II, 7, 5. 6; TS. V, 1, 6. 7; IV, 1, 5. 6.

अदितिस्त्वा देवी विश्वदेव्यावतीति । इयं वा अदितिः । अदित्यैवादित्यां खनत्यस्या अक्रूरंकाराय । न हि स्वः स्वं हिनस्ति । देवानां त्वा पत्नीर्देवी-

1. The ms. त्रियुध्यं.
2. The ms. ०वर्तयति.
3. The ms. यजुषा. So also MS. p. 9, 1.
4. The ms. प्राणं.

10.

विश्वदेव्यावतीरिति । देवानां वा एतां पत्नीरग्रे ऽत्रादधुः । ताभिरेवैनां दधाति । धिषणास्त्वा देवीर्विश्वदेव्यावतीरिति । विद्या वै धिषणा । विद्ययैवैनामभीन्द्धे । वरूत्रीस्त्वा देवीर्विश्वदेव्यावतीरिति । होत्रा वै वरूत्रः । होत्राभिरेवैनां श्रपयति । ग्नास्त्वा देवीर्विश्वदेव्यावतीरिति । छन्दांसि वै ग्नाः । छन्दोभिरेवैनां पचति । जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीरिति । देवानां वै पत्नीर्जनयः । ताभिरेवैनां पचति । द्विः पचन्त्वित्याह । तस्माद्द्विः संवत्सरस्य सस्यं पच्यते । षड्भिः पचति । षड्वा ऋतवः । ऋतुभिरेतां देवानां पत्न्यो ऽपचन् । तैरेवैनां पचति । वरुणमेनिर्वा एषाभीद्धा । मित्रस्य चर्षणीधृत इति । मित्रेणैव वरुणमेनिमुपैति[1] । देवस्त्वा सवितोद्वपत्विति सावित्र्योद्वपति प्रसूत्यै । अव्यथमाना पृथिव्यामाशा दिश आपृणेति । तस्मादग्निः सर्वा दिशो विभाति । उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमिति दृंहत्येवैनाम् । यद्वा एषा भिद्येतार्तिं यजमान आर्छेद्धन्येतास्य यज्ञः । मित्रैतां त उखां परिददामीति । ब्रह्म वै मित्रः । ब्रह्मण एवैनां परिददाति । यदि भिद्येत तैः कपालैः संसृज्यान्यां कुर्यात् । सैव ततो यज्ञस्य निष्कृतिः[2] । वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसाङ्गिरस्वदिति । छन्दोभिर्वा एषा क्रियते छन्दोभिर्धूप्यते छन्दोभिः पच्यते । छन्दोभिराच्छृणत्ति स्वेनायतनेन । असुर्यं वै पात्रमनाच्छृणम् । यदाच्छृणत्ति देवत्रैव करोति । अजक्षीरेणाच्छृणत्ति । सा ह्याग्नेयीतमा । अथो परमेणैव पयसा ॥ ५ ॥ Cf. KS. XIX, 7; XVI, 6; MS. III, 1, 8; II, 7, 6; TS. V, 1, 7; IV, 1, 6.

अथैते ऽग्निभ्यः कामेभ्यः पशव आलभ्यन्ते । कामा वा अग्नयः । सर्वानेवैतैः कामानभिजयति सर्वान्कामान्स्पृणोति । यत्पशून्नालभेतानवरुद्धा अस्य पशवः स्युः । यत्संस्थापयेद्यातयामानि शीर्षाणि[3] स्युः । यन्न संस्थापयेद्यज्ञं विच्छिन्द्यात् । यत्पशूनालभते तेनैव पशूनवरुन्द्धे । यत्पर्यग्निकृतानुत्सृजति [शीर्ष्णामयातयामत्वाय । ......[4] ॥ ६ ॥ ] Cf. KS. XIX, 8; MS. III, 1, 10; TS. V, 1, 8.

1. The ms. ०मुपयति.
2. The ms. निःकृतिः.
3. The ms. शीर्षा.
4. One leaf is missing in the Kap. ms. The corresponding Kāṭhaka text for this section is as follows:

......[1][यदग्नये वैश्वानराय नि]र्वपत्यश्नुते तं कामं यस्मै कामाय दीयते। यद्द्वादशकपालो द्वादशमासाः संवत्सरः । या वै प्रजा भ्रेशन्ते संवत्सरात्ता भ्रेशन्ते। याः प्रतितिष्ठन्ति संवत्सरे ताः प्रतितिष्ठन्ति। संवत्सर एव प्रतिष्ठायाग्निं बिभर्ति ॥ ७ ॥ Cf. KS. XIX, 9; MS. III, 1, 10.

5 षडाधीतयजूंषि जुहोति। षड्वा ऋतवः । ऋतुभिरेवैनं दीक्षयत्यृतुभिरस्या वीर्यमुद्यच्छते । सप्तैतानि जुहोति। सप्त प्राणाः। प्राणैरेवैनं दीक्षयति । नाना जुहोति। तस्मान्नानावीर्याः प्राणाश्चक्षुः श्रोत्रं वाक् । अनुष्टुभोत्तमं जुहोति । वाग्वा अनुष्टुप् । वाचमेवोत्तमां दधाति । तस्माद्वाक्प्राणानामुत्तमा विहितं वदति। अनुष्टुब्वै सर्वाणि च्छन्दांसि । पशवश्छन्दांसि । 10 अन्नं पशवः। पशूनेवान्नाद्यमवरुन्द्धे । यज्ज्योतिषि प्रवृणक्ति भूतं तेनावरुन्द्धे ...

एकेन संस्थापयति यज्ञस्य संतत्या अविच्छेदाय। प्राजापत्येन। यज्ञो वै प्रजापतिः। यज्ञ एव यज्ञं प्रतिष्ठापयति। न यज्ञं विच्छिनत्ति । ऐन्द्रा वा एते पशवो ये मुष्कराः । यदैन्द्रास्सन्तो ऽग्निभ्य आलभ्यन्ते देवताभ्यस्समदं करोति। आग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्यात् । ऐन्द्रीर्वै त्रिष्टुभः । तेनैवैन्द्राः क्रियन्ते । न देवताभ्यस्समदं करोति। अथैष वायव्यश्श्वेतस्तूपरः। सर्वान्वा एष पशून्प्रत्यालभ्यते । यत्तूपरो ऽश्वं तेन पशूनां प्रत्यालभ्यते । यच्छ्मश्रुणः पुरुषं तेन यदष्टाशफो ऽष्टाशफान्पशूंस्तेन । नियुत्वती याज्यानुवाक्ये कुर्याद्यजमानस्य धृत्या अनुन्मादाय। यत्र नियुत्वती स्यातामुद्वा माद्येद्यजमानः प्र वा पतेत् । वायुमती शुक्रवती । वायुर्वा अग्नेस्तेजः। तस्माद्यद्यङ् वातो वाति तदग्निरन्वेति । स्वमेव तत्तेजो ऽन्वेति । वायुर्वै पशूनां प्रियं धाम । प्राणो वायुः । यद्वायव्य एतमेवैनमाभिसंजानानाः पशव उपतिष्ठन्ते । वायव्या कार्या ३ प्राजापत्या ३ इति मीमांसन्ते । यद्वायव्यां कुर्यात्प्रजापतेरियाद्यत्प्राजापत्यां वायोरियात् । य एव कश्चाग्नौ पशुरालभ्यते तस्याग्नये वैश्वानराय पुरोडाशं कुर्यात् । यद्वायव्यः पशुस्तेन वायोर्नैति यत्प्राजापत्यः पुरोडाशस्तेन प्रजापतेर्नैति । यद्द्वादशकपालो द्वादशमासस्संवत्सरः । संवत्सरो ऽग्निर्वैश्वानरः । तेन वैश्वानरत्वान्नैति ॥ ८ ॥ For references see above.

1. The Kāṭhaka reads:

आग्नावैष्णवमेकादशकपालं निर्वपति। अग्निर्वै सर्वा देवता विष्णुर्यज्ञः । देवताश्चैव यज्ञं चालभते । मुखं वै देवानामग्निः परो ऽन्तो विष्णुः। यज्ञस्यैवान्तौ समग्रहीत्। अथादित्येभ्यो घृते चरुः। आदित्या वा इत उत्तमा अमुं लोकमायन्। आदित्या इमाः प्रजा आदित्यानां नेदिष्ठिनीः। स्वामेव देवतामुपैति। घृते भवति। घृतभागा ह्यादित्याः। अथाग्नये वैश्वानराय द्वादशकपालः। संवत्सरो वा अग्निर्वैश्वानरः। द्वादशमासस्संवत्सरः । संवत्सरस्याप्त्यै। यो ऽयोनिमग्निं चिनुते यजमानस्य योनिमनु प्रविशाति । स एनं निर्दहति। संवत्सरो वा अग्निर्वैश्वानरः। संवत्सरो ऽग्नेर्योनिः । यदग्नये वैश्वानराय योनिमन्तमेवैनं चिनुते। एषा वा अग्नेः प्रिया तनूर्या वैश्वानरी । यदग्नये वैश्वानराय प्रियाया एवास्य तन्वे हविष्कृत्वा प्रियां तन्वमादत्ते । कामो वा अग्निर्वैश्वानरः ।

न्द्धे । यदङ्गारेषु भविष्यत्तेन । अङ्गारेषु प्रवृज्या । भविष्याद्धि भूयो भूतात् । मा सु भित्था मा सु रिष इति दृंहत्येवैनाम्[1] । अरिष्टा त्वमुदिहि यज्ञे अस्मिन्निति समष्ट्यै । द्वाभ्यां प्रवृणक्ति । द्विपाद्यजमानः । प्रतिष्ठित्यै । परीध्या बुभूषतः[2] । गर्भो वै[3] दीक्षितः । अत इव वा एष भवत्यत एवैनं जनयति । मथित्वा गतश्रेरवदध्यात् । भूतो हि सः । स्वामेव देवतामुपैति । अन्यत आहृत्यावदध्या- 5
द्यं कामयेत भ्रातृव्यमस्मै जनयेयमिति । भ्रातृव्यमेवास्मै जनयति । भृज्जनादाहृत्यावदध्यादन्नकामस्य [4]भृज्जने वा अन्नं क्रियते । सयोन्येवान्नमवरुन्द्धे । यो वृक्ष उपरि दीप्येत तस्यावदध्यात्स्वर्गकामस्य । एष वा अग्नीनां स्वर्ग्यः । स्वर्गस्य लोकस्य समष्ट्यै । द्रुन्नः (व) सर्पिरासुतिरिति क्रमुकं लिखितं घृतेनाक्त्वावदध्यात् । अग्नेर्वै यां प्रिया तनूस्तया क्रमुकं प्राविशत् । तेजो घृतम् । प्रिया- 10
मेवास्य तन्वं तेजसा समनक्ति । मुञ्जानवदधाति । ऊर्ग्वै मुञ्जाः । ऊर्जमेवास्मा अपिदधाति[5] । परस्या अधि संवत इत्यौदुम्बरीम् । देवा वै यत्रोर्जं व्यभजन्त तत उदुम्बरो ऽजायत । जातायैवास्मा ऊर्जमपिदधाति । परमस्याः परावत इति वैकङ्कतीम् । अग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत् । तदेवावरुन्द्धे । यदग्ने कानिकानि च ॥ यदत्त्युपजिह्विकेति । न ह स्म वै पुराग्निरपरशुवृक्णं दहति । तद- 15
स्मै[6] एताभिः प्रयोग ऋषिरस्वदयत् । यदेताभिः समिधमादधातीध्ममेवास्मै स्वदयति । स्वदितमस्यान्नं भवति[7] । छन्दांसि वा अग्नेर्योनिः । यच्छन्दोभिरादधाति स्वेनैवैनं योनिनानुबिभर्ति । रात्रींरात्रीमप्रयावं भरन्त इत्याशिषमेवाशास्ते । नाभा पृथिव्याः समिधानो अग्निमिति । पृतना एवैतया जयति । याः सेना अभीत्वरीरिति । अग्निं वै जातं रक्षांस्यजिघांसन् । ते देवा एता 20
ऋचो ऽपश्यन् । ताभिरस्माद्रक्षांस्यपाघ्नन् । यदेताभिः समिध आदधाति रक्षसामपहत्यै । देवा असुराश्चास्पर्धन्त । ते देवा एतन्मालिम्लवमपश्यन् । तेनासुरानभ्यभवन् । यदेतेन समिधमादधाति भ्रातृव्यस्याभिभूत्यै । तस्माद्यां समामग्निं[8] चिन्वन्ति ग्राहुका स्तेनं भवन्ति । याः सेना अभीत्वरीरि-

1. The ms. ०वैनम्.
2. The sense is not clear.
3. The ms. वे.
4. या is missing in KS.
5. The ms. परि for अपि.
6. The ms. तस्मै.
7. KS. adds य एवं वेद.
8. The ms. तस्माद्याः समानमग्निं.

त्यौदुम्बरीम् । ऊर्जमेवास्मा अपिदधाति । दंष्ट्राभ्यां मलिम्लूनग्न इत्याश्वत्थीम् । एष वै वनस्पतीनां सपत्नसाहः । विजित्यै । यर्हि दंष्ट्राभ्यामिति ब्रूयाद्यं द्विष्यात्तं मनसा ध्यायेत् । मनो वै वाचः[1] क्षेपीयः । आहुतिमेवैनं भूताम्[2]ग्नये ऽपिदधाति । ये जनेषु मलिम्लव[3] इति वैकङ्कतीम् । अग्नेर्वै सृष्टस्य विकङ्कतं 5 भा आर्छत् । तदेवावरुन्द्धे । यो अस्मभ्यमरातीयादिति शमीमयीं[*] शान्त्यै । निन्दाद्यो अस्मान्दिप्साच्चेति । तस्मादग्निचितो नाश्लीलं कीर्तयेत् । संशितं मे ब्रह्मेति । ब्रह्मणैव क्षत्रं संश्यति क्षत्रेण ब्रह्म । तस्माद्ब्रह्मपुरोहितं क्षत्रमत्यन्यानि क्षत्राणि । तस्माद्ब्रह्म क्षत्रवदत्यन्यान्ब्राह्मणान् । उदेषां बाहू अतिरमुद्वर्चो अथो बलमित्याशिषमेवाशास्ते । क्षिणोमि ब्रह्मणामित्रानुन्नयामि 10 स्वाँ[4] अहमिति यथायजुः ॥ ८ ॥ Cf. KS. XIX, 10; XVI, 7; MS. III, 1, 9; II, 7, 7; TS. V, 1, 9. 10; IV, 1, 9. 10.

इति कपिष्ठलकठसंहितायां त्रिंशत्तमो ऽध्यायः ॥

---

1. The ms, वाचा for वै वाचः.
2. Thus KS, The ms. भूतिम॰. MS. p. 12, ll, 19-20 भूतम॰.
3. The ms, ये वनेषु मलिम्लुच.
4. The ms. स्वं.

दृशानो रुक्म उर्विया व्यद्यौदिति[1] रुक्मं प्रतिमुञ्चते । मृत्युर्वा अग्निः ।
अमृतं हिरण्यम् । अमृतेनैव मृत्योरन्तर्धत्ते । एकविंशतिनिर्बाधो भवति
प्रतिष्ठित्यै । एकविंशतिर्देवलोकाः । तेभ्य एव भ्रातृव्यं निर्बाधते । बहि-
ष्टान्निर्बाधं[2] कुर्यात् । अस्मादेवैनं लोकान्निर्बाधते । उभयतः पर्यस्यति प्र-
तिमुञ्चमानः । उभाभ्यामेवैनं लोकाभ्यां निर्भजति । नक्तोषासेत्यहोरात्रा- 5
भ्यामेवैनं परिगृह्णाति । देवा अग्निं धारयन्द्रविणोदा इति । प्राणा वै देवा
द्रविणोदाः । प्राणैरेवैनं दाधार । षडुद्यामं शिक्यं भवति । षड्वा ऋतवः ।
ऋतुभिरेवैनं परिगृह्णाति । द्वादशोद्यामं भवति । द्वादश मासाः संवत्सरः ।
संवत्सरेणैवैनं परिगृह्णाति । मौञ्जं भवति । ऊर्ग्वै मुञ्जाः । ऊर्जैवैनं परिगृह्णा-
ति । नाधोनाभि बिभृयात् । अग्निरस्य रेतो निर्दहेत् । ऊर्ध्वं नाभ्या बिभृयात् । 01
ऊर्ध्वं वै नाभ्याः सदेवम् । अग्निः सर्वा देवताः । सदेव एव देवता बिभर्ति ।
विश्वा रूपाणि प्रतिमुञ्चते कविरिति सावित्र्या प्रतिमुञ्चते प्रसूत्यै । आसीनः
प्रतिमुञ्चते । तस्मादासीनाः प्रजाः प्रजायन्ते । सुपर्णो ऽसि गरुत्मानिति ।
अग्नेर्वा एते संभाराः । अग्निमेवैतैः संभरति । एतद्वा अग्नेः प्रियं धाम । तदे-
वावरुन्द्धे । दिवं गच्छ स्वः पतेति स्वर्गस्य लोकस्य समष्ट्यै । असुराणां वा 15
इमे लोका आसन् । ते देवा विष्णुमब्रुवन्यावदयं कुमारो विक्रमते तावन्नो
दत्तेति । स सकृदेवेमां व्यक्रमत गायत्रीं छन्दः सकृदन्तरिक्षं त्रिष्टुभं छन्दः
सकृद्दिवं जगतीं छन्दः सकृद्दिशो ऽनुष्टुभं छन्दः । ते देवा इमांल्लोकानसुरा-
णामवृञ्जत[3] । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वान्प्रक्रामा-

1. The ms. विद्युरिति.
2. The ms. बहिस्तां.
3. The ms. ०मसृजंतं.

न्प्रक्रामतीमानेव लोकान्भ्रातृव्यस्य वृङ्क्ते । भवत्यात्मना परास्य भ्रातृव्यो भवति । अक्रन्ददग्नि स्तनयन्निव द्यौरित्येतया वै वत्सप्रीर्भालन्दनो ऽग्नेः प्रियं धामावारुन्द्ध । अग्नेरेवैतया प्रियं धामावरुन्द्धे । अग्ने ऽभ्यावर्तिन् ॥ अग्ने अङ्गिरः ॥ पुनरूर्जा ॥ सह रय्येति पुनरेति । तस्माद्ग्राम्याः पशवः सायमर-
5 ण्याद्ग्राममायन्ति । चतसृभिः । चतुष्पादो हि पशवः । दक्षिणा पर्यावर्तते । तस्माद्दक्षिणो ऽर्ध आत्मनो वीर्यवत्तरः । आ त्वाहारिषमिति । आ ह्येनं हरति । विशस्त्वा सर्वा वाञ्छन्त्वस्मे राष्ट्रमधिश्रयेति । यं कामयेत राष्ट्री स्यादिति तं मनसा ध्यायेत् । राष्ट्रमेव भवति । उदुत्तमं वरुण पाशमस्मदिति । शुनःशेपो वा एतामाजीगर्तिर्वरुणगृहीतो ऽपश्यत् । तया वै स वरुणपा-
10 शादमुच्यत । वरुणपाशमेवैतया प्रमुञ्चते । अग्ने बृहन्नुषसामूर्ध्वो अस्थादिति । पाप्मा वै तमः । पाप्मानमेवैतयापहते । हंसः शुचिषदिति । साप्तान्येवैतया प्रीणाति । सदित्यभिपूर्वमेवैनं सति[2] प्रतिष्ठापयति । आसन्द्यां सादयति । स्रूयते वा एषो ऽग्नीनां य उखायां भ्रियते । तस्मादासन्द्यां सादयति । यदधः सादयेत्प्रपादुका गर्भाः स्युः । उपरि सादयति गर्भाणां धृत्या अप्रपादाय[3] ।
15 तिसृभिरुपतिष्ठते । त्रयो वै प्राणाः प्राणो व्यानो ऽपानः । तानेव यजमाने दधाति । त्रय इमे लोकाः । एष्वेव लोकेष्वृध्नोति ॥ १ ॥ Cf. KS. XIX, 11; XVI, 8; MS. III, 2, 1; II, 7, 8; TS. V, 1, 10. 2, 1; IV, 1, 10, 2, 1.

अथैतद्वात्सप्रम् । एतेन वै वत्सप्रीर्भालन्दनो[1] ऽग्नेः प्रियं धामावारुन्द्ध । अग्नेरेवैतेन प्रियं धामावरुन्द्धे । एतेन वै स ऋषीणामधिवादमपाजयत् । पाप्मानमेवैतेनाधिवादमपजयति । एतेन वै सो ऽभिशस्तीरजयत् । अभि-
20 शस्तीरेव जयति य एवं विद्वानेतेनोपतिष्ठते । यत्प्रक्रमान्प्रक्रामति यामं तेन दाधार । यदुपतिष्ठते क्षेमं तेन । पूर्वेद्युः प्रक्रामत्यपरेद्युरुपतिष्ठते । तस्माद्यामे ऽन्यासां प्रजानां मनः क्षेमे ऽन्यासाम् । तस्माद्यायावरः क्षेमस्येशे । तस्माद्यायावरः क्षेम्यमध्यवस्यति । एकादशं भवति । एकादशाक्षरा त्रिष्टुप् । [ वीर्यं त्रिष्टुप् । ] वीर्यमेवावरुन्द्धे । एकेषं वै पुरान आसीत् । तत एतदृषयो

1. The ms. भालन्दा॰.

2. The ms. सदि.

3. The ms. प्रयादयति.

ऽग्नये द्वीषमाधानमपश्यन्[1] । तस्माद्द्वीषमग्नय आधानं कुर्वन्ति । तामिद-मनुकृतिं द्वीषमनः क्रियते । उदु त्वा विश्वे देवा इति । प्राणा वै विश्वे देवाः । प्राणैरेवैनमुद्यच्छते । मनुष्या वै विश्वे देवाः । मनुष्यैरेवैनमुद्यच्छते । अग्ने भरन्तु चित्तिभिरिति । यस्मा एवैनं चित्तायोद्यच्छते तेनैनं समर्धयति । प्रेदग्ने ज्योतिष्मान्याहीति । अभि वा एष एतर्हि प्रजाः शोचयति । शान्त्यै । अक्रन्ददग्निरिति[2] यदि च्यवेदेत् । क्रन्दतैवं[3] ह्यनसा वहन्ति । तस्मा-दनस्वी च रथी चातिथीनामपचिततमौ । अन्नपते अन्नस्य नो देहीत्यन्नमेवास्मै स्वदयति । अनमीवस्य शुष्मिण इत्ययक्ष्मस्येत्येवैतदाह । प्र प्रदातारं तारिष ऊर्जं नो धेहि[4] द्विपदे चतुष्पद इत्याशिषमेवाशास्ते । समिधाग्निं दुवस्यतेति घृतेनाक्त्वा समिधमादधाति । यथा ब्राह्मणायातिथये सर्पि-ष्मन्तं पचत्येवमेव तत् । गायत्र्या ब्राह्मणस्यादध्यात् । गायत्रो हि ब्राह्मणः । त्रिष्टुभा राजन्यस्य । त्रैष्टुभो हि राजन्यः । जगत्या[5] वैश्यस्य । जागतो हि वैश्यः । यथाछन्दसमेव । आपो देवीः प्रतिगृह्णीत भस्मैतदित्यप्सु भस्म प्रवपति । आपो वा अग्नेर्योनिः । स्वमेवैनं योनिं गमयति । तिसृभिः प्रवपति । त्रिवृद्वा अग्निः । यावानेवाग्निस्तं प्रतिष्ठां गमयति । परा वा एषो ऽग्निं वपति यो ऽप्सु भस्म प्रवपति ॥

प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
सिसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः ॥

इति ज्योतिरेवास्मिन्दधाति । ऊर्जा वा एष पशुभिर्व्यृध्यते[6] यो ऽप्सु भस्म प्रवपति । पुनरूर्जा ॥ सह रय्येति पुनरेवोर्जं पशूनवरुन्द्धे । बोधा मे अस्य वचसो यविष्ठेति । तस्मात्प्रजाः सुषुपुषीः प्रबुध्यन्ते । स बोधि सूरिर्मघवा वसुदावा वसुपतिरिति । तस्मात्पशवः प्रेत्वानिर्श्वरित्वा पुनरेत्य यथालोकं

1. The ms. द्वै°.
2. KS. °रित्यनुमन्त्रयते.
3. KS. क्रन्दतव to be corrected.
4. KS. दद्दि is to be corrected. Cf. XVI, 10 (p. 231, l. 20).
5. The ms. जगतीभिर्.
6. The ms. °र्विवृध्यते.
7. The ms. पशु°.
8. The ms. प्रेत्तान°. The emendation is after Prof. Caland's suggestion. Cf. Uṇādisūtra IV, 116.

निषीदन्ति । द्वाभ्याम् । द्विपाद्यजमानः । प्रतिष्ठित्यै ॥ २ ॥ Cf. XXV, 1; KS. XIX, 12; XVI, 10; MS. III, 2, 2; II, 7, 10; TS. V, 2, 1. 2; IV, 2, 3.

अपेत वीत वि च सर्पतात इति देवयजनमध्यवस्यति । यो वा अस्या अधिपतिं देवयजनमनिर्याच्याग्निं चिनुते यमाय ते ऽग्नयश्चीयन्ते । यमो ऽस्या अधिपतिः । यममेवास्या अधिपतिं देवयजनं निर्याच्यात्मने ऽग्निं चिनुते ।
5 इष्वग्रेण ह वा अस्या अनामृतमिच्छन्तो न विविदुः । यदेतेन देवयजनमध्य-वस्यत्यस्या एवानामृते ऽग्निं चिनुते । उवाच ह सनाच्छ्व एतन्मा[1] कतिपयथं यजुरायतनादच्युच्यवदिति । दिवः प्रिये धामन्नग्निश्चेतव्यः । ऊषा वै दिवः प्रियं धाम । यदूषान्निवपति दिव एव प्रिये धामन्नग्निं चिनुते । इष्टका वा एता वैश्वानरीरपरिमिता यत्सिकताः[2] । यत्सिकता[3] उपवपति ता एवावरुन्द्धे ।
10 अयं सो अग्निर्यस्मिन्सोममिन्द्र इत्येतद्विश्वामित्रस्य सूक्तम् । एतेन वै विश्वा-मित्रो ऽग्नेः प्रियं धामावारुन्द्ध । अग्नेरेवैतेन प्रियं धामावरुन्द्धे । चतस्रः प्राची-रुपदधाति । चत्वारि वै छन्दांसि । छन्दोभिर्देवाः स्वर्गं लोकमायन् । तेषां दिशः समव्लीयन्त । त एता दिश्या अपश्यन् । ताभिर्दिशो ऽदृंहन् । यद्द्वे पुर-स्तात्समीची उपदधाति द्वे पश्चात्समीची दिशां विधृत्यै । अष्टावेता उपद-
15 धाति । अष्टाक्षरा गायत्री । गायत्री स्वर्गं लोकमञ्जसा वेद । स्वर्गस्य लोकस्य प्रज्ञात्यै । अष्टावेता उपदधाति । अष्टाक्षरा गायत्री । गायत्रो वा अग्निः । यावानेवाग्निस्तं चिनुते । अष्टावेता उपधार्य त्रयोदश लोकंपृणायो[पद-धाति । ] ता एकविंशतिः संपद्यन्ते । एकविंशो वै स्तोमानां प्रतिष्ठा । प्रतिष्ठा गार्हपत्यः । एकविंशस्यैव प्रतिष्ठामनु गार्हपत्येन प्रतितिष्ठति । प्रत्यग्निं
20 चिक्यानस्तिष्ठति य एवं वेद । पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः । पाङ्क्तो वै यज्ञः । पाङ्क्ताः पशवः । यज्ञं चैव पशूंश्चावरुन्द्धे । त्रिचितीकं चिन्वीत द्वितीयं चिन्वानः । त्रय इमे लोकाः । एष्वेव लोकेष्वृध्नोति । एकचितीकं चिन्वीतोत्तमं चिन्वानः । एकवृदेव स्वर्गं लोकमेति । पञ्च चितयो भवन्ति पञ्च पुरीषाणि । तद्दश । दशाक्षरा विराट् । अन्नं विराट् । विराज्येवान्नाद्ये

1. The ms. शइनाश्छ्व एवं मा.
2. The ms. ॰रा( for ग )ता.
3. The ms. ॰गता.
4. The ms. उपदधाति.

प्रतितिष्ठति । अस्थि वा इष्टका मांसं पुरीषम् । यत्पुरीषेणाभ्यूहति तस्मादस्थि मांसेन च्छन्नम् । न दुश्चर्मा भवति य एवं वेद । समितं संकल्पेथामिति संनिवपति । क्षत्त्रं समेति । ब्रह्म यजुः । ब्रह्मणैवैनौ संनिवपति । चतुर्भिः संनिवपति । चत्वारि वै छन्दांसि । छन्दोभिरेवैनौ संनिवपति । यत्संन्युप्य[1] विहरति तस्माद्ब्रह्मणा क्षत्त्रं समेति ब्रह्मणा व्येति । मातेव पुत्रं पृथिवी[2] पुरीष्यमग्निं स्वे योनावभारुखा । तां विश्वे देवा ऋतुभिः संविदाना इति । ऋतुभिरेवैनं दीक्षयित्वर्तुभिर्विमुञ्चति । प्रजापतिर्विश्वकर्मा विमुञ्चत्विति प्रजापतिमेवास्या विमोक्तारं करोति ॥ ३ ॥ Cf. XXV, 2; KS. XX, 1; XVI, 11; MS. III, 2, 3; II, 7, 11; TS. V, 2, 3. 4; IV, 2, 4. 5.

अथैता नैर्ऋतीस्तिस्रः कृष्णाः । तुषपक्का यत्कृष्णाः । एष हि तं वर्णः सचते यं निर्ऋतिर्गृह्णाति । यत्तुषपक्का एतद्वै निर्ऋत्या भागधेयम्[3] । भागधेयेन च निरवदयते[4] । यदस्य पारे रजस इति वैश्वानर्यादत्ते । स्वदयत्येव । इमां दिशं हरन्ति । एतां दिशं हरन्ति यं निर्ऋतिर्गृह्णाति । एषा वै निर्ऋत्या दिशाम्[5] । स्वायामेव दिशि निर्ऋतिं निरवदयते । स्वकृत इरिण उपदधाति । एतद्वा अस्या निर्ऋतिगृहीतम् । यत्रैवास्या निर्ऋतिगृहीतं निर्ऋतिं निरवदयते । पराचीरुपदधाति । पराचीमेव निर्ऋतिं निरवदयते । तिस्र उपदधाति । त्रेधाविहितो वै पुरुषः । यावानेवास्यात्मा तस्मान्निर्ऋतिं निरवदयते । यं ते देवी निर्ऋतिराबबन्धेति शिक्यमधिन्यस्यति । नैर्ऋतो वै पाशः । निर्ऋतिपाशादेवैनं मुञ्चति । पितृलोकं वा एते निगच्छन्ति ये दक्षिणा नैर्ऋतीभिश्चरन्ति । देवलोक आहवनीयः । यदाहवनीयमुपतिष्ठते देवलोकमेवोपावर्तते । त्रिष्टुभोपतिष्ठते । वीर्यं त्रिष्टुप् । वीर्यमेवास्मिन्दधाति । एकयैकधैवास्मिन्वीर्यं दधाति ॥ ४ ॥ Cf. XXV, 3; KS. XX, 2; XVI, 12; MS. III, 2, 4; II, 7, 12; TS. V, 2, 4; IV, 2, 5.

यावान्पुरुष ऊर्ध्वबाहुस्तावता वेणुना विमिमीते । एतावद्वै पुरुषे

1. The ms. यः.
2. KS. पृथिवीं to be corrected.
3. KS. एतद्वै निर्ऋत्या भागधेयं यत्तुषाः.
4. KS. रूपेण चैव भागधेयेन च निर्ऋतिं निरवदयते.
5. Thus the ms. KS. ms. दिशं, which has been emended by Schroeder to दिक्.

वीर्यम् । वीर्येणैवैनं विमिमीते । त्रीन्पुरुषान्प्राञ्चं मिमीते चतुरस्तिर्यञ्चम् । तस्मात्सप्त पुरुषानभ्यग्निचिदन्नमत्ति त्रीन्पुरस्तात्त्रीनधस्तादात्मा सप्तमः । अरत्निमात्रं पक्षयोरुपदधाति प्रादेशमात्रं पुच्छे । पुरुषेण वै यज्ञः संमितः । यज्ञपुरुषासंमितम् । तस्मात्पक्षप्रवयांसि वयांसि । षड्गवेन
5 कृषति । षड्वा ऋतवः । ऋतुभिरेव । तिस्रस्तिस्रः सीताः संपादयति । त्रिवृद्वा अग्निः । ता द्वादश संपद्यन्ते । द्वादश मासाः संवत्सरः । संवत्सरस्यैव विधामनुविधीयते । अथो ऋतुभिरेव कृष्ट्वा संवत्सरे प्रतितिष्ठति । इयं वा अग्नेरतिदाहादबिभेत् । सैतद्द्विगुणं कृष्टं चाकृष्टं चाकुरुत । यत्कृष्टं चाकृष्टं च भवत्यस्या अनतिदाहाय । अथो द्विगुणेनैवास्या वीर्यमुद्यच्छते ।
10 एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च । तानेतदग्नौ प्रतिदधाति । यदुदीच उत्सृजेद्रुद्राय पशूनपिदध्यादपशुः स्यात् । यद्दक्षिणा पितृभ्यो निर्धूर्वेत्[2] । यत्प्रतीचो रक्षांसि हन्युः । दक्षिणा प्राचः[3] सूर्यमभ्युत्सृजति । सूर्यो वै पशूनां प्राणः । प्राणमेवैनानभ्युत्सृजति । ओषधीनामृग्भिः । ओषधीनां फलानि वपति । रूपेणैवान्नमवरुन्द्धे । अन्नस्यान्नस्य वपति ।
15 सर्वमेवान्नमवरुन्द्धे । यस्य न वपति तेन व्यृध्यते । यस्य न वपेत्तदिध्मे ऽपि प्रोक्षेत् । तेनैव तदवरुन्द्धे । चतुर्दशभिर्वपति । सप्त वै ग्राम्या ओषधयः सप्तारण्याः । ता एवावरुन्द्धे । अर्को वा अग्निरन्नमर्कः । अर्क एवैतदर्कश्चीयते । कृष्टे वपति । कृष्टे ह्याशिष्ठमोषधयः प्रतितिष्ठन्ति । अनुसीतं प्रजात्यै । द्वादशसु सीतासु वपति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नं पचति ॥ ५ ॥

Cf. KS. XX, 3; MS. III, 2, 4. 5; TS. V, 2, 5.

20 दिग्भ्यो लोष्टान्समस्यति । दिग्भ्य ऊर्जं संभरति । ऊर्ज्यैवाग्निं चिनुते । यां जनतां द्विष्यात्तस्या दिश आहरेत् । इषमूर्जमहमित आदमिति । इषमेवास्या ऊर्जमादत्ते क्षोधुका भवति । उत्तरवेदिं निवपति । उत्तरवेद्यां ह्यग्निश्चीयते । अथो यज्ञपरुरेव नान्तरेति । पशवो वा उत्तरवेदिः । पशूनेवावरुन्द्धे । अग्ने तव श्रवो वय इति षड्ऋचेन निवपति । षड्वा ऋतवः संवत्सरः ।

1. Thus the ms. KS. त्रीन्परस्तात्त्रीनवस्तादा॰.
2. The ms. धुध्नुते.
3. The ms. प्रातः.

संवत्सरो ऽग्निर्वैश्वानरः । रूपेणैव वैश्वानरमवरुन्द्धे । अष्टाक्षरा प्रथमा । अष्टाशफाः पशवः । पशूनेवावरुन्द्धे । ऊनातिरिक्ता मिथुनाः । प्रजात्यै । समुद्रं[1] वै नामैतत्प्रजापतेश्छन्दः । समुद्रात्पशवः प्रजायन्ते । पशूनां प्रजात्यै । इन्द्रो वै वृत्राय वज्रं प्राहरत् । स त्रेधाभवत्स्फ्यस्तृतीयं यूपस्तृतीयं रथस्तृतीयम् । यदशीर्यत ताः शर्कराः । पशुर्वा अग्निः । वज्रः शर्कराः । 5
यच्छर्कराभिः परिमिनोति वज्रेणैवास्मै पशून्परिगृह्णाति । तस्मात्पशवो वज्रेण विधृताः । तस्मात्स्थेयानस्थेयसो नादत्ते । दशभिर्दशभिः परिमिनुयादन्नकामस्य । दशाक्षरा विराट् । अन्नं विराट् । विराज्येवान्नाद्ये प्रतितिष्ठति । नवभिर्नवभिरभिचरतः । त्रिवृद्वज्रः । वज्रमेव भ्रातृव्याय प्रहरति । सप्तभिःसप्तभिः पशुकामस्य । सप्त वै प्राणाः । प्राणेभ्यः पशवः प्रजायन्ते । 10
पशूनां प्रजात्यै । अपरिमित्य शर्कराः सिकता[2] व्यूहेद्यं कामयेतापशुः स्यादिति । अपरिगृहीतमेवास्य रेतः परासिञ्चत्यपशुर्भवति । परिमित्य शर्कराः सिकता व्यूहेद्यं कामयेत पशुमान्स्यादिति । परिगृहीतमेवास्मै रेतः सिञ्चति पशुमान्भवति । छन्दांसि वा अग्नेर्योनिः सोमो रेतोधाः । यच्छन्दोभिर्न्युप्य सौम्या व्यूहति योनावेव रेतो दधाति । व्यूहति । तस्माद्योनौ गर्भा 15
वर्धन्ते । नानाप्रभृतयो भवन्ति समानोदर्काः[3] । तस्मात्समानाद्योनेर्नानारूपाः प्रजायन्ते । गायत्र्या ब्राह्मणस्य व्यूहेत् । गायत्रो हि ब्राह्मणः । त्रिष्टुभा राजन्यस्य । त्रैष्टुभो हि राजन्यः । जगत्या वैश्यस्य । जागतो हि वैश्यः । यथाछन्दसमेव ॥ ६ ॥ Cf. XXV, 5; KS. XX, 4; XVI, 14; MS. III, 2, 5; II, 7, 14; TS. V, 2, 5. 6; IV, 2, 7.

उपांश्वन्वाह । अनिरुक्तो वा एतर्हि यज्ञो यर्ह्यव्यावृत्तः । तस्मादुपांश्वन्वाह । छन्दांस्यन्वाह । छन्दोभिर्वा अग्निरुत्तरवेदिमानशे । तस्माच्छन्दांस्यन्वाह । सूर्यस्यैवैतदध्वानं यन्ति यदश्वं प्राञ्चं च प्रत्यञ्चं चाक्रमयन्ति । तस्मादसावादित्यः प्राङ् चैति प्रत्यङ् च । प्राजापत्यो ऽश्वः । यदश्वमाक्रमयति प्रजापतिनैवैनं चिनुते । अपां पृष्ठमसि योनिरग्नेरिति पुष्कर- 20

1. The ms. समुद्रो.
2. The ms. सिगता.
3. KS. समानप्रभृतयो भवन्ति नानोदर्कास्.

पर्णमुपदधाति । अपी ह्येतत्पृष्ठं योनिरग्नेः । यत्पुष्करपर्णमुपदधाति स्व एवैनं योनौ चिनुते । शान्त्या अनिर्दाहाय । वर्धमानो महाँ[1] आ च पुष्कर इति । वर्धते ह्येष यो भवति । दिवो मात्रया वरिणा प्रथस्वेति प्रथयत्येव । ब्रह्म जज्ञानं प्रथमं पुरस्तादिति रुक्ममुपदधाति । ब्रह्म-
5 मुखाभिर्वै प्रजापतिः प्रजाभिरार्ध्नोत् । ऋद्ध्यै । एकविंशतिर्निर्बाधो भवति प्रतिष्ठित्यै । एकविंशतिर्देवलोकाः । तेभ्य एव भ्रातृव्यं निर्बाधते । अधस्तान्निर्बाधान्करोति भ्रातृव्यस्यैव निगृहीत्यै । न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्यः । यत्पृथिव्यां चिन्वीतौषधीः शुचा निर्दहेत् । यदन्तरिक्षे वयांसि यद्दिवि दिवम् । अमृतं हिरण्यम् । यद्रुक्ममुपदधात्यमृत
10 एवाग्निं चिनुते । हिरण्यगर्भः समवर्तताग्र इति पुरुषं हिरण्मयमुपदधाति । यजमानलोकमेवैतेन दाधार[2] । अथो मध्येज्योतिषमेवाग्निं चिनुते । द्रप्सश्चस्कन्देत्यभिमृशति । होत्रास्वेवैनं सत्ये प्रतिष्ठापयति । सर्पशीर्षैरुपतिष्ठते । मृत्यव एवैनं परिददाति[3] । अथो या सर्पे त्विषिस्तामेवावरुन्द्धे । यदुपदध्यात्प्रमायुकः स्यात् । यत्समीचीनमितरैः शीर्षैरुपदध्याद् ग्राम्यान्पशून्दंशुकाः
15 स्युः । यद्विषूचीनमारण्यान् । यजुरेव वदेत् । तेनैव तां त्विषिमवरुन्द्धे । तेन शान्तम् । एतस्माद्ध वै पुराग्निचितमादिद्दक्षन्ते[4] । सर्वा ह्येतास्त्विषीरवारुद्ध याग्नौ या सर्पे या सूर्ये । अथैतद्वामदेवस्य रक्षोघ्नम् । यज्ञमुखेयज्ञमुखे वै यज्ञं रक्षांसि जिघांसन्ति । रक्षसामपहत्यै । पञ्चर्चं भवति । पाङ्क्तो ऽग्निः । यावानेवाग्निस्तस्माद्रक्षांस्यपहन्ति । सर्वा दिशो ऽनुपरिचारं जुहोति ।
20 दिग्भ्य एव रक्षांसि हन्ति । स्रुचावुपदधाति । इमे एवैतदुपधत्ते । तूष्णीमुपदधाति । न हीमे यजुषाप्तुमर्हति । आत्मा वै पुरुषो बाहू स्रुचौ । यत्स्रुचावुपदधाति सात्मत्वाय । दक्षिणतो वै देवानां यज्ञं रक्षांस्याहुतीर्निष्कावमादन् । तानि कार्ष्मर्येणापाघ्नत । यत्कार्ष्मर्यमयीं[5] दक्षिणत उपदधाति रक्षसामन्तर्हित्यै । घृतेन पूरयति । वज्रो वै कार्ष्मर्यो वज्रो घृतम् । वज्र

1. The ms. महं.
2. KS. दधार to be corrected.
3. KS. ०दधाति to be corrected.
4. Thus Schroeder. The ms. पुराग्निचितमग्निद्विदिक्षिमित.
5. KS. ०मयीर् to be corrected.

एव वज्रं दधाति । गायत्र्योपदधाति । गायत्रो वा अग्निर्गायत्रच्छन्दाः । स्वेनैवैनं छन्दसा समर्धयति । दध्नौदुम्बरीं पूरयति । अन्नं वै दध्यूर्गुदुम्बरः । अन्न एवोर्जं दधाति । त्रिष्टुभोपदधाति । ऐन्द्री वै त्रिष्टुप् । अन्नमिन्द्रियम् । इन्द्रियमेवान्नाद्यमवरुन्द्धे । इयं वै कार्ष्मर्यमय्यसावौदुम्बरी । यदौदुम्बरीमुत्तरामुपदधाति तस्मादसावस्या उत्तरा मूर्धन्वती । मूर्धैवैताभ्यां क्रियते । 5
विराज्यग्निश्चेतव्यः । स्रुग्वै विराट् । यत्स्रुचावुपदधाति विराज्येवाग्निं चिनुते ॥ ७ ॥ Cf. XXV, 6; KS. XX, 5; XVI, 15; MS. III, 2, 6; II, 7, 15; TS. V, 2, 6. 7; IV, 2, 8.

यां वा अविद्वानध्वर्युरिष्टकां प्रथमामुपदधाति तया यजमानस्य प्राणमपिदधाति प्रजायाश्च पशूनां च । स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै । प्राजापत्यो ऽश्वः । यदश्वमुपघ्रापयति प्रजापति- 10
नैवैनं चिनुते । इयं वै स्वयमातृण्णा । इमामेवैतदुपधत्ते । यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति प्राचीमुदूहेत् । य एवैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तमनया प्रणुदते । यदि मन्येत पश्चादिव मा भ्रातृव्य इति प्रतीचीमपोहेत् । य एवैनं पश्चाद्भ्रातृव्यस्तमनयापनुदते । यदि मन्येत सद्दङ् मयेति विचालयेत् । या वा इयं प्रजा व्यधूनुत परा ता अभवन् । इयमेवैनं विधूनुते । 15
अथैषा दूर्वेष्टका । पशुर्वा अग्निः । न पशव आयवसे रमन्ते । पशुभ्य एवैतदायतनं करोति । पशूनां धृत्यै । काण्डात्काण्डात्प्ररोहन्तीति प्रतिष्ठित्यै । सहस्रेण शतेन चेति । सहस्रवती प्रजापतिना संमिता । गच्छति साहस्रीं पुष्टिं पशूनां य एवं विद्वानेतामुपधत्ते । अथैषा वामभृत् । एतया वै देवा असुराणां वामं पशूनवृञ्जत । वाममेवैतया पशून्भ्रातृव्यस्य वृङ्क्ते । द्वियजुर्भवति । भ्रातृव्यलोकमेव द्वियजुषा वृङ्क्ते । द्वितीये हि लोके भ्रातृव्यो 20
हिरण्यशीर्ष्णी भवति । हिरण्यज्योतिरेव स्वर्गं लोकमेति । प्रबाहुकाचावाहतौ[1] भवतः । तस्मात्प्रबाहुगक्ष्यौ[2] । अथैते रेतःसिचौ । असौ वै स्वराडियं विराट् । उत्तानायाँ स्त्रियां पुमान्रेतः सिञ्चति । असावस्यां रेतः सिञ्चतीयं

1. ? The ms. प्रवाहुकाः आहतौ. Schroeder's Kap. copy प्रबाहुः का चा आहतौ.
2. ? The ms. प्रबाहुकक्षा.

प्रजनयति । अग्निरत्ति । सरेतसमग्निं चिनुते । प्रजायते ऽत्त्यन्नं य एवं विद्वा-
नेते[1] उपधत्ते । स्वराडसीति दक्षिणत उपदधाति । तस्माद्दक्षिणतः पुमान्स्त्रि-
यमुपशये । यदि पूर्ववयसे चिन्वीतोभे सह प्रथमायां चित्यामुपदध्यात् ।
समीची एवास्मै रेतः सिञ्चतः । अन्यतरामुपदध्याद्यं द्विष्यात्तस्य । रेतसैवैनं
5 व्यर्धयति । यद्युत्तरवयसे चिन्वीत प्रथमायामन्यां चित्यामुपदध्यादुत्तमाया-
मन्याम् । रेत एव सिक्तमाभ्यां परिगृह्णाति । ऋतव्ये उपदधात्यृतूनां विधृत्यै ।
द्वेद्वे उपदधाति । द्वौद्वौ ह्यृतवः । अथैषा त्र्यालिखिता । देवाश्च वा असुराश्च
समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकुर्वत तदसुरा अकुर्वत । ते देवा एतां
त्र्यालिखितामपश्यन् । तामुत्तरलक्ष्माणमुपादधत । तदसुरा नान्ववायन् ।
10 ततो देवा अभवन् [परासुरा अभवन् । ] य एवं विद्वानेतामुत्तरलक्ष्माणमुपधत्ते
भ्रातृव्यस्यानन्ववायाय । भवत्यात्मना परास्य भ्रातृव्यो भवति । अधर-
लक्ष्माणमुपदध्याद्यं द्विष्यात्तस्य । असुरयोनिमेवैनमनुपराभावयति । इमे
वै लोकास्त्र्यालिखिता । इमानेवैतया लोकानाप्नोति । यस्या मृद उखां
कुर्वन्ति तस्या एतां कुर्यात् । तेनैवास्य सर्वा इष्टका ज्योतिष्मतीर्यजुष्मती-
15 र्भवन्ति ॥ ८ ॥ Cf. KS. XX, 6; XVI, 16; MS. III, 2, 6. 7; II, 7, 15; TS. V, 2, 8; IV, 2, 9.

मेधो वा एष पशूनां यत्कूर्मः । यत्कूर्ममुपदधात्येतमेवैनं मेधमभिसंजा-
नानाः पशव उपतिष्ठन्ते । जीवन्तमुपदधाति । स हि मेध्यः । चतुष्पाद्भवति ।
चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति । मही द्यौः पृथिवी च न इति । द्यावा-
पृथिव्योरेवैतया रूपे दाधार । दध्ना च मधुना चाभ्यनक्ति । अपां वा एष
20 ओषधीनां रसो यन्मधु । यन्मधुनाभ्यनक्त्यपामेवौषधीनां रसमवरुन्द्धे । मेधो
वा एष पशूनामूर्ग्दधि । यद्दध्नाभ्यनक्ति पशूनामेव मेध ऊर्जं दधाति । इष्टक-
चिद्वा अन्यो ऽग्निः पशुचिदन्यः । यज्जीवन्तं कूर्ममुपदधाति तेनैवैनं पशु-
चितं करोति । एष वै स्वर्गस्य लोकस्योत्तमपदी । यथा प्रजानन्क्षेत्रविद-
ञ्जसान्यान्नयत्येवमेवैनमेष स्वर्गं लोकमभिनयति[2] । विष्णोर्नाभावग्नि-
25 श्चेतव्यः । यो वा अनाभिमग्निं चिनुते यजमानस्य नाभिमनुप्रविशति । स

1. The ms. ०नेता.

2. The ms. क्षेत्रविदंधपायंन्या न०.

एनं निर्दहति । एषा वै विष्णोर्नाभिर्यदुलूखलमुपदधाति । विष्णोरेव नाभावग्निं चिनुते । औदुम्बरं भवति । ऊर्ग्वा उदुम्बरः । ऊर्जमेव मध्यतो दधाति । तस्मान्मध्यतः ऊर्गूर्जयति । प्रादेशमात्रं भवति । एतावती हि विष्णोर्नाभिः । वैष्णव्या कर्मण्यभ्योपदधाति । कर्म ह्येतत्क्रियते । अथैषोखा । ओजो वा एतद्वीर्यं संभ्रियते यदुखा । ओज एव वीर्यं 5 मध्यतो दधाति[1] । एषां वा एतल्लोकानां ज्योतिरवरुन्द्धे[2] । ज्योतिरेव मध्यतो दधाति । मध्येज्योतिषमग्निं चिनुते । तस्मान्मध्यतो[3] ज्योतिरुपासते । सिकताभिः[4] पूरयति स्वेनायतनेन । अग्नेर्वा एतद्वैश्वानरस्य भस्म यत्सिकताः[5] । रूपेणैव वैश्वानरमवरुन्द्धे । यदूनामुपदध्यात्त्वोधुको यजमानः स्यात् । पूर्णामुपदधात्यत्त्वोधुको[6] यजमानो भवत्यनुपदस्यदन्नमत्ति । घृतेन 10 पूरयति । एतद्वा अग्नेः प्रियं धाम यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति ॥ ९ ॥ Cf. KS. XX, 7; XVI, 16; MS. III, 2, 7; TS. V, 2, 9.

एकविंशतिं माषान्प्रतिन्युप्य पुरुषशीर्षमाहरति । अमेध्या वै माषा अमेध्यं पुरुषशीर्षम् । अमेध्येनैवामेध्यं क्रीणाति । एकविंशतिर्भवन्ति । एकविंशो वै पुरुषः । यावानेवास्यात्मा तं क्रीणाति । सप्तधातृण्णां वल्मीकवपां 15 प्रतिनिदधाति । व्यृद्धं वा एतत्प्राणैः । सप्त शीर्षण्याः प्राणाः । प्राणैरेवैनत्समर्धयति । यमगाथा गायति । यमलोकादेवैनद्वृङ्क्ते । तिस्रो गायति । त्रय इमे लोकाः । एभ्य एवैनल्लोकेभ्यो वृङ्क्ते । तस्माद्गायते न देयम् । गाथा ह्येव तद्वृङ्क्ते । अप वा एतस्मादिन्द्रियं[7] क्रामति प्राणाः शीर्षं[8] वीर्यं चक्षुः श्रोत्रं वाक् । व्यृद्धेन्द्रियं[9] वा एतदमेध्यम् । मृतशीर्षामिति वा एत- 20 दाहुः । मेध्यं हिरण्यम् । यद्धिरण्यशल्कैः प्रत्यस्यति मेध्यमेवैनद्याज्ञियं करोति । उखायामपिधाय प्रत्यस्यति । प्रतिष्ठामेवैनद्गमयित्वा प्राणैः

1. KS. अवरुन्द्धे for मध्यतो दधाति.
2. Thus KS. The ms. एषा वर्ता लोकानां ज्योति संभृतं यदुखे कामेव लोकानां ज्योतिरवरूंधे.
3. The ms. omits तो.
4. The ms. सिगताभिः.
5. The ms. यत्सिगता.
6. KS. पूर्णां० to be corrected.
7. The ms. वीर्यं for इन्द्रियं.
8. KS. शीर्षन्.
9. The ms. विवृद्धे०.

समर्धयति । सहस्रदा असि सहस्राय त्वेति पुरुषशीर्षमुपदधाति । पुरुषो ह त्वै सहस्रं पशून्यच्छति । सहस्रमन्ये पशवः । यन्मध्ये पुरुषशीर्षमुपदधाति सयत्वाय । अथैतानि पशुशीर्षाणि । एता ह वै साहस्रीरिष्टकाः सोमदक्षः कौश्रेयः श्यापर्णायोपदधौ[1] । ततो ह वै स साहस्रीं पुष्टिं पशूनां जगाम ।
5 गच्छति साहस्रीं पुष्टिं पशूनां य एवं विद्वानेता उपधत्ते । पुरस्तात्प्रतीचीनमश्वस्य शिर उपदधाति पश्चात्प्राचीनमृषभस्य । गोअश्वानेवास्मिन्समीचो दधाति । समीचीनान्युपदध्याद्यं कामयेत पशुमान्स्यादिति । समीच एवास्मिन्पशून्दधाति । विषूचीनान्युपदध्याद्यं कामयेतापशुः स्यादिति । विमुखानेवास्मात्पशून्करोति । नान्तरा पशुशीर्षाणि व्यवेयादध्वर्युः ।
10 यविष्ठो[2] वै नामैषो ऽग्निः । प्राणानस्य युवेत प्रमीयेत । एकमुपधायैतैः सर्वैरुपतिष्ठते । तद्वा[3] सर्वतो ऽनुपरिहारं सादयेत् । तेनैव सर्वाण्युपधीयन्ते । नार्तिमार्छत्यध्वर्युर्न श्रेयं न्येति । एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च । तानेतच्छुचार्पयति । अमुमारण्यमनु ते दिशामि तं ते शुगृच्छत्विति । ग्राम्येभ्य एव पशुभ्य आरण्यान्पशूञ्शुचमनूत्सृजति । तस्मादेते समावत्पशूनां
15 प्रजायमानानां कनिष्ठाः । शुचा ह्येत ऋताः ॥ १० ॥ Cf. KS. XX, 8; XVI, 16; MS. III, 2, 7; TS. V, 2, 9.

पशुर्वा एष यदग्निः । पशोरेष योनिर्विक्रियते । रेतो ऽपस्याः । यदपस्या उपधीयन्ते[4] योनावेव रेतो दधाति । यदा वै पशुः संवर्तते ऽथ जायते । पशवश्छन्दस्याः । यदपस्या अनु च्छन्दस्या उपदधाति पशूनां प्रजात्यै । पञ्चैता उपदधाति । पाङ्क्ताः पशवः । यावानेव पशुस्तं प्रजनयति । इयं
20 वा अग्नेरतिदाहादबिभेत् । सैता अपस्या असृजत । ता उपाधत्त । यदपस्या उपधीयन्ते ऽस्या अनतिदाहाय । उवाच हेयमददित्सं[5] ब्रह्मणान्नं यस्यैता उपधीयन्त इति । अत्ति ब्रह्मणान्नं य एवं विद्वानेता उपधत्ते । पञ्च पुरस्तात्प्रतीचीरुपदधाति । तस्मात्पुरस्तात्प्रत्यङ् पशुर्जायते ।

1. The ms. स्या० , KS. श्याम०.
2. The ms. यविष्ठयो.
3. The ms. तद्ध इव.
4. KS. उपदधाति.
5. The ms. देहमविरिक्ष.

पञ्च दक्षिणत उदीचीः। तस्माद्दक्षिणतः पुमान्स्त्रीमुपशये। पञ्च पश्चात्प्राचीः। तस्मात्पश्चात्प्राचीनं रेतो धीयते। पञ्चोत्तराच्छन्दस्याः। पशवो वै छन्दस्याः। उत्तरादायतनाः पशवः। पशूनेव प्रजातान्स्वमायतनमभिपर्यूहति। पशूनामहिंसायै। नोत्तरादपस्या उपदध्यात्। यदुपदध्याद्भीपतः प्रजा वरुणो गृह्णीयात्। अपस्या अनु प्राणभृत उपदधाति। 5
रेतस्येव सिक्ते प्राणं मनश्चक्षुः श्रोत्रं वाचं दधाति। तस्मात्प्राणन्पश्यञ्शृण्वन्वदन्पशुर्जायते। अयं पुरो भूरिति याः प्राणवतीस्ताः पुरस्तादुपदधाति। प्राणमेव पुरस्ताद्दधाति। तस्मात्प्राङ् पशुः प्राणिति। अयं दक्षिणा विश्वकर्मेति या मनस्वतीस्ता दक्षिणतः। मन एव दक्षिणतो दधाति। तस्माद्दक्षिणोऽर्धो मनस्वितरस्तस्माद्दक्षिणतो मन उपचरन्ति। अयं पश्चाद्विश्वव्यचा 10
इति याश्चक्षुष्मतीस्ताः पश्चात्। चक्षुरेव पश्चाद्दधाति। तस्मात्प्राङ्[1] पश्यति। इदमुत्तरात्स्वरिति याः श्रोत्रवतीस्ता उत्तरात्। श्रोत्रमेवोत्तराद्दधाति। तस्मादुत्तरात्पशुर्भूयः शृणोति। इयमुपरि मतिरिति या वाग्मतीस्ता मध्ये। वाचमेव मध्यतो दधाति। तस्मान्मध्यतो वाग्वदति। अक्ष्णयोपदधाति। तस्मादक्ष्णया पदः पशवः प्रहरन्तो यन्ति। याः पुरस्तात्ताभिर्वसिष्ठ 15
आर्ध्नोत्[2]। या दक्षिणतस्ताभिर्भरद्वाजः। याः पश्चात्ताभिर्जमदग्निः। या उत्तरात्ताभिर्विश्वामित्रः। या मध्ये ताभिर्विश्वकर्मा। य एवमेतासामृद्धिं वेदर्ध्नोति। य एवमासां क्लृप्तिं वेद कल्पतेऽस्मै। य एवमासां बन्धुतां वेद बन्धुमान्भवति। य एवमासां निदानं वेद निदानवान्भवति। य एवमासामायतनं वेदायतनवान्भवति। य एवमासां प्रतिष्ठां वेद गच्छति प्रतिष्ठाम्
॥ ११ ॥ Cf. XXV, 9; KS. XX, 9; XVI, 19; MS. III, 2, 8; II, 7, 19; 20
TS. V, 2, 10; IV, 3, 2.

अथैता आश्विनीः। उत्सन्नयज्ञो वा एष यदग्निः। को ह तद्वेद यावदेतस्य न क्रियते यावन्न चीयते। अश्विनौ देवानां भिषजौ। यदेवास्यात्र न क्रियते यन्न चीयते[3] तदेताभिः कल्पयति तद्भिषज्यति। पञ्चैता उपदधाति।

1. KS. adds पशुः.
2. The ms. पुरस्ताभि॰.
3. अश्विनौ......चीयते is missing in KS.

पाङ्क्तो ऽग्निः। यावानेवाग्निस्तस्मै भेषजं करोति। अग्नेरेवैताभिर्दिशः कल्प-
यते। अदित्यास्त्वा पृष्ठे सादयामीति। इमानेवैतया लोकान्दाधार। ऋतव्या
उपदधात्यृतूनां विधृत्यै। पञ्चोपदधाति। पञ्च वा ऋतवः। यावन्त एवर्तव-
स्तान्कल्पयति। समानप्रभृतयो भवन्ति समानोदर्काः। समानप्रभृतयो ह्यृतवः
5 समानोदर्काः। एकया व्याहृत्या व्यावर्तयति। तस्मादृतवो व्यावर्तन्ते। तस्मा-
त्समानस्य संवत्सरस्य नाना रूपाणि। आश्विनीरन्वृतव्या उपदधाति।
रेतस्येव हितं[1] ऋतूनुपदधाति। तस्माद्रेतो हितमृतूननु प्रजायते। ऋतव्या
अनु वायव्या उपदधाति। ऋतुष्वेव प्राणं दधाति। तस्मादेते समानाः परि·
यन्तो न जीर्यन्ति। तस्मादृतूननु वायुरावरीवर्त्ति। वायव्या अन्वपस्या
10 उपदधाति। तस्माद्वायुर्वृष्टिं वहति। वृष्टिमेवैताभिरवरुन्द्धे। यदेकधोपदध्या-
देकमृतुं वर्षेत्[2]। अनुपरिहारं सादयति। तस्मादृतुमृतुं वर्षति। अपस्या अनु
वयस्या उपदधाति। पशवो वै वयस्याः। यदपस्या अनु वयस्या उपदधाति
तस्मान्नानामनसः पशवो नानाव्रता अप एवाभि समनसः। अपस्या उप-
धाय वयस्या उपदध्याद्यं कामयेत पशुमान्स्यादिति। संज्ञानं वा एतत्पशूनां
15 यदापः। संज्ञान एव पशूनां[3]मग्निं चिनुते। पशुमान्भवति। वयस्या उपधा-
यापस्या उपदध्याद्यं कामयेतापशुः स्यादिति। पशूनामेवासंज्ञाने ऽग्निं
चिनुते। अपशुर्भवति। चतस्रः पुरस्तादुपदधाति। तस्मात्पुरस्तात्पशुरणी
यान्। तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे। मूर्धन्वतीः। तस्मा-
त्पुरस्तात्पशूनां मूर्धा। पञ्चपञ्चाभितः पशोः सयत्वाय। तस्मात्प्राङ् पशुः
20 प्रवणः। बस्तो वय इति दक्षिणत उपदधाति। वृष्णिर्वय इत्युत्तरात्। अंसा-
वेवास्योपदधाति। व्याघ्रो वय इति दक्षिणे पक्षे। सिंहो वय इत्युत्तरस्मिन्।
पक्षयोरेव वीर्यं दधाति। व्याघ्रो वय इति पूर्वाम्। सिंहो वय इत्यपराम्।
तस्मात्पुरो व्याघ्रो जायते पश्चात्सिंहः। पुरुषो वय इति मध्ये। तस्मात्पु-
रुषः पशूनामधिपतिः॥ १२ ॥ Cf, XXV, 10; XXVI, 1; KS. XX, 10; XVII,
1. 2; MS. III, 2, 9; TS. V, 3, 1; IV, 3, 5.

1. The ms. हिता.

2. The ms. वरिषेद्.

3. KS. पशूनामेव संज्ञाने.

इन्द्राग्नी अव्यथमानामिति । ओजो वै वीर्यमिन्द्राग्नी । अन्तरिक्षमेषा चितिः । शिथिलमिवान्तरिक्षम् । प्रजा अन्तरिक्षम् । प्रजास्वेवौजो वीर्यं दधाति । स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै । प्राजापत्यो ऽश्वः । यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुते । अथैता दिश्याः । देवानां वै स्वर्गं लोकं यतां तेषां दिश समव्लीयन्त । 5
त एता दिश्या अपश्यन् । ताभिर्दिशो ऽदृंहन् । यदेता उपधीयन्ते दिशां विधृत्यै । राज्ञ्यसि प्राची दिगिति । तस्मादेषा दिशां राज्ञी । विराडसि दक्षिणा दिगिति । तस्मादेषा दिशां विराजति । सम्राडसि प्रतीची दिगिति । तस्मादत्र साम्राज्यम् । स्वराडस्युदीची दिगिति । तस्मादत्र स्वाराज्यम् । अधिपत्न्यसि बृहती दिगिति । तस्मादेषा दिशामधिपत्नी । एतान्येव सर्वाणि 10
भवति य एवं विद्वानेता उपधत्ते । आयुर्मे पाहीति दश पुरस्तादुपदधाति । नव वै पुरुषे प्राणा नाभिर्दशमी । प्राणानेवास्मिन्दधाति । ज्योतिर्मे यच्छेत्युत्तमाम् । ज्योतिरेवोत्तमं दधाति । तस्माद्वाक्प्राणानां ज्योतिरुत्तमम् । दशैता उपदधाति । दशाक्षरा विराट् । विराट् छन्दसां ज्योतिः । चक्षुर्ज्योतिः । चक्षुरेव प्रजानां पुरस्ताद्दधाति । मा छन्द इति दक्षिणतः । 15
तस्माद्दक्षिणावृतो मासाः । पृथिवी छन्द इति पश्चात्प्रतिष्ठित्यै । अग्निर्देवतेत्युत्तरात् । ओजो वा अग्निः । ओज एवोत्तराद्दधाति । तस्मादुत्तरादभिप्रयायी जयति[1] । द्वादश दक्षिणत उपदधाति । द्वादश पश्चाद्द्वादशोत्तरात् । ताः षट्त्रिंशत्संपद्यन्ते । षट्त्रिंशदक्षरा बृहती । बृहती छन्दसां स्वाराज्यमानशे । स्वाराज्यं गच्छति य एवं विद्वानेता उपधत्ते । 20
षट्त्रिंशदेताः । षट्त्रिंशदक्षरा बृहती । बार्हताः पशवः । अन्तरिक्षमेषा चितिः । पशवो ऽन्तरिक्षम् । पशुष्वेव पशून्दधाति । आदित्यधामानो वा अन्ये प्राणा अङ्गिरोधामानो ऽन्ये । ये पुरस्तात्त आदित्यधामानो ये पश्चात्ते ऽङ्गिरोधामानः । मूर्धासि राडिति पुरस्तादुपदधाति । य आदित्यधामानः प्राणास्तींस्तद्दाधार । यन्त्री राडिति पश्चात् । ये ऽङ्गिरोधामानः प्राणा- 25
स्तींस्तद्दाधार । सप्त पुरस्तादुपदधाति सप्त पश्चात् । तस्मादधरः प्राण उत्तरेषां

1. The ms. °प्रयायै यजति.

प्राणानामर्धभाक् । प्रजापतिः प्रजाः सृष्ट्वा तासामकामयत मूर्धा स्यामिति । स एता मूर्धन्या अपश्यत् । ताभिर्निरजिहीत । तासां मूर्धाभवत् । तन्मूर्धन्यानां मूर्धन्यात्वम् । मूर्धैव समानानां भवति य एवं विद्वानेता उपधत्ते ॥ १३ ॥ Cf. XXVI, 2; KS. XX, 11; XVII, 3; MS. III, 2, 9; II, 8, 3; TS. V, 3, 2; IV, 3, 6. 7.

5 आशुस्त्रिवृदिति पुरस्तादुपदधाति । यज्ञमुखं वै त्रिवृत् । यज्ञमुखमेव पुरस्ताद्वियातयति । व्योमा सप्तदश इति दक्षिणतः । अन्नं वै सप्तदशः । सप्तदशं वै संवत्सरमन्नमनुप्रजायते । अन्नमेव दक्षिणतो दधाति । तस्माद्दक्षिणेन हस्तेन पुरुषो ऽन्नमत्ति । यत्सप्तदशवर्तीं[1] दक्षिणत उपदधाति तस्माद्दक्षिणं पक्षं वयांस्यनुपरिप्लवन्ते । एकविंशवर्तीं पश्चात्प्रतिष्ठित्यै ।
10 पश्चाद्धि वयांसि प्रतितिष्ठन्ति । पञ्चदशवर्तीमुत्तरात् । ओजो वै पञ्चदशः । ओज एवोत्तराद्दधाति । तस्मादुत्तरादभिप्रयायी जयति[2] । प्रतूर्तिरष्टादश[3] इति पुरस्तात् । द्वौ त्रिवृतावभिपूर्वमेव यज्ञमुखे वियातयति । पञ्चदशवर्तीं[4] दक्षिणतः सप्तदशवतीमुत्तरात्पक्षयोः सयत्वाय । अन्नं वै सप्तदशः । यत्सप्तदशवतीमुभयत उपदधात्यन्नमेवोभयतो दधाति । तस्मादुभाभ्यां हस्ता-
15 भ्यां परिगृह्य पुरुषो ऽन्नमत्ति । एकविंशवर्तीं पश्चात्प्रतिष्ठित्यै । अग्नेर्भागो ऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इत्येतत् । एतद्वै देवा एताभिरस्पृण्वन् । एतदेतदेवैताभि स्पृणोति । ता एता स्पृतयो नामेष्टकाः । एकयास्तुवत प्रजा अधीयन्तेत्येतत् । एतद्वै देवा एताभिरसृजन्त । एतदेवैताभिः सर्वमवरुन्द्धे । अर्कस्य वा एषा विधामनु विधीयते । अन्न-
20 मर्को ऽर्को ऽग्निः । अत्त्यन्नं यस्यैषैवं विदुषो विधीयते ॥ १४ ॥ Cf. XXVI, 3. 4; KS. XX, 12; XVII, 4. 5; MS. III, 2, 10; II, 8, 4. 5. 6; TS. V, 3, 3. 4; IV, 3, 8. 9.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकुर्वत

1. KS. सप्तदशवतीर् is to be corrected.
2. The ms. ०प्रयायै यजति.
3. KS. has अग्नेर्भागो ऽसि दीक्षाया आधिपत्यम्, which is repeated after four lines. It is very probable that the Kap. reading is the original for KS. as well.
4. KS. पञ्चदशवतीर् is to be corrected.

तदसुरा अकुर्वत । ते देवा एतां चतुर्थीं चितिमपश्यन् । तामन्यथानूच्यान्यथोपादधत । तदसुरा नान्ववायन्[1] । ततो देवा अभवन्परासुरा अभवन् । यस्यैवं विदुष उपधीयते यश्चैवं विद्वानुपदधाति भवत्यात्मना परास्य भ्रातृव्यो भवति । आशुस्त्रिवृदिति पुरस्तादुपदधाति । यज्ञमुखं वै त्रिवृत् । यज्ञमुखमेव पुरस्ताद्दधाति[2] । व्योमा सप्तदश इति दक्षिणतः । अन्नं वै सप्तदशः । अन्नमेव दक्षिणतो ऽवरुन्द्धे । एकविंशवतीं पश्चात्प्रतिष्ठित्यै । पञ्चदशवतीमुत्तरात् । ओजो वै पञ्चदशः । ओज एवोत्तराद्दधाति । तस्मादुत्तरादभिप्रयायी जयति[3] । ...[4][ ॥१५॥ ] Cf. XXVI, 3; KS. XX, 13; XVII, 4; MS. III, 2, 10; II, 8, 4; TS. V, 3, 3; IV, 3, 8.

1. The ms. तमसुरा णा॰.
2. The ms. उपदधाति for दधाति.
3. The ms. ॰प्रयायै यजति.
4. The ms. ॥ पत्रं १ गतं ॥ The Kāṭhaka text for the lacuna is as follows:

**प्रतूर्तिरष्टादश** इति पुरस्तात् । द्वौ त्रिवृता अभिपूर्वमेव यज्ञमुखे दधाति । **अभीवर्तस्सविंश** इति दक्षिणतः । अन्नं वै सविंशः । अन्नमेव दक्षिणतो ऽवरुन्द्धे । **वर्चो द्वाविंश** इति पश्चात् । यद्द्वे द्विपाद्यजमानः । प्रतिष्ठित्यै । यद्विंशतिर्द्वे विराजौ । अन्नं विराट् । विराज्येवान्नाद्ये प्रतितिष्ठति । **तपो नवदश** इत्युत्तरात् । तस्मात्सव्यो हस्तयोस्तपस्वितरः । बाहुकुचनं (? Thus emended by Schroeder. The ms. had बहुकुचनन्) निगच्छति । **योनिश्चतुर्विंश** इति पुरस्तात् । यज्ञमुखं वै चतुर्विंशः । यज्ञमुखमेव पुरस्ताद्दधाति । **गर्भाः पञ्चविंश** इति दक्षिणतः । अन्नं वै पञ्चविंशः । अन्नमेव दक्षिणतो ऽवरुन्द्धे । यद्दश दशाक्षरा [विराट् । ] विराडन्नम् । विराज्येवान्नाद्ये प्रतितिष्ठति । यत्पञ्चदश यज्ञः पञ्चदशः । वज्रमेवोपरिष्टाद्दधाति रक्षसामपहत्यै । **ओजस्त्रिणव** इति पश्चात् । इमे वै लोकास्त्रिणवः । एष्वेव लोकेषु प्रतितिष्ठति । **संभरणस्त्रयोविंश** इत्युत्तरात् । तस्मात्सव्यो हस्तयोस्संभार्यतरः । **क्रतुरेकत्रिंश** इति पुरस्तात् । वाग्वा एकत्रिंशः । वाचमेव यज्ञमुखे दधाति । **ब्रध्नस्य विष्टपं चतुस्त्रिंश** इति दक्षिणतः । असौ वा आदित्यो ब्रध्नस्य विष्टपम् । ब्रह्मवर्चसमसा आदित्यः । ब्रह्मवर्चसमेव दक्षिणतो ऽवरुन्द्धे । **प्रतिष्ठा त्रयस्त्रिंश** इति पश्चात् । त्रयस्त्रिंशद्देवताः । देवतास्वेव प्रतितिष्ठति । **नाकष्षट्त्रिंश** इत्युत्तरात् । स्वर्गो वै लोको नाकः । स्वर्ग एव लोके यजमानं प्रतिष्ठापयति ॥ १३ ॥ For references see above.

**अग्नेर्भागो ऽसि दीक्षाया आधिपत्य**मिति पुरस्तादुपदधाति । यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं त्रिवृत् । यज्ञमुखमेव पुरस्ताद्दधाति । **नृचक्षसां भागो ऽसि धातुराधिपत्य**मिति दक्षिणतः । ये वै विद्वांसस्ते नृचक्षसः । अन्नं धाता । प्रजननं सप्तदशः । प्रजाभ्य एव प्रजाताभ्यो ऽन्नमपिदधाति । तस्माज्जातो ऽन्नमभ्यायच्छति । **मित्रस्य भागो ऽसि वरुणस्याधिपत्य**मिति पश्चात् । प्राणो वै मित्रो ऽपानो वरुणः । प्राणापाना एव यजमाने दधाति । **इन्द्रस्य भागो ऽसि विष्णोराधिपत्य**-

......[यवानां भागो ऽसीति[1] दक्षिणतः । मा]सा वै यवाः । अन्नं मासाः । अन्नमेव दक्षिणतो ऽवरुन्द्धे । ऋभूणां[2] भागो ऽसीति पश्चात् । त्रयस्त्रिंशद्देवताः । देवतास्वेव प्रतितिष्ठति । वीवर्तो ऽष्टाचत्वारिंश इत्युत्तरात् । तस्माद्धस्तौ समावद्वीर्यौ । अर्कस्य वा एषा विधामनु विधीयते । अन्नमर्को ऽर्को ऽग्निः । अत्त्यन्नं यस्यैवं विदुषो विधीयते । या मुख्यास्ताः पुरस्तादुपदधाति । आस्य मुख्यो जायते य एवं वेद । या अन्नवतीस्ता दक्षिणतः । आस्यान्नादो जायते य एवं वेद । याः प्रतिष्ठावतीस्ताः पश्चात् । गच्छति प्रतिष्ठां य एवं वेद । या ओजस्वतीस्ता उत्तरात् । आस्य बली जायते य एवं वेद । य एवमेतासां क्लृप्तिं वेद कल्पते ऽस्मै[3] ॥ १६ ॥ Cf. XXVI, 3; KS. XXI, 1; XVII, 4; MS. III, 2, 10; II, 8, 5; TS. V, 3, 4; IV, 3, 9.

अग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तादुपदधाति । य एवैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तया प्रणुदते[4] । सहसा जातानिति पश्चात् । य एवैनं[5] पश्चाद्भ्रातृव्यस्तं तयापनुदते । षोडश स्तोम इत्युत्तरात् । चतुश्चत्वारिंश स्तोम इति दक्षिणतः[6] । वज्रो वै षोडशः । वज्रस्त्रिष्टुप् । त्रैष्टुभश्चतुश्चत्वारिंशः । सव्यापग्रहणो वै वज्रो दक्षिणाविसर्जनः । भ्रातृव्यमेव प्रणुद्य तस्मै वज्रमनुविसृजति । चतुश्चत्वारिंश स्तोम इति दक्षिणतः । ब्रह्मवर्चसं वै चतुश्चत्वारिंशः । ब्रह्मवर्चसमेव दक्षिणतो ऽवरुन्द्धे । षोडश स्तोम इत्युत्तरात् । ओजो वै षोडशः । ओज एवोत्तराद्धाति ।

मित्युत्तरात् । ओजो वा इन्द्र ओजो विष्णुरोजः पञ्चदशः । ओज एवोत्तराद्दधाति । तस्मादुत्तरादभिप्रयायी जयति । **वसूनां भागो ऽसि रुद्राणामाधिपत्य**मिति पुरस्तात् । यज्ञमुखं वै वसवो यज्ञमुखं रुद्रा यज्ञमुखं चतुर्विंशः । यज्ञमुखमेव पुरस्ताद्दधाति । **आदित्यानां भागो ऽसि मरुतामाधिपत्य**मिति दक्षिणतः । अन्नं वा आदित्या अन्नं मरुतो ऽन्नं पञ्चविंशः । अन्नमेव दक्षिणतो ऽवरुन्द्धे । **अदित्या भागो ऽसि पूष्ण आधिपत्य**मिति पश्चात् । प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः । प्रतिष्ठित्यै । **देवस्य सवितुर्भागो ऽसि बृहस्पतेराधिपत्य**मित्युत्तरात् । ब्रह्म वै बृहस्पतिर्ब्रह्म चतुष्टोमः । ब्रह्मवर्चसमेवोत्तराद्दधाति । सवितृमती भवति । तस्मादुदीची ब्राह्मणेभ्यस्सनिः प्रसूता । **धर्त्रं चतुष्टोम** इति पुरस्तात् । यज्ञमुखं वै चतुष्टोमः । यज्ञमुखमेव पुरस्ताद्दधाति ।

1. KS. यवानां भागो ऽस्ययवानामाधिपत्यमिति.
2. KS. ऋभूनां to be corrected.
3. KS. य एवमेतासामृद्धिं वेदर्ध्नोति.
4. KS. प्रणुदति.
5. KS. एवास्य.
6. The ms. adds वज्रेणतेः.

तस्मादुत्तरादभिप्रयायी जयति[1] । पृथिव्याः पुरीषमसीति मध्ये । पुरीषं वा आत्मनो मध्यम् । सात्मानमेवाग्निं चिनुते । ता एता अभ्रातृव्या नामेष्टकाः । नास्य भ्रातृव्यो भवति य एवं विद्वानेता उपधत्ते । अथैता विराजः । विराजमेव पशुषूत्तमां दधाति । तस्मात्पशुमानुत्तमां वाचं वदति । दशदशोपदधाति सयत्वाय । देवा वै स्वर्गं लोकं यन्तस्तेषां 5 यानि च्छन्दांस्यनिरुक्तानि स्वर्ग्याण्यासंस्तैः सह स्वर्गं लोकमायन् । तान्यृषयो ऽनुप्राजिज्ञासन्त । तानीष्टकाभिर्निरमिमत[2] । तानीमानि च्छन्दांसि यान्ययज्ञवाहानि । यान्येव देवानां छन्दांस्यनिरुक्तानि स्वर्ग्याणि तैः सह स्वर्गं लोकमेति य एवं विद्वानेता उपधत्ते ॥

अथैते स्तोमभागाः । बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामाहरत् । 10 यदेत उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै । बृहस्पतिर्वा एतत्तेजो यज्ञस्य समभरत् । यदेत उपधीयन्ते सतेजसमेवाग्निं चिनुते । प्रजापतिः प्रजा असृजत । ता स्तोमभागैरेवासृजत । यदेत उपधीयन्ते प्रजननाय । दक्षिणतो वै देवानां यज्ञो ऽव्लीयत । तं स्तोमभागैः प्रत्युदस्तभ्नुवन् । यदेते दक्षिणत[3] उदञ्च उपधीयन्ते यज्ञस्य प्रत्युत्तब्ध्यै । सप्त- 15 सप्तोपदधाति सवीर्यत्वाय । त्रीन्मध्ये प्रतिष्ठित्यै । अथैता नाकसदः । नाकसद्भिर्वै देवाः स्वर्गं लोकमायन् । यदेता उपधीयन्ते स्वर्गस्य लोकस्याभिजित्यै । न वा अमुं लोकं जग्मुषे किञ्चनाकम् । तन्नाकसदां नाकसत्त्वम् । ता एताः सर्वपृष्ठा नामेष्टकाः[4] । यदेव किञ्च पृष्ठानां तेजस्तदवरुन्द्धे य एवं विद्वानेता उपधत्ते । अथैताः पञ्चचूडाः । यजमाना- 20 यतनं वै पत्न्यः । यन्नाकसत्सु पञ्चचूडा उपदधाति नाक एव यजमानं प्रतिष्ठापयति । अप्सरसो वा एता एतद्रूपं कृत्वा पत्न्यो भूत्वामुष्मिँल्लोके यजमानमुपशेरते । पश्चात्प्राचीमेकामुपदधाति । तस्मात्पश्चात्प्राची पत्न्यन्वास्ते । तनूपानीर्वा एता यजमानस्य । सर्वमायुरेति य एवं विद्वानेता उपधत्ते । एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं लोक- 25

1. The ms. ०प्रयायै यजति.

2. The ms. ०र्निरमिमीत.

3. The ms. दक्षिणता.

4. KS. adds यदेव किञ्च पृष्ठा नामेष्टकाः.

मेति । एता वै देवता अभिचरणीयाः । यं द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामीति । एताभ्य एवैनं देवताभ्य आवृश्चति ताजक्प्रधन्वति ॥ १७ ॥

Cf. XXVI, 5; KS. XXI, 2; XVII, 6; MS. III, 2, 10. 3, 1; II, 8, 7; TS. V, 3, 5. 6. 7; IV, 3, 12.

आयोस्त्वा सदने सादयामीत्यायुरेवोत्तमं दधाति । तस्मादायुः प्राणानामुत्तमम् । स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानु-
5 ख्यात्यै । प्राजापत्यो ऽश्वः । यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुते । अथैषा विकर्णी[1] । देवानां वा एषा विक्रान्तिर्यद्विकर्णी । देवानामेवैनं विक्रान्तिमनु विक्रमयति । वायुमती । प्राणो वै वायुः । आयुः स्वयमातृण्णा । आयुश्चैवास्मिन्प्राणं च समीची दधाति । स वा एनमेतदिन्द्धे यच्चिनोति । दीपयति वायुमत्या । संवत्सरमेवाग्निं चिन्वीत[2] । संवत्सरो वा अग्नि-
10 र्वैश्वानरः । तस्याहोरात्राणीष्टकाः । आप्तेष्टकमेवैनं चिनुते । ऋध्नोति । यन्नैवं चिन्वीत प्रिययैनं तन्वा व्यर्धयेत् । यदेवं चिनुते प्रिययैवैनं तन्वा समर्धयाति । सतनूरेवैतद्वैश्वानरश्चीयते । ऋतव्या उपदधात्यृतूनां विधृत्यै । द्वेद्वे उपदधाति । द्वौद्वौ ह्यृतवः । चतस्रो मध्यमायां चित्यामुपदधाति । अन्तरिक्षमिव वा एषा मध्यमा चितिः । शिथिलमिवान्तरिक्षम् । चत-
15 स्रो दिशः । दिक्ष्वेव प्रतितिष्ठति । ऋतुभ्यो वा एता देवा निरमिमत[3] । तदृतव्यानामृतव्यात्वम् । आयन्तमायन्तमृतुं प्रतितिष्ठति य एवं विद्वानेता उपधत्ते । नानाप्रभृतयो भवन्ति समानोदर्काः । तस्मात्समानस्य संवत्सरस्य नाना रूपाणि । अवकामुपधायेष्टकामुपदधाति । अग्नेर्वा एषा वैश्वानरस्य योनिर्यदवका । स्व एवैना योनावुपदधाति । शान्त्या अनि-
20 र्दाहाय । ऋध्नोति य एवं विद्वानेता उपधत्ते । अथैता विश्वज्योतिषः । प्राणभृतो वा एता यजमानस्य । प्राणमेव प्रथमया दाधार व्यानं द्वितीययापानं तृतीयया । एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं लोकमेति । एता वै देवता ज्योतिष्मतीः । अग्निरेवास्मा[4] अस्मिंल्लोके ज्योति-

1. The ms. प्यैका विकर्णी.
2. KS. संवत्सरमुख्यं भृत्वाग्निं चिन्वीत.
3. The ms. निरमिमीत.
4. KS. अस्य for अस्मै.

भवति वायुरन्तरिक्षे सूर्यो दिवि । सर्वे ऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति । अधिपतिवतीर्भवन्ति । आधिपत्यमेवैताभिर्गच्छति । लोकं पृण च्छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरिति । ओजो वै वीर्यमिन्द्राग्नी । ओजसैवैनं वीर्येण चिनुते । ता अस्य सूददोहस इति । तस्मात्परुषिपरुषि[1] सूदः । सोमं श्रीणन्ति पृश्नय इति । अन्नं पृश्नि । अन्न- 5 मेवावरुन्द्धे । त्रिष्वा रोचने दिव इति । त्रीणि सवनानि । सवनेष्वेवैनं चिनुते । अनुष्टुबनुचरा भवति । प्राणो वा अनुष्टुप् । तस्मात्प्राणः सर्वाण्यङ्गान्यनुसंचरति । वाग्वा अनुष्टुप् । यदेवास्यात्र न क्रियते यन्न चीयते तद्वाचा कल्पयति तद्भिषज्यति ॥ १८ ॥ Cf. XXVI, 9; XXV, 9; KS, XXI, 3; XVII, 10; XVI, 19; TS. V, 3, 7.

या आग्नेयीर्गायत्रीर्मूर्धन्वतीस्ताभिस्तिसृभिस्तिस्रः पूर्वार्धे उपदध्यात् । 10 अथ त्रिष्टुब्भिरथ जगतीभिरथानुष्टुब्भिरथ पङ्क्तिभिरथ यत्किंचाग्नेयं छन्दः । तिस्र एकेन च्छन्दसा तिस्र एकेन । सर्वमग्निमनूपदध्यात् । एतां ह वै यज्ञ- सेनश्चैत्ररथिश्चितिं विदांचकार । तया ह वै स आनर्ध । ऋध्नोति य एवं विद्वा- नेता उपधत्ते । पशवो वै छन्दांसि वामं देवानाम् । पशूनेव वामं भ्रातृव्यस्य वृङ्क्ते । आत्मा वा आहवनीयो भ्रातृव्यो धिष्ण्यः । यद्गार्हपत्य उपदध्या- 15 द्भ्रातृव्ये वामं पशून्दध्यात् । आहवनीय उपदधाति । आत्मन्नेव वामं पशू- न्धत्ते । सैषोत्तरवेदिर्नाम चितिः । तस्मादेता उत्तमायां चित्यामुपधीयन्ते । उत्तमः समानानां भवति य एवं विद्वानेता उपधत्ते । पशुर्वा अग्निः । अग्नि- मुखान्प्रजापतिः पशूनसृजत । यत्पञ्च चितयस्तस्मात्पाङ्क्ताः पशव उच्यन्ते । यत्तिस्रश्चितयस्त्रिवृद्ध्यग्निः । यद्द्वे द्विपाद्यजमानः । प्रतिष्ठित्यै । द्व्यक्षरं 20 लोम द्व्यक्षरं चर्म द्व्यक्षरं मांसं द्व्यक्षरमस्थि द्व्यक्षरो मज्जा । तद्दश । दशाक्षरा[2] विराट् । तस्माद्वैराजाः पशव उच्यन्ते ॥

यो जानुदघ्नः स गायत्रचिद्यो नाभिदघ्नः स त्रिष्टुप्चिद्यः पुरुषमात्रः[3] स जगच्चित् । श्येनचितं[4] पक्षिणं चिन्वीत स्वर्गकामः । श्येनो वै वयसां क्षेपिष्ठः ।

1. The ms. परिषुपरिषुं.
2. KS. दशाक्षरं to be corrected.
3. The ms. पू॰.
4. The ms. ॰चितिं.

स्वर्गस्य लोकस्य समष्ट्यै । अलजचितं पक्षिणं चिन्वीत प्रतिष्ठाकामः । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति । कङ्कचितिं[1] शीर्षण्वन्तं चिन्वीत यः कामयेत सशीर्षाम्रुष्मिँल्लोके स्यामिति । सशीर्षैवामुष्मिँल्लोके भवति । प्रउगचितं[1] चिन्वीत यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति । प्रउगचिता
5 वै देवा असुरान्प्राणुदन्त य एनान्पूर्वे ऽतिक्रान्ता आसन् । य एवैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तेन प्रणुदते । उभयतःप्रउगं चिन्वीत यदि मन्येत पश्चान्मे भ्रातृव्य इति । य एवास्य पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयींसं भ्रातृव्यं नुदते प्रति पापीयींसं नुदते । रथचक्रचितं[1] चिन्वीताभिचरन् । रथचक्रचितिं[1] ह स्म वै देवा असुरेभ्यो वज्रमियद्भ्रथस्त्वेत्यभ्यवसृजन्ति । वज्रमेव
10 भ्रातृव्याय प्रहरति स्तृणुत एनम् । समूह्यं चिन्वीत पशुकामः । पशवो वै पुरीषम् । पशूनेवावरुन्द्धे । परिचाय्यं चिन्वीत सजातकामः । परीव वै सजाता विशन्ति । सजातैरेवैनं परिचिनोति । द्रोणचितं चिन्वीतान्नकामः । पात्रेण[2] वा अन्नमद्यते । तेनैव मुखेनान्नमत्ति । श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति[3] । श्मशानचिता वै यमो ऽमुष्मिँल्लोक आर्ध्नोत् ।
15 पितृलोक[4] एवर्ध्नोति । गायत्रचितं पक्षिणं चिन्वीत स्वर्गकामः । अग्निर्वै तत्पक्षी भूत्वा स्वर्गं लोकमपतत् । यदाहुर्गायत्री पक्षिणी भूत्वा स्वर्गं लोकमपतदिति स्वर्गस्य लोकस्य समष्ट्यै । ऊर्ध्वा वा अन्ये ऽग्नयश्चीयन्ते न्यञ्चो ऽन्ये । य ऊर्ध्वाश्चीयन्ते ते ऽमुष्मै लोकाय ये न्यञ्चस्ते ऽस्मै । यदूर्ध्वस्तिष्ठन्हिरण्यशल्कैः प्रोक्षति तेनैवोर्ध्वं चिनुते । स्वर्गस्य लोकस्य
20 समष्ट्यै ॥ १९ ॥ Cf. KS. XXI, 4; MS. III, 3, 2. 3. 4, 7; TS. V, 3, 8.

दीक्षया विराडाप्तव्या । तिस्रो रात्रीर्दीक्षितः स्यात् । त्रिपदा विराट् । विराजमेवाप्नोति । षड् रात्रीर्दीक्षितः स्यात् । षड्वा ऋतवः संवत्सरः । संवत्सरो विराट् । विराजमेवाप्नोति । दश रात्रीर्दीक्षितः स्यात् । दशाक्षरा विराट् । विराजमेवाप्नोति । द्वादश रात्रीर्दीक्षितः स्यात् । द्वादश मासाः

1. The ms. °चिर्तिं.
2. The ms. पात्रे.
3. The ms. °लोका ऋध्नुयादिति.
4. The ms. श्मशानचिता वै यामोस्मिंलोक.

संवत्सरः। संवत्सरो विराट्। विराजमेवाप्नोति। त्रयोदश रात्रीर्दीक्षितः स्यात्। त्रयोदश मासाः संवत्सरः। संवत्सरो विराट्। विराजमेवाप्नोति। पञ्चदश रात्रीर्दीक्षितः स्यात्। पञ्चदशार्धमासस्य रात्रयः। अर्धमासशः संवत्सर आप्यते। संवत्सरो विराट्। विराजमेवाप्नोति। चतुर्विंशतिं रात्रीर्दीक्षितः स्यात्। चतुर्विंशतिः संवत्सरस्यार्धमासाः। अर्धमासशः संवत्सर 5 आप्यते। संवत्सरो विराट्। विराजमेवाप्नोति। मासं दीक्षितः स्यात्। यो मासः स संवत्सरः। संवत्सरो विराट्। विराजमेवाप्नोति। चतुरो मासो दीक्षितः स्यात्। चतुरो वा एतं मासो वसवो ऽबिभरुः। ते पृथिवीमाजयन्गायत्रीं छन्दः। अष्टौ रुद्राः। ते ऽन्तरिक्षमाजयंस्त्रिष्टुभं छन्दः। द्वादशादित्याः। ते दिवमाजयञ्जगतीं छन्दः। ततो वै ते व्यावृतमगच्छ- 10 ञ्छ्रैष्ठ्यं[1] देवानाम्। द्वादश[2] मासो भूत्वाग्निं चिन्वीत। द्वादश मासाः संवत्सरः[3]। तस्याहोरात्राणीष्टकाः। आप्तेष्टकमेवैनं चिनुते। आप्नोति। व्यावृतमेव गच्छति श्रैष्ठ्यं समानानाम्॥

गायत्रं पुरस्ताद्गायति। शिरो वै देवानां गायत्रम्। गायत्रो ऽग्निः। तस्माद्गायत्रं पुरस्ताद्गायत्याग्निपावमान्याम्। अयं वाव यः पवते स प्राणः। 15 मुखं देवानामग्निः। मुखत एव प्राणं दधाति। तस्मान्मुखतः प्राणः। रथन्तरमुत्तराद्गायति बृहद्दक्षिणतः। पक्षावेवास्योपदधाति। इयं वै रथन्तरमसौ बृहत्। आभ्यामेवैनं परिगृह्णाति। यज्ञायज्ञियं[4] पुच्छे गायति श्रोण्यां वामदेव्यम्। आत्मा वै यज्ञायज्ञियं[4] तनूर्वामदेव्यम्। सात्मानमेवैनं सतनूं चिनुते। हृदयमपिकक्षे। तस्मादपिकक्षे हृदयमनूचं भवति। तस्मादन- 20 स्थकं हृदयम्। अर्क्यैः[5] परिगायति। अर्को वा अग्निः। अर्कमेवार्क्यैः[5] परिगायति शान्त्यै॥ २०॥ Cf. KS. XXI, 5; MS. III, 3, 5.

संवत्सरो वा अन्तरा तमः स्वर्गं लोकम्। ज्योतिष्मतीरेताः साहस्रीरिष्टकाः। यद्धिरण्यशल्कैः प्रोक्षति ज्योतिषैवास्मै संवत्सरं विवासयति।

1. The ms. स्य.
2. KS. तस्माद् द्वादश.
3. KS. adds संवत्सरो ऽग्निर्वैश्वानरः.
4. KS. ॰यज्ञीयं.
5. The ms. अर्कैः.

सहस्रस्य प्रमासि सहस्रस्य प्रतिमासीति । सहस्रसंमिता हीमे लोकाः । घ्नन्ति वा एतदग्नेर्यदस्यात्र न क्रियते यन्न चीयते । अमृतं हिरण्यम् । यद्धिरण्यशल्कैः प्रोक्षत्यमृतेनैवास्य तन्वं पृणक्ति[1] । रुद्रं वै देवा यज्ञान्निरभजन् । स देवानायतयाभिपर्यावर्तत । ते देवा एतच्छतरुद्रि[2]यमपश्यन् । तेनैनमशमयन् । यच्छतरुद्रियं जुहोति तेनैवैनं शमयति । जानुदघ्ने ऽग्रे जुहोत्यस्या एव रुद्रमवयजते । अथ नाभिदघ्ने ऽन्तरिक्षादेव रुद्रमवयजते । अथ पुरुषमात्रे ऽमुष्या एव रुद्रमवयजते । इत एवोर्ध्वं रुद्रमवयजते । अथ पुरुषमात्रे ऽथ नाभिदघ्ने ऽथ जानुदघ्ने ऽमुत एवार्वाञ्चं रुद्रमवयजते । तत्षट् संपद्यते । षड्वा ऋतवः । ऋतुभ्य एव रुद्रं निरवयजते । गवेधुका[3]सक्तुभिर्वा जर्तिलैर्वा[4] कुसयसर्पिषा वा मृगक्षीरेण वा जुहोति । यद्ग्राम्येण जुहुयाद्ग्रामावता[5]रिणं रुद्रं कुर्यात् । आरण्येनैवारण्यमभि रुद्रं निरवयजते । अर्कपर्णेन जुहोति । अर्को वा अग्निः । अर्केणैवैनमर्कादधि निरवयजते । उत्तरस्य पक्षस्य या चरमेष्टका तस्यां जुहोति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं प्रतिहृत्यावयजते । पशुर्वा अग्निः । एतर्हि वा एष जायते यर्हि चीयते । यथा वत्सो जात स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति । स यजमानं चैवाध्वर्युं च ध्यायति । यच्छतरुद्रियं जुहोति भागधेयेनैवैनं शमयति । अङ्गिरसो वै स्वर्गं लोकं यन्तस्ते ऽजायां घर्मं प्रासिञ्चन् । सा शोचन्ती पर्णं परामृशत् । सो ऽर्को ऽभवत् । तदर्कस्यार्कत्वम् । यदर्कपर्णेन जुहोति सयोनित्वाय । यं द्विष्यात्तस्य संचरे पशूनां न्यस्येत् । यः प्रथमः पशुराक्रामति स[6] आर्तिमार्छति । या उत्तमास्ता यजमानं वाच-

1. KS. adds: **इमा मे अग्न इष्टका धेनवस्सन्त्वि**ति धेनूरेवैनाः कुरुते । ता एनं कामदुघा अमुष्मिँल्लोक उपतिष्ठन्ते.

2. The ms. ०द्री०.

3. This is the earliest occurrence of the form गवेधुका, which appears later on in ŚatBr. V, 2, 4, 13; V, 3, 1, 10; IX, 1, 1, 8; XIV, 1, 2, 19. KS. गवाधुका is found in TS. V, 4, 3, 2 (०धुक) and the adj. गावीधुक in MS. II, 6, 5; IV, 3, 8; TS. I, 8, 7, 1.

4. The ms. जर्तिसैर्वा.

5. Thus the ms. KS. ०चा०.

6. The ms. त. Cf. KS. त and further आर्छन्ति.

येत् । एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं लोकमेति । एता वै देवता अभिचरणीयाः । यं द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामीति । एताभ्य एवैनं देवताभ्य आवृश्चति ताजक्प्रधन्वति ॥ २१ ॥ Cf. XXVI, 9; KS. XXI, 6; XVII, 10; MS. III, 3, 4; TS. V, 4, 2, 3.

इति कपिष्ठलकठसंहितायामेकत्रिंशत्तमोऽध्यायः ॥[1] [2]

---

1. The ms. द्वात्रिंशतमो. The probability is that this extraordinarily long adhyāya comprises two chapters, the 31st and the 32nd.
2. The Göttingen copy notes ग्रन्थसंख्या २२६०.

# अथ
# कपिष्ठलकठसंहितायां
# पञ्चममष्टकम्

[सजूरब्द आयवोभिरिति । संवत्सरो वा अब्दः । मासा आयवाः । उषा अरुणीः । सूर] एतशः । इमे अश्विना[2] । संवत्सरो ऽग्निर्वैश्वानरः । पशव इडा । पशवो घृतम् । संवत्सरं पशवो ऽनु प्रजायन्ते । संवत्सरा-देवास्मै पशून्प्रजनयति । दर्भस्तम्बे जुहोति । यदेवास्या अनामृतं[3] य-द्वीर्यं तदेतदुत्सर्पति । यदेवास्या अनामृतं यद्वीर्यं तदवरुन्द्धे[4] । नाग्निं 5
चिक्यानः प्रमीयते यस्यैवं जुह्वति । चित्रं देवानामुदगादनीकमिति पुरुष-शीर्षे जुहोति । अहर्वै मित्रो रात्री वरुणः । एतावद्वावास्ति । यावदेवा-स्ति तदवरुन्द्धे । सौर्यर्चा जुहोति । तस्मात्पुरुष एवं[5] पशूनां सूर्यं प्रत्यङ् न्यञ्चो ऽन्ये । यत्समान्यर्चा द्विर्जुहोति तस्मात्समानस्य पुरुषस्य द्वौ पादौ । यो ह वा अग्निं योग आगते न युनक्ति न युञ्जानेषु युङ्क्ते । युक्त्वा 10
हि देवहूतमान्[6] ॥ अग्ने युक्त्वा हि ये तवेत्यग्निमेवैतद्योग आगते युनक्ति । युङ्क्ते युञ्जानेषु य एवं वेद । द्वाभ्यां युनक्ति । अस्थूरीत्याह[7] । यो ह वा अग्निं विमोक आगते न विमुञ्चति न विमुञ्चमानेषु विमुञ्चते ॥

मातेव पुत्रं पृथिवी पुरीष्यमग्निं स्वे योनावभारुखा ।

तां विश्वे देवा ऋतुभिः संविदानाः प्रजापतिर्विश्वकर्मा विमुञ्चतु[8] ॥ 15

इत्यग्निमेवैतद्विमोक आगते विमुञ्चति । विमुञ्चमानेषु विमुञ्चते य

1. सजूरब्द······सूर is missing in Kap. Adhy. 33 and the entire 34th chapter, excepting this last section, have been lost.
2. The ms. त इमे अग्नि.
3. The ms. ह्य०.
4. Thus the ms. KS. तस्मिञ्जुहोति.
5. KS. एवं to be corrected.
6. The ms. ०हूतमं २.
7. Thus the ms. KS. अस्थूरि द्वयं.
8. The mantra is given sakalapāṭhena in XXV, 2. The Kāṭh. has only the pratīka in this section.

एवं वेद । अथैताः संयानीः । एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं लोक-
मेति । एषा वै गायत्री ज्योतिष्पक्षा । तयैव स्वर्गं लोकमेति य एवं वेद[1] ।
यथा नावोदकादुदकमभिसंयात्येवं वा एताभिरग्निचिदमुत्र यथालोकं संयाति ।
तत्संयानीनां संयानीत्वम् । [2]एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं
5 लोकमेति[2] । अथैतान्यृतुनामानि । ऋतूनेवावरुन्द्धे । सुमेक इति । संवत्सरो
वै सुमेकः । संवत्सरमेवावरुन्द्धे । अथैता आदित्येष्टकाः । आदित्या वा
एतस्य तेज आददते यो ऽग्निं चिक्यानो नेव रोचते । यदेता उपधीयन्ते
यथा दीप्यमाने भूयो ऽभ्यादधात्येवमेवास्मिंस्तदभि[3] पूर्वं तेजो दधाति ।
नास्यादित्यास्तेज आददते । यथासौ देवेष्वेवं मनुष्येषु भवति । अथैता
10 घृतेष्टकाः । तेजो वा अग्निस्तेजो घृतम् । तेजस्येव तेजो दधाति ।
अथैता वृष्टिसनयः । वृष्टिमेवैताभिरवरुन्द्धे । एताभिर्वा अग्निचिते ऽमुत्र
यथाकामं वर्षति । तद्वृष्टिसनीनां वृष्टिसनित्वम् । अथैता आत्मा ।
एतद्ध वा उवाच शङ्खः कौष्यः पुत्रमग्निं चिकिवींसमचैरग्नी३मित्यचैषि
ही३त्यथ कथा न सर्वात्मागा इति तद्धि नूनं न विदांचक्रमेति[4] ।
15 यस्यैता उपधीयन्ते सात्मानमेवाग्निं चिनुते । पुनर्नितुन्नां[5] भवन्ति । प्राण
एव प्राणमुपसंदधाति । अथैषा षष्ठी चितिः । यो ऽग्निं चिक्यानो नेव प्रति-
तिष्ठेत्स एतां षष्ठीं चितिमुपदधीत । षड्वा ऋतवः संवत्सरः । ऋतुष्वेव
संवत्सरे प्रतितिष्ठति । एता वै देवताः स्वर्ग्याः । ताभिरेव स्वर्गं लोकमेति ।
एता वै देवता अभिचरणीयाः । यं द्विष्यात्तं ब्रूयादमुं वो[6] जम्भे दधामीति ।
20 एताभ्य एवैनं देवताभ्य आवृश्चति ताजक्प्रधन्वति ॥[8] Cf. XXV, 2; KS,
XXII, 6, 5; XVI, 11; TS, V, 6, 4.

इति कपिष्ठलकठसंहितायां चतुस्त्रिंशत्तमो ऽध्यायः ॥

---

1. KS. omits य एवं वेद.
2-2. KS. omits these two sentences.
3. KS. ०दधि.
4. Thus KS. The ms. एवद्वत्र वा २ उवाच शंखस्यश्य पुत्रमग्निं चिकीवींसमवेदग्नीमित्य-वेष्टं हव्यं कथया नः सर्वात्मागा सद्धि नूनं न विंदं च नि.
5. Thus KS. The ms. पुनर्जतुनामा.
6. KS. वै to be corrected.
7. The ms देवताभ्य आ भाजग्यू०.
8. The ms. does not number this anuvāka.

अग्निना वै देवाः स्वर्गं लोकमायन् । तान्पराच आवृत्तान्पश्चादन्ववेत्य रक्षांस्यजिघांसन् । ते देवा एता वितृण्णीरपश्यन् । ताभी[1] रक्षांस्यपाघ्नत । यद्द्वे पुरस्तादुपदधाति द्वे पश्चाच्चतुरेवोभयतो दधाति रक्षसामपहत्यै । स्वयमातृण्णा भवन्ति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुख्यात्यै[2] । चतस्रः । तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे । स्वर्गाय वै 5 लोकायाग्निश्चीयते । यदेकादशिनीं कुर्याद्वज्रेण पुरस्तादवगृह्णीयादस्वर्ग्यः स्यात् । यदनेकादशिनीमनवरुद्धा अस्य पशवः स्युः । एकयूप एकादश पशूनालभेत । तेनैव स्वर्ग्यस्तेन पशूनवरुन्द्धे ॥

न पक्षसंमितां मिनुयात् । यत्पक्ष[3]संमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्पापीयस्यस्य प्रजात्मनः स्यात् । वेदिसंमितां मिनुयात् । ज्यायी- 10 समेव यज्ञक्रतुमुपैति नास्यात्मनः[4] प्रजा पापीयसी भवति । एतद्ध वा उवाच दिवा जातः शाकायन्यः शङ्कं कौष्यं[5] पक्षसंमितामेकादशिनीममेष्टेति श्रुत्वा कनीयांसं यज्ञक्रतुमुपागात्पापीयस्यस्य प्रजात्मनो भविष्यतीति । ततो वै तं पराभूतं मन्यन्ते । कस्मै कमग्निश्चीयत इत्याहुः । देवा मा वेदन्निति वा अग्निश्चीयते । य एवं विद्वानेतं चिनुते विदुरेतं देवाः । 15 कस्मै कमग्निश्चीयत इत्याहुः । अन्नमदानि गृहा मे ऽसन्निति वा अग्निश्चीयते । य एवं विद्वानग्निं चिनुते ऽत्त्यन्नं गृहवान्भवति ॥

सहस्रेष्टकं चिन्वीत प्रथमं चिन्वानः । सहस्रसंमितो ह्ययं लोकः ।

1. The ms. ताभिरस्माद्.
2. The ms. °त्कात्यै. Cf. Kāṭh. °क्शात्यै.
3. The ms. पक्षस्य.
4. The ms. नो.
5. The ms. शस्य कौष्ठां.

द्वे सहस्रे द्वितीयं चिन्वानः । अन्तरिक्षेण संमितम् । त्रीणि सहस्राणि तृतीयं चिन्वानः । एभिर्लोकैः संमितम् । व्रतं चरेदग्निं [ चित्वा । प्रथमं चित्वा न रामामुपेयात् । द्वितीयं चित्वा नान्येषां स्त्रियः । तृतीयं चित्वा न कांचन । रेतो वा एतन्निधत्ते यदग्निं ] चिनुते । यदुपेयाद्रेतसा
5 व्यृध्येत । तदाहुर्ये एवामू रेतःसिचाविष्टके ते अग्निचितो रेतो बिभृतः । तस्मादुपेत्यैति । प्रजापतिर्वा उख्यमाग्नमबिभः । स इमाः प्रजा अनुप्राविशत् । सो ऽब्रवीत्स एव मे प्रजानामृध्नवद्यो मेतः संचिनवदिति । अग्निः प्रजापतिः । यदग्निं चिनुते प्रजापतिमेव संचिनोति । ऋध्नोति । तच्चित्यस्य चित्यत्वम् । तं वसुभ्यः प्रायच्छत् । तेन वसवस्त्रीणि च शतानि त्रयस्त्रिं-
10 शतं चासृजन्त । ते वसवो रुद्रेभ्यः प्रायच्छन् । तेन रुद्रास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त । तं रुद्रा आदित्येभ्यः प्रायच्छन् । तेनादित्यास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त । उखा सहस्रतमी । य एवं वेदोखां सहस्रतमीं गच्छति साहस्रीं पुष्टिं पशूनाम् ॥ १ ॥ Cf. KS. XXII, 7; TS. V, 6, 8.

यथारूपमग्निश्चेतव्यः । यो वै यथारूपमग्निं चिनुते नास्यापरूपमा-
15 त्मञ्जायते । गायत्र्या प्रथमां चितिं[1] संचितामभिमृशेत्त्रि[ष्टुभा द्वितीयां जगत्या तृतीयाम]नुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीम् । यथारूपमेवाग्निं चिनुते । नास्यापरूपमात्मञ्जायते । प्राणो वै प्रथमा चितिर्व्यानो द्वितीयापानस्तृतीया । प्राणापानैरेवैनं समिन्द्धे । इडाया वा एषा विभक्तिः । पशव इडा । पशुभिरेवैनं चिनुते । प्रजापतये प्रोच्याग्निश्चेतव्यः । यो वै प्रजापतये
20 ऽप्रोच्याग्निं चिनुत आर्तिमार्छति । अश्वावभितस्तिष्ठेतां श्याव उत्तराच्छ्वेतो दक्षिणतः । तावालम्बम्[2] । इष्टकामिष्टकामुपदध्यात् । एतद्वै प्रजापते रूपम् । प्राजापत्यो ऽश्वः । प्रजापतय एवं[3] प्रोच्याग्निं चिनुते । नार्तिमार्छति ॥

हिरण्यपात्रं मधोः पूर्णं ब्रह्मणे ददाति । मधव्यो भवति । शतमानम् । शतायुर्वै पुरुषः शतवीर्यः । आयुरेव वीर्यमात्मन्धत्ते । चित्रं देवाना-

1. The ms. °ध्नु°.
2. ? The ms. °लभम्. Cf. TS. तावालभ्येष्टका उपदध्यात्.
3. KS. एवं to be corrected.

मिति चित्रवत्यावेक्षते । चित्रमेव भवति मध्यन्दिने । अश्वमुपप्रापयति । असौ वा आदित्य इन्द्र एष प्रजापतिः । प्राजापत्यो ऽश्वः । प्रत्यक्षमेवैन-मृध्नोति । यो ऽग्नेराप्तिं वेदाप्नोति तं कामं यस्मै कामायाग्निश्चीयते । प्रया-स्यन्नग्निं चितमुपतिष्ठेत । दीक्षया त्वापं तपसा त्वापि सुत्यया त्वापमवभृथेन त्वापं वशाया त्वापमिति । तत्पञ्च संपद्यते । पञ्च वा ऋतवः । आप्नोति 5
तं कामं यस्मै कामायाग्निश्चीयते ॥

एकेष्टकेत्याहुर्ब्रह्मवादिनो वागेवैकेष्टकेति ब्राह्मण एवैकेष्टकेतीम एव लोकाः । एतद्ध स्म वा आहुः शर्कराख्यास्तिस्र एव वयमिष्टका अग्निं चित्यं विद्मेमानेव लोकानिति । ससत्यो ऽग्निश्चेतव्यः । भूरिति प्रथमां वितृण्णीमुपदध्याद्भुव[2] इति द्वितीयां स्वरिति तृतीयाम् । एतद्वै 10
वाचः सत्यम् । ससत्यमेवाग्निं चिनुते । ब्रह्मवादिनो वदन्ति ससत्यमग्नि-मचेष्टापसत्यमिति[3] । स ह त्वा अग्निं ससत्यं चिनुते य एवं[4] चिनुते । कस्यै देवताया अग्निश्चीयत इत्याहुर्ब्रह्मवादिनः । प्रजापतय एव । तस्य किं हविरिति । आत्मैव ॥ २ ॥ Cf. KS. XXII, 8; TS. V, 7, 1. 5, 7.

आपो वा इदमासन्सलिलमेव । स प्रजापतिः पुष्करपर्णे वातो भूतो 15
ऽलेलीयत । स प्रतिष्ठां नाविन्दत । स एतमपां कुलायमपश्यत् । तमाहरत् । तमुपाधत्त[5] । सेयमभवत् । ततः प्रत्यतिष्ठत् । इयं वावाग्निः । त[स्माद्यद]-स्यां खनन्त्यभीष्टकां तृन्दन्त्यभि[6] शर्कराम् । यां पुरस्तादुपादधात्तच्छिरो ऽभवत् । सा प्राची दिक् । यां दक्षिणत उपादधात्स दक्षिणः पक्षो ऽभवत् । सा दक्षिणा दिक् । यां पश्चादुपादधात्तत्पुच्छमभवत् । सा प्रतीची दिक् । 20
यामुत्तरादुपादधात्स उत्तरः पक्षो ऽभवत् । सोदीची दिक् । यां मध्य उपाद-धात्तत्पृष्ठमभवत् । सोर्ध्वा दिक् । इयं वावाग्निः पञ्चेष्टकः । य एवं वेद प्रजायते गच्छति प्रतिष्ठाम् । आग्नेयो वै ब्राह्मणः । तस्माद्ब्राह्मणाय

1. KS. ०मव०.
2. KS. भुवर्.
3. KS. ०मचेष्टा३मुपसत्या३मिति. अपसत्यं of Kap. (as opposed to ससत्यं) is to be preferred to उपसत्य of Kāṭh.
4. The ms. यस्यैवं.
5. The ms. तामाहरत्तामुपधत्त.
6. The ms. विद०.

सर्वासु दिक्त्वर्धुकम् । स्वीं ह्येव दिशमन्वेति । सर्वा ह वा इयं वयोभ्यो नक्तं दृशे दीप्यते । तस्मादिमां वयांसि नक्तं नाध्यासते । अपां वा एष कुलायः । तस्मादेतमापः प्रहारुकाः । अपां ह्येष कुलायः ॥ ३ ॥ Cf. KS. XXII, 9; TS. V, 6, 4.

यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इत्यष्टावुपदध्याल्लोकंपृणया पुरस्ताद्बहिष्पवमानस्यैकादश पुरस्तान्माध्यन्दिनस्य पवमानस्य द्वादश पुरस्तादार्भवस्य पवमानस्य । अयं वाव यः पवते स पवमानः । वायुरग्नेस्तेजः । य एवैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तेजसा प्रणुदते । यदि मन्येत पश्चादिव भ्रातृव्य इति पश्चादुपदध्यात्स पवमानानाम् । अयं वाव यः पवते स पवमानः । वायुरग्नेस्तेजः । य एवैनं पश्चाद्भ्रातृव्यस्तं तेजसापनुदते [ प्र श्रेयांसं ] भ्रातृव्यं नुदते प्रति पापीयांसं नुदते । स एष सवनचित् । प्रजापतिर्वा उख्यमग्निमबिभः । तस्य शिरः प्रावर्तत । तेन देवा अश्राम्यन् । तस्यैतच्छिरः[2] प्रत्यदधुर्यदुखा । तत्संवत्सरमरोहत् । अग्निः प्रजापतिः । यत्संवत्सरमुख्यं बिभर्ति प्रजापतेरेव शिरः प्रतिदधाति । तस्मात्संवत्सरमुख्यो भर्तव्यः । यदर्वाक्संवत्सरादरुश्चिदेव सः ॥

येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति ॥

इति घृतेनाक्त्वा[3] समिधमादधाति । समिद्धिरेवैषा[4] । अथो यजमानस्यैवैतत्स्वस्त्ययनं क्रियते ॥

ये अग्नयः पुरीषिण आविष्टाः पृथिवीमनु ।
तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥

इति स्वमग्निं चितमुपतिष्ठेत । सर्वमायुरेति । उप त्वाग्ने दिवेदिव इत्येतेन त्र्यृचेना[5]न्येषाम् । आशीरेव सा ॥ ४ ॥ Cf. V, I; KS. XXII, 10; VII, 1.

यर्हि धिष्ण्या उपधीयन्ते [ तर्हि ] बार्हस्पत्याभि[स्तिसृभि]स्तिस्रो

1. The ms. नो.
2. The ms. त देवा अब्रुवन्नश्वस्य तस्यैव शिरः.
3. The ms. घृतेनाक्तेन.
4. The ms. समृद्धिरेवैषा.
5. KS. त्रिष्यृ० to be corrected.

दक्षिणत उपदध्यात् । अथ यामीभिस्तिसृभिस्तिस्रो ऽथ रौद्रीभिस्तिसृ-
भिस्तिस्रो ऽथ वारुणीभिस्तिसृभिस्तिस्रः । दक्षिणतो वै देवानां रक्षांसि
यज्ञमभिजिघांसन् । तानि बार्हस्पत्यापाघ्नत । यद्बार्हस्पत्या दक्षिणत
उपधीयन्ते रक्षसामपहत्यै । अथ यामीः । एताभिर्वा आसिताय दैवलायेमे
लोका अर्वाञ्चश्च पराञ्चश्च प्राभुः[1] । यस्यैता[2] उपधीयन्ते समस्मा[3] इमे 5
लोका अर्वाञ्चश्च पराञ्चश्च भान्ति । अथ रौद्रीः । अग्निर्वै रुद्रः । ईश्वरो
वा एष एतमतो ऽनूत्थाय हन्तोः । यद्रौद्री रुद्रमेव निरवदयते । अथ
वारुणीः । आपो वै वरुणः । ईश्वरो वा एतमवभृथादनूदेत्य वरुण उद्ग्र-
हीतोः । यद्वारुणीर्वरुणमेव निरवदयते ॥

यद्युरुव्ये भ्रियमाणे ऽयं देवः प्रजा अभिमन्येत या आग्नेयीर्गायत्री- 10
भिषग्वतीस्ताभिस्तिसृभिस्तिस्र आदध्यात् । एष वावैतत्प्रजा अभिम-
न्यते । यद्भिषग्वतीभिरादधाति भेषजमेव करोति । यद्युरुव्ये भ्रियमाणे
कामयेत वर्षेदिति याः सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्रः समिध
आदध्यात् । असौ वा आदित्यस्तर्हि प्रजाः शुचार्पयति य[र्हि पर्जन्यो न
वर्षति । ......[4] ॥ ५ ॥] Cf. KS. XXII, 11. 12; XVI, 8. 15

1. The ms. मनभांति.

2. The ms. अथ यान्या.

3. The ms. अंहास्मा.

4. The Kāṭh. text for the missing portion is as follows :

यद्रश्मिवतीभिरादधाति वृष्टिमेव निनयाति ताजक्प्रवर्षति । यद्युरुव्ये भ्रियमाणे कामयेत न वर्षेदिति यास्सौरीर्भ्राजस्वतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यात् । भ्राज एव करोति । न तीं समां वर्षति । यद्युरुव्ये भ्रियमाणे नश्येदेताभिश्चतसृभिरुपतिष्ठेताग्ने-ऽभ्यावर्तिन् ॥ अग्ने अङ्गिरः ॥ पुनरूर्जा ॥ सह रय्येति । विन्दत्येव ॥१२॥
For references see above.

प्राचीनवंशं कुर्वन्ति । प्राची वै देवानां दिक् । देवलोकमेवोपावर्तते । पुर आदित्यः । असा अमुमेवादित्यमुपोत्क्रामति । परिश्रिते याजयन्ति देवलोकमेव परिगृह्य । तस्मिन्नेनं दीक्षयन्ति । एति वा एषो ऽस्माल्लोकाद्यो ऽमुं लोकं गच्छति । अन्तर्हित इव वा इतो ऽसौ लोकः । स्रक्तिष्वतीरोकान्कुर्यात् । तेनास्माल्लोकान्नैति ॥

आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निर्वै सर्वा देवता विष्णुर्यज्ञः । देवताश्चैव यज्ञं चालभ्य दीक्षामुपैति । पवित्रं वा अग्निर्यज्ञो विष्णुः । पवित्रपूत एव यज्ञमालभते । यदष्टाकपालस्तेनाग्नेयो यत्त्रिकपालस्तेन वैष्णवः । तेनोभयस्मान्नैति । आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निर्वै देवानामवमो विष्णुः परमः । यथा तेजन्या अन्तौ संगृह्णात्येवमेवैतदुभयतस्संगृह्य मध्यतो देवता आवपते । पुरोडाशस्स्याद्ब्रह्मवर्चसकामस्य । शिरो वा एत-

......[न वहन्तीभिः] स्नायात्। यद्वहन्तीभिः स्नायात्क्षत्रं यश ऋच्छेत्। न कूप्याभिः स्नायात्। यत्कूप्याभिः स्नायाद्विशं यश ऋच्छेत्। स्थावराभिः स्नेयम्। एता वा अपां दीक्षिताः पशुवतीर्या स्थावराः। [लोमशाः संतताः।] लोमशाः पशवः। यजमानमेव यशसार्पयति ॥ ६ ॥ Cf. KS. XXII, 13; MS. III, 6, 1.2; TS. VI, 1, 1.

5 हविर्वै दीक्षितः। न हविरनभिघृतं मेधमश्नुते। यदभ्यनक्त्यभ्ये-वैनं घारयति मेध्यत्वाय। घृतं देवानां निष्पक्कं मनुष्याणामायुतं गन्ध-र्वाणां स्वयंविलीनमादित्यस्य। नैतद्देवत्रा न मनुष्यत्रा यन्नवनीतम्। नैष देवत्रा न मनुष्यत्रा यो दीक्षितः प्रच्युतो ऽस्माल्लोकात्। यन्नव-नीतेनाभ्यङ्क्ते समृद्ध्यै ॥

10 वासः परिधत्ते। अग्नेस्तूषः पितॄणां नीविरोषधीनां प्रघातो वायो-र्वातपा विश्वेषां देवानामोतवश्च तन्तवश्च नक्षत्राणामतीरोकाः। सर्वदेवत्यं वासः। सर्वदेवत्यो दीक्षितः। सर्वाभिरेवैनं देवताभिः समर्धयति ॥

आङ्क्ते। इन्द्रं वै वृत्रं जघ्निवांसं रक्षांस्यसचन्त। तान्यञ्जनगिरि-णान्तरधत्त। रक्षांस्येतं सचन्ते यो दीक्षते। भवति हि यदाङ्क्ते। रक्ष-15 सामन्तर्हित्यै। इन्द्रो वै वृत्रमहन्। तस्य चक्षुः परापतत्। तत्त्रिककुभं प्राविशत्। यदाङ्क्ते तस्यैव चक्षुषो ऽवरुद्ध्यै। द्विर्दक्षिणमाङ्क्ते सकृत्स-

यज्ञस्य यत्पुरोडाशः। ब्रह्मवर्चसं पुरोडाशः। ब्रह्मवर्चसी भवति। चरुर्घृते स्यात्प्रजाकामस्य वा पशुकामस्य वा। मिथुनं वा एतद्यद्घृतं च तण्डुलाश्च। धेन्वा घृतं पयो ऽनडुहस्तण्डुलाः। मिथुनमेव यज्ञमुखे दधाति प्रजननाय। यतो वा एतद्रूपं यच्चरुः। एजतेव ह्येति दीक्षितो ऽमुं लोकम्। अमुं ह्येष लोकमभिदीक्षते यच्चरुर्भवति। समृद्ध्यै। आङ्क्ते ऽभ्यङ्क्ते ऽश्नाति वासः परिधत्ते। एता वै पुरुषस्य तन्वः। सर्वतनूरेव भूत्वा दीक्षामुपैति। छिद्रो वै पुरुषो ऽन्तराद-मेध्यः। यदश्नाति मेध्यत्वायैवाच्छिद्रत्वाय। एवमिव वा अमुष्मिंल्लोके यथा दीक्षमाणः। यथा मन्येतेत्थं मे नोपतप्स्यतीति तथा व्रतयेत्। अथो यतः कनीयो दीक्षितस्सन्व्रतयिष्यन्स्यात्तथा प्राश्नीयात्। केशश्मश्रु वपते नखानि निकृन्तते दतो धावते। अमृतं वा एतत्पुरुषस्य। अमेध्यममेध्यमेवापहत्य मेधमुपैति। स्नाति। अङ्गिरसो वा अप्सु दीक्षां निधाय स्वर्गं लोकमायन्। यत्स्नाति तामेव दीक्षामालभते। ग्रीवादघ्ने स्नेयम्। ग्रीवादघ्ने हि ते तां निधायायन्। यावत्येव कियति चाद्भिश्चे-त्स्नाति तेनैव तां दीक्षामालभते।

1. The ms. मेथ०.

व्यम् । त्रिवृद्यज्ञः । मुखत एव यज्ञमालभते । त्रिर्दक्षिणमाङ्क्ते द्विः सव्यम् । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्द्धे । दक्षिणं पूर्वमाङ्क्ते । सव्यं हि पूर्वं मनुष्या आञ्जते । व्यावृत्त्यै । यजुषाङ्क्ते । अयजुषा हि मनुष्या आञ्जते । व्यावृत्त्यै । पराचीनमानक्ति न निधावति । आचपराचं हि मनुष्या आञ्जते । व्यावृत्त्यै । इषीकयाङ्क्ते । शलल्या हि मनुष्या आञ्जते । व्यावृत्त्यै । सतूला भवति । मैत्री वै सतूला वारुणी परिशीर्णा । मैत्रो दीक्षितः । समृद्ध्यै । ऊनमिव वा एतच्छिद्रमिव यच्चक्षुः । यदाङ्क्ते तदेवापूरयति । अच्छिद्रत्वाय ॥

पावयति । इन्द्रो वै वृत्रमहन् । तमप्स्वेवाध्यहन् । तासां या यज्ञियां[1] मेध्या आसंस्ता उदक्रामन् । ता ओषधयोऽभवन् । यत्तेजस्ते दर्भाः । तस्मात्ते पवित्रम् । तस्माद्दर्भैरपः पुनन्ति । यद्दर्भपिञ्जूलैः पावयत्यपामेवैनं तेजसा पावयति । द्वाभ्यां पावयति । द्वे सत्यं चानृतं च । सत्येनैवास्यानृतं पावयति । द्वौ प्राणश्चापानश्च । त्रिभिः पावयति । [त्रयो हि] प्राणाः प्राणो व्यानोऽपानः । तानेव यजमाने दधाति । पञ्चभिः पावयति । पाङ्क्तः पुरुषः । यावानेवास्यात्मा तं पावयति । [सप्तभिः पावयति । सप्त वै छन्दांसि । छन्दोभिरेवैनं पावयति । नवभिः पावयति । ] नव हि प्राणाः । प्राणैरेवैनं पावयति । एकविंशत्या पावयति । एकविंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या आत्मैकविंशः । यावानेवास्यात्मा तं पावयति । चित्पतिस्त्वा पुनात्विति । ब्रह्म वै चित्पतिः । ब्रह्मणैवैनं पावयति । वाक्पतिस्त्वा पुनात्विति । स हि पावयिता । देवस्त्वा सविता पुनात्विति । सवितृप्रसूत एवैनं देवताभिः पावयति । अच्छिद्रेण पवित्रेणेति । अच्छंवषट्कारमेवैतत्पुनीते[2] । सूर्यस्य रश्मिभिरित्यादित्यस्यैवैनं तन्वा पावयति । तस्य ते पवित्रपते पवित्रेणेति । यज्ञो वै पवित्रपतिः । यज्ञायैवैतत्पुनीते । यस्मै कं पुने तच्छकेयमिति । यज्ञं शकेयमित्येवैतदाह । अन्वञ्चं पावय-

1. The ms. यज्ञीया.

2. Thus the ms. KS, अच्छम्बट्कारमेवैनं पावयति.

ति । अन्वङ्ङ्‌ पुरुषं प्राणः । यदा वै प्राणस्तिर्यङ्‌ भवत्यथ प्रमीयते । यत्तिर्यञ्चं पावयेत्तिर्यञ्चमस्य प्राणं कुर्यात्प्रमीयेत । अन्वात्ममेवास्य प्राणं करोति । बहिष्पावयति । मनुष्यलोक एवैनं पावयित्वा पूतं देवलोकं प्रणयति ॥ ७ ॥ Cf. I, 13; KS. XXIII, 1; II, 1; MS. III, 6, 2. 3; I, 2, 1; TS. VI, 1, 1; I, 2, 1.

5 गर्भो दीक्षितो योनिर्दीक्षितविमितमुल्वं दीक्षितवसनं जरायु कृष्णाजिनम्‌ । एतस्माद्वै योनेरिन्द्रो ऽजायत । कुलायमेवैतदासीवनं[1] कृत्वोपचरति । तस्माद्दीक्षितम्‌ । नान्यत्र दीक्षितविमितात्सूर्यो ऽभिनिम्रोचेन्नान्यत्राभ्युदियात्‌ । स्वादेव योनेः प्रजायते । आकूत्यै प्रयुजे [2]ऽग्नये स्वाहेति । आकूय वै यज्ञः प्रयुज्यते । यत्रैव यज्ञमाकुवते तदेनमालभते । मेधायै 10 मनसे [2]ऽग्नये स्वाहेति । मेधया वै मनसाभिगच्छति यजती स्य इति । यज्ञमेवावरुन्द्धे । दीक्षायै तपसे [2]ऽग्नये स्वाहेति । दीक्षया वै तपसा यज्ञं प्राप्नोति । यज्ञमेवावरुन्द्धे । सरस्वत्यै पूष्णे [2]ऽग्नये स्वाहेति । वाग्वै सरस्वती पशवः पूषा । वाचा पशुभ्यो ऽधि यज्ञमालभते । आपो देवीर्बृहतीर्विश्वशम्भुव इति । आपो वै यज्ञः । दिवि यज्ञो ऽन्तरिक्षे पृथिव्याम्‌ । ब्रह्म बृहस्पतिः । 15 अत्रात्र वै यज्ञः । यत्रयत्रैव यज्ञस्तत एनं ब्रह्मणालभते । पञ्चैतानि जुहोति । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्द्धे । यज्ञस्य वा एते संभारा यदेतानि यजूंषि । यदेतानि न जुहुयादसंभृतो ऽस्य यज्ञः स्यात्‌ । यदेतानि जुहोति यावानेव यज्ञस्तं संभरति । अदीक्षितो वा एकयाहुत्या । अदन्ति ह स्म वा एतस्य पुरान्नं यस्यैतानि न हूयन्ते । यदेतानि [जुहोति] 20 दीक्षितत्वायैव द्वितीयत्वायैवै[3] । अग्नये स्वाहाग्नये स्वाहेति जुहोति । अग्निः सर्वा देवताः । सर्वा एव देवता अवरुन्द्धे । पञ्चैतानि जुहोति । औद्ग्रहणं षष्ठम्‌ । षडृतवः । ऋतुष्वेव प्रतितिष्ठति । यज्ञः सृष्टः प्र यजुरव्लिनात्प्र साम । तमृगेवायच्छन्नव[4] समानि द्वादश यजूंषि । तस्मान्नवभिर्बहिष्पवमानं स्तुवन्ति । ऋचौद्ग्रहणं जुह्वति । यदृचौद्ग्रहणं जुहोति

1. The ms. ०सवनं.

2. The ms. अ०. Cf. I, 14.

3. The ms. द्वितीयत्वायाव.

4. Thus KS. The ms. तमृचोवा०.

यज्ञमेव सृष्टं प्रत्युद्यच्छति । द्वादशभिर्ह स्म वै पुरा कारुद्वेषिणं[1] औद्-ग्रहणं जुह्वति । एतदेव द्वादशगृहीतं कृत्वा जुहुयात् । तेनैव तदाप्नोति । पूर्णया स्रुचा जुहोति । पूर्णः प्रजापतिः । प्रजापतिमेवाप्नोति । यदूनया जुहुयाद्भ्रातृव्याय लोकं कुर्यात् । कामतं वै पूर्णम् । यं हि कामं कामयते तं पूर्णस्यं[2] कुरुते । यमेव कामं कामयते तमवरुन्द्धे ॥ 5

स्वे छन्दसि यज्ञः प्रतिष्ठाप्यः । अनुष्टुब्वै प्रजापतेः स्वं छन्दः । यज्ञः प्रजापतिः । यदनुष्टुभौद्ग्रहणं जुहोति स्व एव च्छन्दसि यज्ञं प्रतिष्ठा-पयते । छन्दःप्रतिष्ठानो वै यज्ञः । स यथाछन्दसं छन्दःसु प्रतिष्ठाप्यः । सैषानुष्टुप् । तस्याः सप्ताक्षरमेकं पदमष्टाक्षराणि त्रीणि । तेषां सप्तानां यानि त्रीणि तान्यष्टावुपयन्ति । तान्येकादश । सा त्रिष्टुप् । यानि चत्वारि तान्यष्टा- 10 वुपयन्ति । तानि द्वादश । सा जगती । यान्यष्टौ सा गायत्री । अविभक्तानुष्टुप् । स्वाहाकारेण पङ्क्तिः । एतावन्ति वै छन्दांसि । यज्ञमेव यथाछन्दसं छन्दःसु प्रतिष्ठापयते ॥

यज्ञः सृष्टो देवताभिरालभ्यः[3] । विश्वो देवस्य नेतुरिति यन्नेतृमती तेन सावित्री । मर्त इति पितृदेवत्या । विश्व इति वैश्वदेवी । द्युम्नमिति बार्हस्पत्या । 15 पुष्यत्विति पौष्णी । सारस्वतः स्वाहाकारः । एतावतीर्वै देवताः । यज्ञमेवैत-त्सृष्टं देवताभिरालभते । यज्ञश्च सृष्टो हुतस्त्रेधा[4] प्रावि[5][शद्दचं तृतीयेन साम तृतीयेन यजुस्तृतीयेन[6] ।......॥ ८ ॥ ] Cf. I, 14; KS. XXIII, 2; II, 2; MS. III, 6, 4. 5; I, 2, 2; TS. VI, 1, 2; I, 2, 2.

1. The ms. ॰द्वेषेण.
2. The ms. पूर्णश्च.
3. The ms. शिरसो लभ्यः for आलभ्यः.
4. KS. यज्ञस्सृष्टस्त्रेधा.
5. Here there is a gap in the Kap. ms. It corresponds to twenty-six lines of the printed KS.
6. The Kāṭhaka continues as hereunder:

तस्य या प्रिया तनूरासीत्तया यजुः प्राविशत् । तस्माद्यजुषो नोच्चैः कीर्तयितव्यम् । यज्ञस्य प्रियां तन्वमुद्दूर्णोत्यब्रह्मवर्चसी भवति नग्नंभावुकः ॥ २ ॥ For references see above.

यज्ञो वै देवेभ्यो ऽपाक्रामत्कृष्णो भूत्वा । तस्मात्पुनरुपावर्तमानादृक्सामे अपाक्रामताम् । ते कृष्णं प्राविशतां यज्ञं मन्यमाने । शुक्लं साम कृष्णमृक् । यत्कृष्णाजिनेन दीक्षत ऋक्सामे एवालभते । अहोरात्रे वै मिथुनं समभवताम् । तयोरोजो वीर्यमपाक्रामत् । तत्कृ-

......[यद्येकं स्यात्पा]दं प्रतिषीव्येत् । अनन्तर्हितो यजमानो यज्ञाच्च देवताभ्यश्च भवत्यनन्तर्हितो यज्ञो देवताभ्यः । विष्णोः शर्मासि शर्म यजमानस्येति । विष्णुर्वै यज्ञः । वैष्णवो यजमानः । विष्णुनैव यज्ञे-नात्मानमुभयतः सयुजं कुरुते । यज्ञो यदसृज्यत तस्योल्बमन्ववेष्टत ।
5 तद्दीक्षितवसनमभवत् । गर्भो दीक्षितः । यद्दीक्षितवसनं परिधत्ते स्वेनैव योनिनात्मानमोर्णुते । तस्मान्महत्कार्यम् । एवमिव ह्युल्बेन गर्भ आवृत इव च्छन्न इव । न प्रत्यक्षं वदेद्वाचो ऽयातयामत्वाय ॥ ९ ॥ Cf. I, 15; KS. XXIII, 3; II, 3; MS. III, 6, 6; I, 2, 2; TS. VI, 1, 3; I, 2, 2.

इति कपिष्ठलकठसंहितायां पञ्चत्रिंशत्तमो ऽध्यायः ॥

---

ष्णं प्राविशत् । यत्कृष्णाजिनेन दीक्षते ऽहो-रात्रयोरेवौजो वीर्यमालभते । द्यावापृथिवी वै मिथुनी समभवताम् । तयोस्तेजो यज्ञियमपाक्रा-मत् । तत्कृष्णं प्राविशत् । यत्कृष्णाजिनेन दीक्षते द्यावापृथिव्योरेव तेजो यज्ञियमालभते । **ऋक्सामयोश्शिल्पे स्थ** इत्यृक्सामे एवा-लभते । यथा नावौ तरिष्यैस्ते एनं संपारयत ओदृचः । **शर्मासि शर्म मे यच्छेति** । देवताश्च वा एष यज्ञं चाभ्यारोहति यत्कृष्णा-जिनमारोहति । यदा वै श्रेयान्कामयते ऽथ पापीयांसं प्रतिनुदते । देवताभ्यश्चैव यज्ञाय च नमस्करोत्यप्रतिनोदाय । आशुमवन्ति वा अन्यानि च्छन्दांस्यासन्ननाशुमवन्त्यन्यानि । तान्याजिमयुः । यान्याशुमवन्त्यासन्तानि प्रध-क्ष्यामह इति भीषा कृष्णं प्राविशन् । तानी-

मानि यज्ञं वहन्ति । यान्यनाशुमवन्त्यासंस्ता-निमान्वक्ष्यामह इति भीषा कृष्णं प्राविशन् । तानीमानि च्छन्दांसि यान्ययज्ञवाहानि । तानि स्वाराज्यमगच्छन् । स्वाराज्यं गच्छति य एवं वेद । यत्कृष्णाजिनेन दीक्षत आशुमवन्ति चैवानाशुमवन्ति चोभयानि च्छन्दांस्यवरुन्द्धे ॥

होत्रा वै देवेभ्यो ऽपाक्रामन् । तद्वषट्कारो ऽप्यचरत्कृष्णो भूत्वा । अस्कन्नं वै वषट्कारा-द्धविः । तस्मात्कृष्णाजिने हविष्पिंषन्ति । हविर्वै दीक्षितः । तस्मात्कृष्णाजिनमध्यास्ते त-स्मान्न निष्ठीवति हविषो ऽस्कन्दाय । बर्हिष्टाद्वै पशूनां यज्ञश्च देवताश्चान्तरान्मेदः । यद्बहिर्लोमं कृष्णाजिनं कुर्यादन्तर्हितो यजमानो यज्ञाच्च देवताभ्यश्च स्यात् । यदन्तर्लोममन्तर्हितो यज्ञो देवताभ्यः । द्वे समस्येदन्तर्मांसे बहिर्लोम्नी ।

अङ्गिरसो वै स्वर्गं लोकं यन्तस्ते मेखलाः संन्यकिरन् । ततः शर
उदतिष्ठत् । यच्छरमयी मेखला भवति तामेव मेखलामालभते । देवा
वै यत्रोर्जं व्यभजन्त ततः शर उदतिष्ठत् । यच्छरमयी मेखला भवति
तामेवोर्जमालभते । ऊर्ग्वै मेखला । मध्यं प्रति परिव्ययति । ऊर्जमेव
मध्यतो दधाति यजमानेषु[1] च प्रजासु च । तस्मान्मध्यतः प्रजा ऊर्गू- 5
र्जयति । नाभिं प्रति परिव्ययति । ऊर्ध्वं वै पुरुषस्य नाभ्या मेध्यम-
वाचीनममेध्यम् । मेध्यस्य चामेध्यस्य च व्यावृत्त्यै । त्रिवृद्भवति । त्रिवृता
वै स्तोमेन प्रजापतिः प्रजा असृजत । त्रिवृद्वज्रः । वज्रमेव भ्रातृव्याय
प्रहरति । इन्द्रो वै वृत्राय वज्रं प्राहरत् । तस्य यत्प्राशीर्यत स शरो ऽभवत् ।
तच्छरस्य शरत्वम् । वज्रो वै शरः । यच्छरमयी मेखला भवति वज्रमेव 10
भ्रातृव्याय प्रहरति । यं द्विष्यात्तं परिव्ययन्ध्यायेत् । वज्रेणैवैनं समर्पयति ।
मेखला पुंसो भवति योक्त्रं स्त्रियाः । स्त्री वै मेखला पुमान्योक्त्रम् ।
मिथुनमेव यज्ञमुखे विपर्यूहति[2] प्रजननाय । वज्रो वै मेखला । क्षुदुदरं[3]
पाप्मा भ्रातृव्यः । यन्मेखलां परिव्ययते वज्रेणैव पाप्मानं भ्रातृव्य-
मपहते ॥ 15

यज्ञो वै देवेष्वासीद्दक्षिणा पितृषु । स यज्ञो दक्षिणामभ्यकामयत ।
तं पितरो ऽब्रुवन्देवेषु णो[4] भागधेयमिच्छेति । ते ऽब्रुवंस्तृतीयसवनभागा
[5]असन्निति । तस्मात्पितृभ्यस्तृतीयसवनं क्रियते । तमह्वयत् । तौ हूतो ऽधा-

1. KS. यजमाने.

2. KS. ॰पर्यूंहेते which is to be emended to singular ॰पर्यूहते.

3. KS. क्षुदुदारं is to be corrected.

4. Thus the ms. KS. नो.

5. KS. आ॰ to be corrected.

वत् । तस्मात्पुमान्स्त्रीहूतो धावति । तस्माच्छ्रोत्रिय स्त्रीकामतमः । स हि यज्ञस्य नेदिष्ठी । तौ समभवत् । तदिन्द्रो ऽचायत् । सो ऽमन्यत यो वा इतो जनिष्यते स एवेदं भविष्यतीति । तं योनिं प्राविशत् । तस्मादजायत । स पुनः प्रत्यवैक्षत । सो ऽमन्यत यो वा इतो ऽपरो जनिष्यते स मे
5 भ्रातृव्यो भविष्यतीति । तमवबृज्य प्राच्छिनत्[1] । सा विषाणाभवत् । यद्विषाणा भवति यज्ञस्यैव रेत इन्द्रस्य योनिं दक्षिणाया योनिमालभते । पश्चाद्वृद्धवति । पश्चभिर्हि स तां निवेष्ट्याच्छिनत् । इन्द्रस्य योनिरसीति । इन्द्रस्य ह्येषा योनिः । कृष्यै त्वा सुसस्याया[2] इति । तस्मात्कृष्टं पच्यते । उत्कृधीति । तस्मादूर्ध्वा ओषधय उत्पच्यन्ते[3] । यजुषा कण्डूयते । अय-
10 जुषा हि मनुष्याः कण्डूयन्ते । व्यावृत्त्यै । यदयजुषा कण्डूयेत वरुणवत्कण्डूयेत । अपि गर्भाः पामना जायेरन् ॥

वाग्वै देवान्मनुष्यान्प्रविशन्त्यैत्[4] । तस्या यदत्यरिच्यत तद्वनस्पतीन्प्राविशत् । सैषा वनस्पतिषु वाग्वदति या दुन्दुभौ या नाड्यां या तूणवे । यद्दण्डो वाच एवातिरिक्तमवरुन्द्धे । तं मैत्रावरुणाय प्रयच्छति ।
15 वाचमेवास्मै तत्प्रयच्छति । तौ शश्वद्दत्विग्भ्यो विभजति । तस्मादस्य वाङ् नोपदस्यति । आस्यदघ्नः कार्यः । तावती हीयं वाग्वदति । अथो एतावती[5] वाचा वीर्यं क्रियते । यो वृक्षः फलग्रहिस्तस्य कुर्यात्फलग्रहिरसानीति ॥ १ ॥ Cf. I, 15; KS. XXIII, 4; II, 3; MS. III, 6, 7. 8; I, 2, 2; TS. VI, 1, 3. 4; I, 2, 2.

स्वाहा यज्ञं मनस इति । मनसा वै यज्ञ आलभ्यते । वातयोनि-
20 र्यज्ञः । दिवि यज्ञो ऽन्तरिक्षे पृथिव्याम् । अत्रात्र वै यज्ञः । यत्रयत्रैव यज्ञस्तत एनं मनसालभते । तं यत्वास्ते । यज्ञमेव तद्यत्वास्ते । यदि विसृजेद्यज्ञं विसृजेत् । यद्विसृजेत्पुनर्दीक्षयेत् । यत्पुनर्दीक्षयेदाहुतीरति[6]-रेचयेत् । गायत्रीं वैष्णवीमनुब्रूयात् । वाग्वै गायत्री यज्ञो विष्णुः । वाचैव

1. The ms. प्राच्छिणत्.
2. KS. सुमनस्याया to be corrected.
3. The ms. उत्पद्यन्ते.
4. Thus KS. The ms. प्रविशति.
5. KS. एतावति हि. Cf. MS. p. 71, l. 1.
6. KS. °रभि°.

यज्ञं संतनोति । बार्हस्पत्यामुत्तरामनुब्रूयात् । ब्रह्म वै बृहस्पतिः । ब्रह्मणा यज्ञस्यार्तं[1] निष्क्रियते । ब्रह्मणैव यज्ञस्यार्तं निष्करोति । त्वमग्ने व्रतपा असीत्यग्नये व्रतपतये ऽनुब्रूयात् । व्रतपतिं वा एतस्य व्रतं गच्छति यो दीक्षितः सन्न व्रतं चरति । अग्निर्देवानां व्रतपतिः । व्रतपतेरेवाधि व्रतमालभते । अदीक्षिष्टायमसावामुष्यायण इति त्रिरुपांश्वाह त्रिरुच्चैः । देवेभ्यश्चैव मनुष्येभ्यश्च यज्ञं प्राह । नक्षत्रं दृष्ट्वा वाचं विसृजते । दि[2][वा वै मनुष्या यज्ञेन चरन्ति नक्तं देवाः । ...... ॥ २ ॥] Cf. I, 16; KS. XXIII, 5; II, 3. 4; MS. III, 6, 8. 9; I. 2, 2. 3; TS. VI, 1, 4; I, 2, 2. 3.

1. The ms. °र्तिं.
2. Here is again a gap in the ms. This gap is filled up by a portion of the Kap. Brāhmaṇa. See the Introduction.
3. The Kāṭhaka text runs as follows:

अह्नैव रात्रीमभिसंतत्य देवेभ्यो यज्ञं संप्रयच्छति गोपीथाय । **व्रतं कृणुते**ति यज्ञं कुरुतेत्येवैतदाह । पाङ्क्त्येषा व्याहृतिः । पाङ्क्तो यज्ञः । वाच एवैतत्सम्यगुद्यते । नोत्तानो दीक्षितश्शयीत । यदुत्तानश्शयीत देवलोकमुपावर्तेत । न न्यङ् शयीत । यन्न्यङ् शयीत पितृलोकमुपावर्तेत । जनो वा इतः पितरो दूरे । जनादागच्छति प्रमायुकस्स्यात् । तिर्यङ्ङेव शयीत । अन्तरिक्षदेवत्यो वै दीक्षितः । स्वमेव लोके स्वमायतनमुपावृत्य शये । नाग्नेः पराङ् शयीत । अग्निस्सर्वा देवताः । देवताभ्य आवृश्च्येत । अग्निमेवाभ्यावृत्य शयीत । अग्निस्सर्वा देवताः । देवता एवाभ्यावृत्य शये । **दैवीं धियं मनामहे** इति मार्जयते ब्रह्मणा सतेजस्त्वाय । **अथो आपो मे नेदीक्षामवमुष्णा**निति । अन्नं वै मनुष्येभ्य उदबीभत्सत । तद्देवा अयियैसन् । ता आपो ऽब्रुवन्नुपावर्तस्व वयं त एतान्स्वदयिष्याम इति । तदुपावर्तत । यद्दीक्षितो मार्जयते ऽन्नाद्यस्यावरुद्ध्यै । तस्माद्ब्राह्मण आहार्य आहृते हस्ता अवनेनिजीतान्नाद्यस्यावरुद्ध्यै । न वा एतेन हुतं व्रतयितव्यं नाहुतं यो दीक्षितः । **ये देवा मनुजाता** इति व्रतयति । प्राणा वै देवा मनुजाताः । स्वायामेव देवतायां हुतं व्रतयति । तेनास्य न हुतं भवति नाहुतम् । **अग्ने त्वं सु जागृही**ति स्वप्स्यन्नग्निमभिमन्त्रयेत । बहु वा एष सुप्तो व्रत्यं निगच्छति । अग्निर्देवानां व्रतपतिः । व्रतपतय एव व्रतं संप्रदाय काममृधते । **त्वमग्ने व्रतपा असी**ति प्रबुध्याग्निमभिमन्त्रयेत । व्रतपतये वा एष व्रतं संप्रयच्छति । अग्निर्देवानां व्रतपतिः । व्रतपतेरेवाधि व्रतमालभते ॥ ५ ॥ For references see above.

न दीक्षितेन होतव्यम् । हविर्वै दीक्षितो रुद्रो ऽग्निः । यज्जुहुयाद्धविर्भूतमात्मानं रुद्रायापिदध्यात् । यन्न जुहुयाद्यज्ञं विच्छिन्द्यात् । तदेतद्व्रतमपरस्मिन्नग्ना अधिश्रित्य पूर्वमग्निमभिसंचरति । तेनैव यज्ञं संतनोति । यथा वि गौरूधः कुरुत एवमेष देवेभ्यो यज्ञं संभरति यो दीक्षते । यज्जुहुयाद्यज्ञं विदुह्यात्स्रेवयेत् । यथोपधीते सूत एवं तत् । यदुपरि जुहोति सकृदेव यामेऽभ्यागते देवेभ्यो यज्ञं दुहे । सर्वं वा एतस्य हविर्भूतं यो दीक्षितः । निरादिश्य हि दीक्षते ।

**......[देवता]भिश्चैव यज्ञेन च सह तरति । आ पाराद्रन्तोर्लोष्टं विमृ-णन्नासीत । तेनास्या नैते**[2] । सचेहि[3] ॥ अयं ते योनिर्ऋत्विय **इति यथायजुः ।** एदमगन्म देवयजनं पृथिव्या इति **देवयजनमध्यवस्यति ।** [ ऋक्सामाभ्यां संचरन्तो यजुर्भिरिति ] **ऋक्सामाभ्यां चैव देवताभिश्च देवयजनमनुसंच-**
5 **रति**[4] **॥ ३ ॥** Cf. I, 16; KS. XXIII, 6; II, 4; MS. III, 6, 9. 10; I, 2, 3.

**देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकुर्वत तदसुरा अकुर्वत । अग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यान्येष वाव तर्हि यज्ञ आसीत् ।**

तस्य यो ऽन्नमत्ति यज्ञं गिरति । तस्य यज्ञेनैव प्रायश्चित्तिः । पाशेन वा एषो ऽभिहितो यो दीक्षितः । वरुणयः पाशः । तस्य यो ऽन्नमत्ति वरुण एनं ग्राहुको भवति । तस्माद्बद्धस्य निगस्य चान्नं नाद्यात् । देवानां वा एतत्परिपूतं यो दीक्षितः । मनुष्याणामिन्न्वै परिपूतं सुर-भ्यवायम् । तस्माद्दीक्षितस्यान्नं नाद्यात् । त्रेधा वा एतस्य पाप्मानं विभजन्ते यो दीक्षितो यो ऽन्नमत्ति स तृतीयं यो ऽश्लीलं कीर्तयति स तृतीयं यो नाम गृह्णाति स तृतीयम् । तस्मा-द्दीक्षितस्य नान्नमद्यान्नाश्लीलं कीर्तयेन्न नाम गृह्णीयात् । दानाय वा एष दीक्षते । अथैतद-नृतं करोति यत्प्रतिगृह्णाति । गर्भो दीक्षितः । हिनस्ति गर्भं प्रतिगृहीतम् । **पूषा सनीनां सोमो राधसा**मिति । पूषा हि सनीनामीशे सोमो राधसाम् । **रास्वेयत्सोमे**ति । सोमो वा एतत् । एतस्मै रासते यद्वनुते । **आ भूयो भरे**ति । आगमे ह्येनं भूयः । **देवस्सविता वसोर्वसुदावे**ति । सवितृप्रसूत एव प्रतिगृह्णा-त्यात्मनो ऽहिंसायै । देवेभ्यो वै यज्ञो न प्राभवत् । तं दक्षिणाभिस्समभावयन् । यद्दीक्षितो भृतिं वनुते यज्ञमेव संभावयति । तस्माद्द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत । यावानेव यज्ञस्तं संभावयति ॥

देवेभ्यो वा अन्या दक्षिणा नीयन्ते मनु-ष्येभ्यो ऽन्याः । ता एता अनुदिशति । **वायवे त्वे**ति या नश्यति । **निर्ऋत्यै त्वे**ति यावसीदति । **रुद्राय त्वे**ति यां रुद्रो हन्ति या सैशीर्यते । **वरुणाय त्वे**ति याप्सु या श्लेष्केण । **यमाय त्वे**ति यान्येन मृत्युना । एता वै देवेभ्यो नीयन्ते मनुष्येभ्य इतराः । ता एताः पुरयब्राह्मण एताभिर्भूय उपप्नोति । ऋध्नोति य एवं वेद । **देवीरापो अपां नपा-**दित्यपो ऽतिगाहते । यदेवासां यज्ञियं यद्धविष्यं तत्परिवृणत्त्यनवक्लेशाय । अग्निर्वै दीक्षितः । शमयन्त्यग्निमापः । यजुषातिगाहते शान्त्यै । शान्तिर्ह्यापः । अथो तेज एवात्मन्भूयस्समाधत्ते । यदयजुषातिगाहेत विहदिनीरापस्स्युः । यजुषा-तिगाहते । तस्मादापस्संतता अविच्छिन्ना धा-वन्ति । यदि नाव्यां तरेदरणी च रथं चाधाय तरेत् । अग्निर्वै सर्वा देवता यज्ञो रथः ।

1. The ms. वितृ०.
2. Thus KS. The ms. तेनस्यां नेते. Prof. Caland suggests तेनास्या नैति 'there-by he does not leave this (the earth, because he has the loṣṭa in his hand)'.
3. The ms. सख्येहि, and thus also KS. The Kāṭh. ms. agrees with our emendation. See. note in the mantra section.
4. KS. ०मभिसंतरति.

ते देवा एतं सौम्यमध्वरमपश्यन् । तमाहरन् । ते ऽदीक्षयन् । ते ऽग्निहोत्र-
मेव व्रतमकुर्वत । अग्निहोत्रं वाव व्रतम् । तस्माद्याग्निहोत्रस्य स्कन्नस्य प्रा-
यश्चित्तिः सा व्रतस्य स्कन्नस्य प्रायश्चित्तिः । तस्माद्द्विव्रतो दीक्षितः स्या-
त् । द्विर्ह्यग्निहोत्रं जुह्वति । तेषां यत्पौर्णमासमासीत्तमग्नीषोमीयं पशुमकु-
र्वत यः पूर्वेद्युरालभ्यते । यद्दार्शं तमाग्नेयं यो ऽनुसवनमालभ्यते । 5
वैश्वदेवमेव प्रातःसवनमकुर्वत वरुणप्रघासान्माध्यन्दिनं सवनं साक-
मेधांस्तृतीयसवनम् । तृतीयसवने पितृयज्ञमवाकल्पयंस्तृतीयसवने त्र्यम्ब-
कान् । ते ऽसुरा अपक्रामन्तो ऽब्रुवन्न वा इमे ध्वर्तवा[1] अभवन्निति ।
तदध्वरस्याध्वरत्वम् । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वा-
न्दीक्षते यमेवं विद्वान्दीक्षयति[2] भवत्यात्मना परास्य भ्रातृव्यो भवति 10
॥ ४ ॥ Cf. KS. XXIII, 7; MS. III, 6, 10.

स्वर्गं वा एतेन लोकं प्रयन्ति यत्प्रायणीयम् । तत्प्रायणीयस्य
प्रायणीयत्वम् । छिद्यते वा एषो ऽस्माल्लोकाद्यो ऽमुं लोकं गच्छति ।
यदादित्यमुदयनीयं भवत्यस्मिन्नेव लोके प्रतितिष्ठति । देवा वा असु-
रान्हत्वा वैरदेयादीषमाणास्ते दिशो ऽमोहयन्नेन्न इद[मन्यो ऽनु प्रजा- 15
नादिति । तदाहुः साध्या वै नाम देवा आसन्पूर्वे देवेभ्यः । ते दिशो
मोहयित्वा स्वर्गं लोकमायन्नेन्न इ]मं लोकमन्यो ऽनु प्रजानादिति[3] ।
ता इमे ऽन्वरे देवा अनु प्राजिज्ञासन्त । ता न प्राजानन् । सादिति-
रब्रवीद्वार्यं वृणै मत्प्रायणा एव यज्ञा ऽसन्मदुदयना इति । तस्मादा-
दित्यं प्रायणीयं भवत्यादित्यमुदयनीयम् । वार्यवृतं ह्यस्याः । पथ्यां 20
स्वस्तिं यजतेत्यब्रवीत्तया प्राचीं दिशं प्रज्ञास्यथेति । अग्निं यजतेत्यब्र-
वीत्तेन दक्षिणाम् । सोमं यजतेत्यब्रवीत्तेन प्रतीचीम् । सवितारं यजतेत्य-
ब्रवीत्तेनोदीचीम् । अहमेवेमावित्यब्रवीत्[4] । ......[5][॥ ५ ॥] Cf. KS. XXIII,
8; MS. III, 7, 1. 2; TS. VI, 1, 5.

1. The ms. भ्यर्द्धर्चवान्.
2. The ms. दीक्षितयति.
3. Thus KS. The ms. ते दिशो मोहयुंस्तिश्च इद मं लोकंमन्योन्यं न विजानीयदिति.
4. Thus the ms. KS. अहमेवेमा उभौ लोकौ वेदेत्यब्रवीत्.
The Kap. gap corresponds to twenty-six lines of the printed Kāṭhaka.
5. KS. reads:
इयमदितिः । तस्या इयमूर्ध्वा दिक् । ऊर्ध्वा

......[वा]चैव प्रयन्ति वाचोद्यन्ति । आदित्यं प्रायणीयं भवत्यादित्यमुदयनीयम् । अस्मिंश्चैव लोके ऽमुष्मिंश्च यज्ञमुखेन प्रतितिष्ठति । दिशो वै स्वर्गो लोकः । एतद्देवत्या दिशः । यत्प्रायणीयेन यजते दिश एव स्वर्गं लोकमभ्यातिष्ठति । यथा वै तेजन्यूयत एवं यज्ञ ऊयते । 5 यदादित्यं प्रायणीयं भवत्यादित्यमुदयनीयं बसीवेवैतावन्ततो नह्यति द्रढिम्ने ऽप्रस्रंसाय । याः प्रायणीयस्यानुवाक्यास्ता उदयनीयस्य याज्या या याज्यास्ता अनुवाक्याः । येनैव प्रयन्ति तेनोद्यन्ति प्रतिपदत्वाय प्रतिप्रज्ञात्यै । व्यतिषजेद्याज्यानुवाक्या यं द्विष्यात्तस्य । प्रैनमस्माल्लोकाच्च्यावयति नाम्रुं प्राप्नोति[1] । यथा पथ उदेत्येवं तत् । उभयत 10 एवैनं छिनत्ति । अननुयाजं प्रायणीयं स्यादप्रयाजमुदयनीयम् । समानं

एव तेन स्वर्गं लोकमायन् । ता एता एवं देवता इज्यन्ते दिशां कॢप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै । पथ्यया वै स्वस्त्या देवाः प्राचीं दिशं प्राजानन् । अग्नीषोमा अनुसमपश्यतां सविता प्रासुवत् । इयमदितिः । अस्यामधि यज्ञं प्राश्नमतन्वत । यज्ञमुखं वा एतत्संभ्रियते यत्प्रायणीयम् । वाक्पथ्या स्वस्तिः । यत्पथ्यां स्वस्तिं यजति वाचमेव तत्संभरयति । प्राणापाना एवाग्नीषोमाभ्यां संभरति । प्रसवायैव सविता । इयमदितिः । अस्यामधि यज्ञमुखं संभरयति । कॢप्त्यै वा एतन्निरुप्यते । यत्प्रायणीयं मरुतां देवविशा । देवविशां वै कल्पमानां मनुष्यविशानुकल्पते । यन्मरुत्वद्याज्यायाः पदं भवति । **स्वस्ति राये मरुतो दधातने**ति देवविशामेव कल्पयति । तां कल्पमानां मनुष्यविशानुकल्पते । पथ्यां स्वस्तिं यजति । तस्मादसा आदित्यो ऽच्छिन्नं पुर उदेति पश्चाभिम्रोचाति । पथ्यां ह्येष स्वास्तिमनुसंचराति । अग्निं यजति । तस्माद्दक्षिणातो ऽग्र ओषधयः पच्यमाना आयन्ति । आग्नेया ह्योषधयः । सोमं यजति । तस्मादापः प्रतीचीर्भूयिष्ठा धावन्ति । सौमीर्ह्यापः । सवितारं यजति । तस्मादयमुत्तराद्भूयिष्ठं पवते । सवितृप्रसूतो ह्येष पवते । अदितिं यजति । तस्मादियमुपरिष्टात्प्रजाभ्यो वर्षति । पञ्चैता देवता यजति । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्द्धे । अग्नये षष्ठमवद्यति । षड्तवः । ऋतुष्वेव प्रतितिष्ठति । दश याज्यानुवाक्या भवन्ति । दशाक्षरा विराट् । अन्नं विराट् । विराज्येवान्नाद्ये प्रतितिष्ठति । स्विष्टकृते द्वादशी भवतः । द्वादश मासास्संवत्सरः । संवत्सरस्याप्त्यै । सप्तदश सामिधेन्यो भवन्ति । सप्तदशो वै संवत्सरः । पञ्चर्तवो द्वादश मासाः । एष वाव स संवत्सरः । संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥ ८ ॥

For references see above.

पथ्यां स्वस्तिं यजति । वाग्वै पथ्या स्वस्तिः । वाचमेव तदात्मनस्स्पृणोति । अग्निं यजति । यदेवास्य शुष्कमभिदाह्यं तत्तेन स्पृणोति । सोमं यजति । यदेवास्यार्द्रमात्मनो ऽनभिदाह्यं तत्तेन स्पृणोति । प्रसवायैव सविता । समिष्ट्यै प्रतिष्ठित्या अदितिः । पथ्यया स्वस्त्या प्रयन्ति पथ्यया स्वस्त्योद्यन्ति । वाग्वै पथ्या स्वस्तिः ।

1. Thus the ms. KS. प्रापयति.

वा एतद्धविः संतत्यै । आत्मा वै प्रयाजाः प्रजानुयाजाः । यदेवं कुर्यादात्मानं च प्रजां चान्तरियादप्रजाः प्रमीयेत । प्रयाजवती एवानुयाजवती स्याताम् । समानं वा एतद्धविः समानी देवता समानं मेच्चणम् । तेनैव यज्ञं संतनोति । नात्मानं न प्रजामन्तरेति ॥

सँस्थाप्यन्न सँस्थाप्यमिति मीमाँसन्ते । स्रवति वै यज्ञो ऽसँस्थितः । तं स्रवन्तं यजमानो ऽनु परास्रवति प्रजया च पशुभिश्च । सँस्थाप्यमेव । पत्नीं तु न संयाजयेत् । अमेध्या वा एषापूता नेश्वरा स्वर्गं लोकं गन्तोः । तामुदयनीये संयाजयति । यथा प्रवासी स्वमायतनमागच्छत्येवमेवैतत्पत्नीं यजमानो ऽस्मिँल्लोके ऽधि[1] प्रतितिष्ठति । दीक्षितान्नं हि वा ईजाना अदन्त्यथ न वसीयाँसो भवन्ति । दीक्षितो वै तर्हि यर्हि प्रायणीयेन यजते । दीक्षित एतर्हि[2] यर्ह्यवभृथादुदेति[3] । प्रायणीयस्य निष्काष उदयनीयमभिनिर्वपति । उदयनीयस्यैव नाश्नीयात् । दीक्षितान्नमेव परिवृणक्ति । वसीयान्भवति ॥ ६ ॥ Cf. KS. XXIII, 9; MS. III, 7, 2; TS. VI, 1, 5.

इति कपिष्ठलकठसंहितायां षट्त्रिंशत्तमो ऽध्यायः ॥

---

1. KS. ऽभि.
2. Thus the ms. KS. तर्हि.
3. The ms. ०देत्य.

कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेताम् । सा कद्रूः सुपर्णीमात्मरूपमजयत् । इयं वै कद्रूर्द्यौः सुपर्णी । छन्दांसि सौपर्णानि । सा कद्रूः सुपर्णीमब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति । सा सुपर्णी छन्दांस्यब्रवीदेतस्मै वै पितरौ पुत्रान्बिभृत ईदृ-
5 शान्मा स्पृणवानितो मा निष्क्रीणीतेति । सा जगत्युदपतच्चतुर्दशाक्षरा सती । साप्राप्य[1] न्यवर्तत । तस्या द्वे अक्षरे अहीयेताम् । सा पशूंश्च दीक्षां चादायापतत् । तस्मात्पशुमन्तं दीक्षोपनमति । तस्मादाहुर्जगती छन्दसां पशव्यतमेति । सा त्रिष्टुबुदपतत्त्रयोदशाक्षरा सती । साप्राप्य न्यवर्तत । तस्या द्वे अक्षरे अहीयेताम् । सा दक्षिणां च तपश्चादा-
10 यापतत् । तस्मात्त्रिष्टुभो लोके दक्षिणा नीयन्ते । एतद्वाव तपो यत्स्वं ददाति । तस्मादाहुर्माध्यन्दिनं सवनानां तपस्वितममिति । सा गायत्र्युदपतच्चतुरक्षरा सती । साजया कर्णगृह्योदपतत् । तमस्या अजाभ्यारुणत् । तदजाया अजात्वम् । सा तानि च चत्वार्यक्षराणि सोमं चादायापतत् । साष्टाक्षराभवत् । ब्रह्मवादिनो वदन्ति कस्माद्गायत्री कनिष्ठा
15 छन्दसां सती यज्ञमुखं परीयाय कस्मात्तेजस्विनितमेति । यदेवादः सोममाहरत्तस्माद्गायत्री यज्ञमुखं तस्मात्तेजस्विनितमा । सा पद्भ्यां द्वे सवने आहरन्मुखेन तृतीयम्[2] । यन्मुखेनाहरत्तदधयत् । तस्माद्द्वे सवने शुक्रवती धीतमिव तृतीयं सवनम् । तस्मादृजीषं तृतीयसवने ऽभिषुण्वन्ति ।

1. KS. सा प्राप्य to be corrected. Cf. further on l. 10 साप्राप्य.

2. The ms. adds सवनं.

यत्तृतीयसवन आशिरमवनयन्ति तृतीयसवनमेव तत्संभरन्तो मन्यन्ते ॥ १ ॥[1] Cf. KS. XXIII, 10; MS. III, 7, 3; TS. VI, 1, 6.

या श्येताक्षी कृष्णवाला कृष्णशफा न तया क्रीणीयात् । हतं[2] वा अस्या एतत्परिपिष्टम् । पितृदेवत्या सा । प्रमायुकः स्यात् । या द्विरूपा न तया क्रीणीयात् । वार्त्रघ्नी सा । जिनाति वा जीयते वा । 5
उत तया राजन्यस्य क्रीणीयात् । न हि तस्यान्तरास्ति[3] । जिनाति वा हि स जीयते वा । याधीलोधकर्णी[4] तया षोडशिनं क्रीणीयात् । अतिरिक्तं वा एतद्रूपाणामतिरिक्तः षोडशी । अतिरिक्तेनैवातिरिक्तमाप्नोति । या बभ्रुरेकहायनी तया क्रीणीयात् । वाग्वै सोमक्रयणी पुरुषो वाक् । यदेकहायन्या क्रीणाति तस्मादेकहायनः पुरुषो वाचं वदति । यज्ज्यायस्या क्रीणाति तस्माज्ज्यायान्वदति ॥ 10

छन्दांसि वा अमुष्माल्लोकात्सोममाहरन्गायत्री श्येनो भूत्वा । तं गन्धर्वा अन्तरा पर्यमुष्णन्विश्वावसुः । स तिस्रो रात्रीरुपहृतो ऽवसत् । तस्मात्तिस्रो रात्रीः सोमः क्रीतो वसति । तं देवाः पुनरयाचन्त । तमेभ्यो न पुनरददुः । ते ऽब्रुवन्गवा निष्क्रीणामेति । ते ऽमन्यन्त 15
यज्ञेन विक्रेष्यामहे यद्गवा निष्क्रेष्यामहा[5] इति । ते ऽब्रुवन्स्त्रीकामा वै गन्धर्वा वाचं स्त्रियं कृत्वा मायामुपावसृजामेति । ते[6] वाचं स्त्रियं कृत्वा मायामुपावासृजन् । ते ऽमन्यन्त प्रजया व्यक्रेष्महि ये वाचा व्यक्रेष्महीति । ते ऽन्वार्तीयन्तास्माकं सोमो ऽस्माकं सोमक्रयणीति । ते गन्धर्वा अब्रुवन्विह्वयामहा इति । ते ब्रह्म गन्धर्वा अवदन्नगायन्देवाः । 20
सा देवान्गायत उपावर्तत । तस्माद्गायन्तीं स्त्री कामयते न ब्रह्म वदन्तम् । अद्रुह्यद्धि सा ब्रह्मणे । तस्मादाहुरक्रीतः सोमो नै सोमक्रयण्यस्ति । देवान्हि सा पुनरुपावर्ततेति । ते ऽब्रुवन्स्त्रीकामा वै गन्धर्वा

1. The ms. adds: दीक्षितनाम पंचप्रपाठकः समाप्तः ॥
2. The ms. व्रतं.
3. The ms. °न्तरोस्ति.
4. The ms. °कर्णा.
5. KS. °क्रेष्याम.
6. Schroeder's text omits वाचं स्त्रियं कृत्वा मायामुपावसृजामेति । ते. Without these words the Kāṭh. remains unintelligible.
7. KS. अक्रीताः सोमेन to be corrected.

बहु वै गन्धर्वेषु मिथुनीभवन्ती संभवन्त्यचारीरपः प्रविश्योदेहीति । तस्या यद्धतं परिपिष्टमासीत्तज्जरती कूटा भूत्वोदैत् । ते ऽब्रुवन्पितृ-देवत्या वा इयमिति । तस्मात्तां पितृभ्यो घ्नन्ति । ते ऽब्रुवन्पुनः प्रविश्योदेहीति । सा पष्ठौही वार्त्रघ्नी द्विरूपा भूत्वोदैत् । सा तेन रूपेणा-
5 पास्पृणुत[2] । तस्मात्सा वरो ऽतिवरेण्यः । य एवं विद्वान्वरं वृणीते नैनं वरो हिनस्ति । ते ऽब्रुवन्पुनः प्रविश्योदेहीति । सा बभ्रुरेकहायनी भूत्वोदैत् । तयाक्रीणन् । तस्मात्सा सोमक्रयणी । तदस्या रूपम् ॥ २ ॥
Cf. KS. XXIV, 1; MS. III, 7, 3. 4; TS. VI, 1, 6.

सोमक्रयण्या तृतीयसवनमवरुद्धम्[3] । पशवो वै तृतीयसवनम् । यद्गवा क्रीणाति तेनैव तृतीयं सवनमवरुन्द्धे । रोहिते चर्मन्मिमीते । तस्माद्रो-
10 हितरूपं पशवो भूयिष्ठाः । न विचेतवा अनुमन्येत न विचीयमानस्योपद्रष्टा स्यात् । सोम ओषधीनामधिराजः । ग्रसितमस्य निष्खिदति क्षोधुको भवति । तस्मात्सोमविक्रयी क्षोधुकः । अपामन्ते क्रीणाति सरसमेवैनं क्रीणाति । हिरण्येन क्रीणाति सतेजसमेवैनं क्रीणाति । अजया क्रीणाति सतपसमेवैनं क्रीणाति । धेन्वा क्रीणाति साशिरमेवैनं क्रीणाति ।
15 अनडुहा क्रीणाति वह्न्येव यज्ञस्यावरुन्द्धे । वत्सतरेण च वत्सतर्या च क्रीणाति मिथुनमेवावरुन्द्धे[4] । ऋषभेण क्रीणाति सेन्द्रमेवैनं क्रीणाति । तदाहुः प्रजापतिना वा एष विक्रीणीते य ऋषभेण विक्रीणीत इति । य एव धूर्षाद्[5] तेन क्रीणीयात् । तेनैव तं क्रीणीयान्न[6] प्रजापतिना विक्रीणीते । दशभिः क्रीणाति । दशाक्षरा विराट् । अन्नं विराट् । विराज्येवान्नाद्ये
20 प्रतितिष्ठति ॥ ३ ॥ Cf. KS. XXIV, 2; MS. III, 7, 4; TS. VI, 1, 9. 10.

जूरसीति वाग्वै सोमक्रयणी । जवते हि वाचेत्थं चेत्थं च । पश्यन्सोमक्रयणीं जुहोति । वाग्वै सोमक्रयणी । पश्यन्नेवैनां यच्छति । धृता मनसेति ।

1. The ms. वयंतं.
2. The ms. °वोक्तुणुत.
3. KS. °रुध्यं is probably to be corrected to °रुद्धं.
4. KS. मिथुनमेवास्य क्रीणाति is an inferior reading.
5. The ms. धूर्षिस्. KS. कश्च सारण्डस्यादेरतास्.
6. Thus the ms. KS. सेन्द्रं क्रीणाति न.

मनसा हि वाग्धृता । [[1]जुष्टा विष्णव इति । यज्ञो वै विष्णुः । यज्ञायैवैनां
जुष्टां करोति । तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहेति । यो
वा एतस्यास्तन्वो यन्त्रमश्नुते भवति सः । सवितृप्रसूत[2] एवास्यास्तन्वो
यन्त्रमश्नुते । स्वाहाकारेणैवैनां यच्छति । अमुष्मा आदित्याय प्रोच्य सोमः
क्रेतव्यो देव सूर्य सोमं क्रेष्याम इति । अमुष्मा एवादित्याय प्रोच्य सोमं 5
क्रीणाति । चिदसीति । वाग्वै सोमक्रयणी । शास्त्येवैनाम् । तस्माच्छिष्टाः
प्रजा जायन्ते । मनासीति । मनसा हि वाग्धृता[1] ।] धीरसीति । ध्यायते हि
वाचेत्थं चेत्थं च । दक्षिणासीति । दक्षिणा ह्येषा । यज्ञियासीति । यज्ञिया
ह्येषा । क्षत्रिया[3]सीति । क्षत्रिया[3] ह्येषा । अथो यो ह्येषा जुषते स क्षत्रियो[3] भवति ।
अदितिरस्युभयतःशीर्ष्णीति । अदितिर्ह्येषोभयतःशीर्ष्णी । उभयतो ह्येषा 10
यज्ञं परिभूः । आदित्यं प्रायणीयं भवत्यादित्यमुदयनीयम् । सा मा सुप्राची
सुप्रतीची भवेति सुप्राचीमेवैनां सुप्रतीचीं कुरुते । मित्रस्त्वा पदि बध्नात्विति ।
यत्पदि बद्धा स्यात्पितृदेवत्या स्यात् । वाग्वै सोमक्रयणी । वरुण्यः पाशः ।
वाग्वरुणगृहीता न वदेत् । यत्कर्णगृहीता स्यात्पितृदेवत्या स्याद्वार्त्रघ्नी
स्यात् । यदनालब्धायता । मित्रस्त्वा पदि बध्नात्विति । ब्रह्म वै मित्रः । 15
ब्रह्मणैवैनां[4] पदि बध्नाति । पूषाध्वनस्पात्विति । इयं वै पूषा । अस्या एवैनां
परिददाति । इन्द्रायाध्यक्षायेति । इन्द्रो वै देवानामोजिष्ठः । तमेवास्या
अध्यक्षं करोति । अनु त्वा माता मन्यतामनु पितेति । पिता च ह्येतस्या
माता चानुमन्तारौ । सा देवि देवमच्छेहीति । इन्द्राय सोममिति । देवी
ह्येषा देवमच्छैति । इन्द्राय सोमम् ॥ रुद्रस्त्वावर्तयत्विति । रुद्रो वै देवानां 20
क्षोदिष्ठः[5] । तमेवास्याः [6]पुरस्तात्करोत्यपरानिशाय । स्वस्ति सोमसखा पुनरेहीति
पुनरेवास्या आवृत्तायै स्वस्ति करोति ॥ ४ ॥ Cf. I, 17; KS. XXIV, 3; II, 5; MS. III, 7, 5. 6; I, 2, 4; TS. VI, 1, 7; I, 2, 4.

1-1. The passage is missing in our ms. The omission is due to the wandering of the copyist's eye from one मनसा हि वाग्धृता to another.

2. KS. सवितृत is to be corrected.

3. The ms. क्षत्री°.

4. Thus emended. The ms. and KS. °वैनं.

5. KS. क्षेपिष्ठः.

6. The ms. पु°.

दक्षिणेन पदा दक्षिणानि पदान्यनुनिष्क्रामति । तस्माद्दक्षिणार्ध
आत्मनो वीर्यावत्तरः । षट् पदान्यनुनिष्क्रामति । षड्तवः । ऋतुष्वेव प्रति-
तिष्ठति । षट् पृष्ठानि[1] । तान्येवावरुन्द्धे । सप्तमं पदमभिगृह्णीते[2] । सप्त
ग्राम्याः पशवः । तानेवावरुन्द्ध । सप्तधेयं वाग्वदति । तामेवाप्नोति । व-
5 स्व्यसि रुद्रासीति । देवनामानि वा एषैतानि प्रपद्यते । इयमसीयम-
सीत्येवैतदाह । यद्यद्भवत्यथो वाच एवै[3]तत्सम्यगुद्यते । बृहस्पतिस्त्वा सुम्ने
रम्णातु ॥ रुद्रो वसुभिराचक इति । ब्रह्म वै बृहस्पतिः । रुद्रो देवानामोजिष्ठः ।
यावेव देवानामोजिष्ठौ ताभ्यामेनामन्ततो नह्यति[4] । पृथिव्यास्त्वा मूर्धन्नाजिघ-
र्मीति । एष हि पृथिव्या मूर्धा यद्देवयजनम् । इडायास्पदे घृतवति स्वाहेति । इडा[5]
10 वा एषा । तस्या एतद्घृतवत्पदम् । स्वाहाकारेणैवैनां यच्छति । इद-
महं रक्षसो ग्रीवा अपिकृन्तामीति । भ्रातृव्यो वै रक्षः । भ्रातृव्यस्यैव
ग्रीवा अपिकृन्तति । स्[6]थाल्यां पदं संवपति । आदित्या वै पशवः
पृथिव्यदितिः । पृथिव्या स्थाली संभृता । स्व एवैनान्योनौ दधाति ।
अस्मे रमस्वास्मे ते राय इति । यत्त्वे राय इति ब्रूयादितरस्मै पशून्सं-
15 प्रयच्छेदध्वर्युरपशुः स्यात् । मे राय इत्यात्मन्नेव पशून्यच्छते ॥

व्यृद्धा वा एषाहुतिर्यामनग्नौ जुहोति । यद्धिरण्यमुपास्य जुहोत्यग्नि-
मत्येव जुहोति समृद्ध्यै । अनग्नौ वा एतामाहुतिं जुहोति । तामीश्व-
राणि रक्षांस्यनूदग्य हन्तोः । यत्परिजुहोति[7] शान्त्या एव रक्षसा-
मपहत्यै । [8]यावद्घृतं विधावेत्तावदभिपरिलिखेत् । पशवो वै घृतम् ।
20 पशूनेवावरुन्द्धे[8] । अयोनीन्वा एतत्प[9]शूञ्शुचां[10]र्पयति यदेषां पदं परिखा-
याहरति । यदपो निनयति पशूनेव शुचो मुञ्चति । सोमक्रयण्या

1. The ms. पृष्ठ्यानि.
2. KS. गृह्णाति.
3. Thus KS. The ms. यो वाचैवै॰ for यद्यद्भवत्यथो वाच एवै॰.
4. KS, यच्छति.
5. The ms. इडाया.
6. Before स्थाल्यां the ms. inserts यद्भवत्य. Cf. note 3.
7. KS. यदपो निनयति.
8-8. The three sentences are put in KS. before स्थाल्यां पदं संवपति p. 93, l. 10.
9. The ms. एतान्.
10. The ms. ॰चो॰.

पत्नीं संख्यापयति[1] । पत्न्या एवैष यज्ञस्यान्वारम्भः । अथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय । त्वष्टृमन्तस्त्वा[2] सपेमेति । अतो हीमाः प्रजाः प्रजायन्ते । प्रजननाय ॥ ५ ॥ Cf. I, 18; KS. XXIV, 4; II, 5; MS III, 7, 6-7; I, 2, 4; TS. VI, 1, 8; I, 2, 5.

हस्ते हिरण्यं कृत्वा मिमीते । सत्यं वै हिरण्यम् । सत्येनैवैनं मिमीते । अमृतं वै हिरण्यम् । अमृतेनैवैनं मिमीते । आस्माको ऽसी- 5
ति स्वमेवैनं कुरुते । शुक्रस्ते ग्रह इति शुक्रमेवास्य गृह्णाति । अभि त्यं देवं सवितारमिति सवितृप्रसूत एवैनं देवताभिर्मिमीते । अतिच्छन्दसा मिमीते । वर्ष्म वा एषा छन्दसां यदतिच्छन्दाः । वर्ष्मैवैनौ[3] गमयति यज्ञं च यजमानं च । एकैकया मिमीते । आसामेव वीर्याण्याप्नोति । तस्मादिमाः कामं न्यचामः कामं प्रसारयामः । यत्सर्वा- 10
भिः सह मिमीते हस्तमासां वीर्यमभिसमियात् । अङ्गुष्ठेन परिमिमीते । तस्मादेष एतासां वीर्याणि प्रत्युदेव सृजेन्न न्यचेत् । यन्न्यचेत्पाशं कुर्यात् । वरुण्यः पाशः । वरुण एनं ग्राहुको भवति । यदुत्सृजति वरुणपाशादेवात्मानं परिवृणक्ति । द्विर्मिमीते । द्वे हि शुक्रिये[5] सवने । दश कृत्वो मिमीते । दशाक्षरा विराट् । अन्नं विराट् । विराज्ये- 15
वान्नाद्ये प्रतितिष्ठति । यत्परिमितं मिमीत परिमितं जीवनं स्यात् । अपरिमितं मिमीते । तस्मादिदमपरिमितं जीवनम् । यत्परिमितं मिमीत यजमानायैव स्यात् । अपरिमितं मिमीते । तेन सदस्येभ्यो ऽपि क्रीयते[6] । प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्त्विति । प्रजा वा अंशवः । प्रजास्वेव प्राणं दधाति । चतुर्गृहीतमाज्यं भवति । चतुष्पादाः[7] पशवः । पशूनेवास्मै 20
गृह्णाति । एतद्रूपा वै पशवः । यद्घृतं सरूपानेव पशूनवरुन्द्धे ॥

इयं ते शुक्र तनूरिदं वर्च इति हिरण्यं घृते ऽवदधाति । एषा वा अग्नेः प्रिया तनूर्यद्घृतम् । तेजो हिरण्यम् । प्रियामेवास्य तन्वं

1. The ms. संज्ञापयत्विति.
2. The ms. त्वष्ट्रि०.
3. The ms. वर्ष्म स्व एवैनां.
4. The ms. यः.
5. The ms. शुक्रयि.
6. 'bought for the sadasyas also'. KS. क्रियते for क्रीयते.
7. KS. ०पादः.

तेजसा समनक्ति[1] । रेतो वै हिरण्यं पशवो घृतम् । यद्धिरण्यं घृते ऽवदधाति पशुष्वेव रेतो दधाति । तस्मादनस्थकाद्रेतसो ऽस्थन्वन्तो गर्भाः प्रजायन्ते । बद्ध्वावदधाति गर्भाणां धृत्या अप्रपादाय । निष्टर्क्यं बध्नाति । तस्माद्योनेर्गर्भा मुच्यन्ते । यद-
5 निष्टर्क्यं बध्नीयान्न योनेर्गर्भा मुच्येरन् । यजुषावदधाति यजुषोद्धरति यजुषैव युनक्ति यजुषा विमुञ्चति । तस्मात्पराचीः प्रजा रेतो दधते ऽर्वाचीः प्रजायन्ते ॥ ६ ॥ Cf. I, 19. 17; KS. XXIV, 5; II, 6. 5; TS. VI, 1, 9; I, 2, 6.

न पूर्वस्मिन्पदमुपवपेत् । देवानां वा एष प्रदग्धाहुतीनाम् । रुद्रो ऽग्निः पशवः पदम् । रुद्राय पशूनपिदध्यादपशुः स्यात् । गार्हपत्य उपवपति ।
10 गार्हपत्यं वै पशवो ऽनूपतिष्ठन्ते । एष पशूनां योनिः । स्व एवैनान्योनौ[2] दधाति । यत्र शान्तमिवानङ्गारि[3] स्यात्तदुपवपेच्छान्त्या अनिर्मार्गार्यै । सोमं ते क्रीणामीति सोमस्यैवैतद्राज्ञो वीर्याणि महिमानं व्याचष्टे । न कलाशः पणते । यत्कलाशः पणते सोमस्य राज्ञो वीर्यमवतिरति यजमानस्यावर्तिं व्याचष्टे चोधुको भवति । इयमिति ब्रूयात्तस्या आत्मा तस्या
15 रूपं तस्याः प्रजा तस्याः पय इति[5] । न सोमस्य राज्ञो वीर्यमवतिरति न यजमानस्यावर्तिं व्याचष्टे ऽचोधुको भवति ॥

शुक्रं ते शुक्रेण चन्द्रं चन्द्रेणामृतममृतेन क्रीणामीति शुक्रमेवास्य शुक्रेण क्रीणाति चन्द्रं चन्द्रेणामृतममृतेन क्रीणाति । शक्म यत्ते गोरस्मे ते चन्द्राणीत्यात्मन्नेवास्य वीर्यं धत्ते। तेन निर्वीर्येण भूतेन विक्रीणीते । तपसस्तनूर-
20 सीति । तपसो ह्येषा तनूः । प्रजापतेर्वर्ण इति । अग्निर्वै प्रजापतेरग्निजा अजा[6] । सहस्रपोषं पुष्यन्तीति । एषा हि पशूनी सहस्रपोषं पुष्यति । अतो ह्येषा[7] त्रीञ्जनयत्यथो द्वौ । परमेण पशुना क्रीयस इति । परमो ह्येषा पशूनाम् ।

1. KS. समर्धयति.
2. The ms. स्वादेवैनां योनेः.
3. The ms. adds इव.
4. Thus the ms. KS. अनुद्दाहाय.
5. The ms. पया for पय इति
6. Kāṭh. ms. also had अजा, which was wrongly emended by Schroeder to अजास्. Cf. ĀpŚr. X, 25, 12.
7. KS. ह्येष to be corrected.

अस्मे ते बन्धुरित्यात्मन्नेवास्या वीर्यं धत्ते । तया निर्वीर्यया भूतया विक्रीणीते ॥

छन्दांसि वा अमुष्माल्लोकात्सोममाहरन् । तत्तमो ऽन्तराधीयत । सा गायत्र्यजया ज्योतिषोदपतत् । सास्यै प्रारोचयत् । एतर्हि वा एष एतस्मा आह्रियते[1] यर्हि क्रीयते । तम इदमन्तरा । यदजया क्रीणाति प्रैवास्मै रोचयति । मित्रो न एहि सुमित्रधा इति । वरुणो वा एष भूत्वा यजमानमभ्यैति । मित्रमेवैनं कुरुते । अपोर्णुते । यथा श्रेयांसमायन्तं पापीयान्प्रत्यपोर्णुत एवमेव तत् । इन्द्रस्योरुमाविश दक्षिणमिति । इन्द्रो वा एतमग्र ऊरावाधत्त । ऐन्द्रो यजमानः । स्व एवैनं योनौ दधाति । स्वान भ्राजेति[2] सोमक्रयणाननुदिशति । एते वा एतं देवा[3] अगोपायन्नमुष्मिंल्लोके । तं गायत्र्याहरत् । नेष्टापोत्रोः प्रति गोपीथम् । तस्मादेते होत्रे व्यृद्धे व्यृद्धसोमपीथे । तस्मान्न नेष्ट्रा न पोत्रा भवितव्यम् । तस्मादेतौ संसचन्ताविर्वे[4] यजतः । तमेते ऽन्वायन् । एते वा एतस्य गन्धर्वाः पुष्टिं हरन्ति । तस्मात्सोमविक्रयी न पुष्यति । यदि कृच्छ्रायेतापैव हरेत । एतेभ्यो[5] ह्येष गन्धर्वेभ्यो ऽधि क्रीयते । उदायुषेति यथायजुः । उर्वन्तरिक्षं वीहीति । अन्तरिक्षदेवत्यो ह्येष एतर्हि । अपि पन्थामगन्महीति । रक्षांसि वा एतमेतर्हि सचन्ते प्रच्युतमितो ऽप्राप्तमदः । रक्षांस्येव वृञ्जान[6] एति । अनसाच्छं[7] यन्ति । महिमानमेवास्याच्छ यन्ति । [अनसा वहन्ति । ] तस्मादनोवाह्यमोषधयः पच्यन्ते । यच्छीर्ष्णा हरेयुः शीर्षहार्यमोषधयः पच्येरन् । अदित्यास्त्वगस्यदित्याः सदने सीदेति । आदित्यो वै सोमः पृथिव्यदितिः । पृथिव्या अनः संभृतम् । स्व एवैनं योनौ दधाति । वारुणो वै सोमः । तं देवतया व्यर्धयति यन्मैत्रं[8] करोति । यद्वारुण्या

1. The ms. आह्री॰.
2. The ms. स्वाभ्रान भ्राडिति. See the mantra section.
3. KS. एतद्गन्धर्वा.
4. Thus KS. The ms. संसजातावेव.
5. KS. कृच्छ्रायेतोपैव हरेत्तेभ्यो. The ms. कृष्ट्यैतौपेव हरतैतैभ्यो. See Prof. Caland's note on ĀpŚr. Translation X, 26, 16.
6. The ms. मृंजान.
7. MS. p. 86, l. 15 मनसाच्छ must have originally been अनसाच्छ. वरुणदेवत्यमनसाच्छ can easily be corrupted to वरुणदेवत्यं मनसाच्छ.
8. KS. यन्मित्रं to be corrected. Cf. TS. VI, 1, 11, 2.

सादयति स्वयैवैनं देवतया समर्धयति । वनेषु व्यन्तरिक्षं ततानेति वाससा पर्याणह्यति । सर्वदेवत्यं वै वासः । सर्वाभिरेवैनं देवताभिः समर्धयति । सूर्यस्य चक्षुरारुहमिति कृष्णाजिनं पुरस्तात्प्रत्यानह्यति[1] । रक्षांसि वा एतमेतर्हि जिघांसन्ति स्वर्गं लोकमारोहन्तम्[2] । असावादित्यो ऽपरिपरः पन्थाः । तमेवैनमभ्यारोहयति स्वर्गस्य लोकस्य समष्ट्यै ॥ ७ ॥ Cf. I, 19; KS. XXIV, 6; II, 6; MS. III, 7, 7. 8; I, 2, 6; TS. VI, 1, 10. 11; I, 2, 7. 8.

प्रच्यवस्व भुवनस्पत इति । भूतानां ह्येष पतिः । विश्वान्यभि धामानीति । देवता वै विश्वा धामानि । देवता एवैनमुप[3] प्रच्यावयति । श्येनो भूत्वा परापतेति । श्येनो वै वयसां क्षेपिष्ठः । श्येनमेवैनं कृत्वा रक्षांस्यपि[4]सृजति । यजमानस्य नो गृहे संस्कृतमिति यजमानायतनमेवैनं करोति । अथो यजमानस्यैव गृहे देवताभिः संस्कृतं कुरुते । नमो मित्रस्य वरुणस्य चक्षस इति । वरुणो वा एष भूत्वा यजमानमभ्येति । मित्रमेवैनं कुरुते । आसन्दीमुद्गृह्णन्ति । यथा मनुष्यराजायावस्थितायासन्दीमुद्गृह्णन्त्येवमेवैतत् । अग्निना प्रतितिष्ठते । अग्निः सर्वा देवताः । देवताभिरेवैनं प्रतितिष्ठते । अग्नीषोमौ वा एतर्हि यजमानमभि संधत्तः । यत्पशुना प्रतितिष्ठते तमेवाभ्यामपिदधाति । अग्नीषोमाभ्यां वा एष आत्मानं मेधायालभते यो दीक्षते । यत्पशुमालभत आत्मानमेव तेन निष्क्रीणाति । यस्तूपरः श्मश्रुणो द्विदेवत्यस्य[5] रूपं लोमशः पीवा पुरुषरूपस्तमालभेत । तस्य यो ऽश्नाति पुरुषमत्ति । तस्मात्तस्य नाशितव्यम् । [क्षुध्यति वै दीक्षितः । क्षुध एष निष्क्रयण आलभ्यते । तस्य यो ऽश्नाति क्षोधुको भवति । तस्मात्तस्य ना]शि[तव्य]म् । अग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहन् । स एष[6] वार्त्रघ्नः पशुर्विजित्या आलभ्यते । तस्मादस्याशितव्यम् । देवता वा एनं पूर्वेद्युरालभ्यमानं नाभिप्राच्यवन्त परस्माद्यज्ञक्रतोर्निररिष्याम[7] इति । तमग्नीषोमावेवाभिप्राच्यवेतां पराचीरितरा यज्ञमभ्यत्यसृजन्त । तस्मादेषो ऽग्नीषोमीय आलभ्यते ।

1. KS. ॰न्ति.
2. KS. लोकमभ्या॰.
3. KS. ॰मभि.
4. KS. ॰ति॰.
5. Thus KS. The ms. श्मश्रुणोति द्वितदेवता तद्.
6. Thus KS. The ms. य एव्यविर्.
7. The ms. निरिरिष्यव.

तस्माद्ग्नीषोमाभ्यां ग्रहो न गृह्यते[1]। तौ देवान्पुनरुपावर्तमानौ तयोर्यत्प्रियं धामासीत्तदपन्यदधाताम् । तद्देवा अन्वेष्टुमध्रियन्त । ते प्रवाहुगिच्छन्त आयन्। ते नवं वा इदं सृप्तमित्यभ्यवायन् । यन्नवामित्यब्रुवंस्तन्नवनीतस्य नवनीतत्वम् । यत्सृप्तमिति तत्सर्पिषः सर्पिष्ट्वम्[2]। यदजो ऽविन्दत्तदाज्यस्याज्यत्वम् । स घृङ्ङकरोत् । तद्घृतस्य घृतत्वम् । तस्मादजो घृङ्ङरिङ्कच्चरति । तत्पशूनन्वाकुर्वन् । तत्पशवः समभरन् । तेनानेन पशुभ्यो ऽधिजायन्ते[3] । तावब्रूतां[4] वार्यं वृणावहा अयमेव नौ भागधेयमस्तु यो नौ प्रियं धामाविदे[5]दिति । तस्मादेषो ऽग्नीषोमीय आलभ्यते। तस्मादस्याशितव्यम् । वार्यवृतो हि ॥ ८ ॥ Cf. II, 1; KS. XXIV, 7; II, 7; MS. III, 7, 8; I, 2, 6; TS. VI, 1, 11; I, 2, 9.

इति कपिष्ठलकठसंहितायां सप्तत्रिंशत्तमो ऽध्यायः ॥

---

1. The ms. ग्रहे न गृह्यंतो.
2. The ms. सर्पिस्त्वं.
3. The ms. यंजते.
4. KS. अब्रुवतां.
5. KS. ॰विन्द॰.

विमुक्तो ऽन्यो ऽनड्वान्भवत्यविमुक्तो ऽन्यः । अथातिथ्यं निरुप्यते यज्ञस्य संतत्या अविच्छेदाय । यदुभौ विमुक्तौ स्यातां पितृदेवत्यं हविः स्याद्विच्छिन्नो यज्ञो ऽसंततो ऽनवरुद्धः[1] । यदुभावविमुक्तौ वार्त्रघ्नं हविः स्यात्संततो यज्ञो ऽविच्छिन्नो ऽवरुद्धः[2] । यद्विमुक्तो ऽन्यो भवत्यविमुक्तो
5 ऽन्यो वार्त्रघ्नं हविर्भवत्यपितृदेवत्यं संततो यज्ञो ऽविच्छिन्नो ऽवरुद्धः[3] । पत्नीमन्वारम्भयित्वा निर्वपति । पत्नी वै पारीणह्यस्येशे । अनुमतमेव प्रसूतं देवेभ्यो हविर्निर्वपति । पत्न्या एवैष यज्ञस्यान्वारम्भः । अथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय ॥

यावन्तो वै पुण्यमन्वायन्ति सर्वेभ्यस्तेभ्य आतिथ्यं क्रियते । छन्दांसि
10 ह सोमं राजानं क्रीतमन्वायन्ति । अग्नेस्तनूरसि विष्णवे त्वेति गायत्र्यै-तन्निर्वपति । सोमस्य तनूरसि विष्णवे त्वेति त्रिष्टुभैतन्निर्वपति । अति-[थेरातिथ्यमसि विष्णवे त्वेति जगत्यैतन्निर्वपति । अग्नये त्वा रायस्पोषदे विष्णवे त्वेत्यनुष्टुभैतन्निर्वपति । ] श्येनाय त्वा सोमभृते विष्णवे त्वेति गायत्र्यैतन्निर्वपति । गायत्री वा एतमाहरदमुष्माल्लोकात् । तस्मात्सा
15 पुनर्याम्णी । तस्मात्पुनः प्रयुज्यते । पञ्च कृत्वो निर्वपति । पाङ्क्तो यज्ञः । यज्ञमेवावरुन्द्धे । यच्छन्दोभिर्निर्वपति च्छन्दांस्येव भागधेयवन्ति करोति । विष्णवे त्वा विष्णवे त्वेति । विष्णुर्ह्येतर्हि यज्ञो यर्ह्यनिरुक्तः । तस्माद्वैष्णवः पुरोडाशो भवति । त्रिकपालः कार्यः[4] । स हि वैष्णवः । यन्नवकपालस्तेनैव त्रिकपालः । त्रयो हि ते त्रिकपालाः । नवकपालो

1. Thus KS. The ms. वरुधो.
2. The ms. तरुद्धो.
3. Thus KS. The ms. नवरुद्धः.
4. The ms. कार्या३.

भवति । नव प्राणाः । प्राणैरेव यज्ञमुखे प्रैति । अथो तेज एव त्रिवृतं यज्ञमुखे ऽधिवियातयति । यत्त्रिकपालस्तेन वैष्णवो यत्षट् तेन च्छन्दसाम् । तेनोभयस्मान्नैति ॥

पशुरालभ्यः सोमाय राज्ञे[1] । मनुष्यराजायेन्न्वै[2] पशुरालभ्यते[3] । यदग्निं मन्थन्ति । आग्नेया वै पशवः । तदेवास्मै पशुरालभ्यते । अग्निः सर्वा देवताः । सर्वा एव देवताः सोमाय च च्छन्दोभ्यश्चागतेभ्यो जनयति । आश्ववालः प्रस्तरो भवत्यैत्तवावुद्यावौ । अश्व इव वै[4] प्रजापतिरासीत् । तस्येमे वाला आसन्यदश्ववाला एतौ बाहू यावुद्यावौ । तं देवा अन्वारभ्य स्वर्गं लोकमायन् । यदाश्ववालः प्रस्तरो भवत्यैत्तवावुद्यावौ प्रजापतिमेवान्वारभते । स्वर्गस्य लोकस्य समष्ट्यै । प्रजापतेर्वा एतानि पक्ष्माणि यदाश्ववालाः । यदाश्ववालः प्रस्तरो भवति प्रजापतेरेवाधि यज्ञमुखं प्रतनुते ॥

रक्षांसि वै देवानां यज्ञमजिघांसन् । तानि कार्ष्मर्येणापाघ्नत । यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै । यद्यद्वै देवा एतेनाकुर्वत तेनार्ध्नुवन् । तदस्य कर्मण्यत्वम् । कर्मण्यो वै नामैषः । यज्ञमुख एवैतेनर्ध्नोति । सप्तदश सामिधेनीर्भवन्ति । सप्तदशो वै संवत्सरः । पञ्चर्तवो द्वादश मासाः । एष वाव स संवत्सरः । संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥

शिरो वा एतद्यज्ञस्य यदातिथ्यं ग्रीवा उपसदः । यत्संस्थापये-[न्मुखतो यज्ञं[6] संस्थापये]त् । शिरो ग्रीवाभ्यो यज्ञस्यावच्छिन्द्यात् । इडान्तं भवति । शिर एव ग्रीवासु यज्ञस्य प्रतिदधाति । नवकपालो भवति । तस्मान्नवधा पुरुषस्य शिरो विष्यूतम् । उपसदो वा एतस्यानुयाजास्तानूनप्त्रमाशीः । तस्मादननुयाजं भवति ॥ १ ॥ Cf. II, 2; KS. XXIV, 8; II, 8; MS. III, 7, 9; I, 2, 6; TS. VI, 2, 1; I, 2, 10.

1. KS. adds इत्याहुः.
2. The ms. °राजायैवै.
3. KS. adds इति.
4. The ms. तामेवा°.
5. The ms. adds तत्.
6. KS. यज्ञे to be corrected.

देवा वा अन्योऽन्यश्रैष्ठ्याय नातिष्ठन्त । ते चतुर्धा व्युदक्रामन्न-ग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः । ते देवाः पापीयांसो ऽभवन्वसीयांसो ऽसुराः । ते ऽविदुः पापीयांसो वै स्मे भवन्ति वसीयांसो ऽसुरा इति । ते प्रियास्तन्वः समवाद्यन्त । ते ऽब्रुवन्नेषां नस्तन्न[1]
5 पारयाद्यो नो ऽन्योऽन्यस्मै द्रुह्यादिति । तस्मात्सतनूनप्त्रिणे न द्रोग्धवै । यद्द्रुह्यति प्रियायै तन्वै द्रुह्यति । यत्तन्वः समवाद्यन्त तत्तानूनप्त्रस्य तानूनप्त्रत्वम् । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वांस्तानूनप्त्रमुपैति भवत्यात्मना परास्य भ्रातृव्यो भवति । असौ वा आदित्य इन्द्रः । तस्य ते श्रैष्ठ्यायातिष्ठन्त । तिष्ठन्ते ऽस्य समानाः श्रैष्ठ्याय य
10 एवं वेद । एतस्मिन्वै ते तास्तन्वः संन्यदधत । तस्माद्धि तेभ्यस्तेजिष्ठं[2] भवति । तस्मात्सूर्यदेवत्याः सोमा भूयिष्ठा हूयन्ते । आज्येन वै वज्रेण देवा वृत्रमघ्नन् । स्रुग्भ्यां बाहुभ्याम् । सोमो वृत्रः । घ्नन्ति वा एतत्सोमं यदस्याज्येनान्तिकं जुह्वति । अंशुरंशुस्ते देव सोमाप्यायतामिति यदेवास्य घ्नन्ति यन्नितमयन्ति तदाप्याययन्ति । यन्ति वा एते ऽस्माल्लो-
15 काद्ये सोममाप्याययन्ति । एष्टा रायः ॥ प्रेषे भगायेत्यस्मिन्नेव लोके प्रतितिष्ठन्ति । पितरं च वा एष[3] मातरं च हिनस्ति यो गर्भं हन्ति । अनयोर्गर्भः सोमो राजा । नमो दिवे नमः पृथिव्या इत्याभ्यामेव निह्नुते । किं दीक्षया स्पृणोतीत्याहुः किमवान्तरदीक्षयेति । आत्मानमेव दीक्षया स्पृणोति प्रजामवान्तरदीक्षया । संतरां मेखलामायच्छते । कनीयो व्रत-
20 मुपैति । तस्मादात्मनः प्रजाहीयसी । यत्परः सत्यां विसृजते तस्मात्परोवरीयः प्रजया पुत्रेण पौत्रेण प्रथते । अग्निर्वै दीक्षितः । शमयन्त्यग्निमापः । मदन्तीनां मार्जयते । मदन्तीनां व्रतयत्यशान्त्यै । शान्तिर्ह्यापः । अथो तेज एवात्मन्भूयः समाधत्ते । न वा एतेन हुतं व्रतयितव्यं नाहुतं यो दीक्षितः । अग्निर्वै रुद्रः । अग्निनैष तन्वं विपरि-

1. The ms. नस्तन्वः.
2. The ms. तस्मा हि देभ्य तेजिष्ठं.
3. एष is to be supplied in KS., otherwise वा, which stands for वै, would be rendered superfluous.

धत्ते तानूनप्त्रे । या ते अग्ने रुद्रिया तनूरिति व्रतयति । स्वायामेव देवतायी हुतिं व्रतयति । तेनास्य न हुतं भवति नाहुतम् ॥ २ ॥ Cf. II, 2; KS. XXIV, 9; II, 8; MS. III, 7, 10. 8, 2; I, 2, 7; TS. VI, 2, 2; I, 2, 11.

[1]देवाश्च वा असुराश्च संयत्ता आसन् । तेषामसुराणामिमाः पुर आसन्नयस्मयीयं रजतान्तरिक्षं हरिणी द्यौः[1] । ते देवाः संघातंसंघातं पराजयन्त । ते ऽविदुरनायतना हि वै स्मस्तस्मात्पराजयामह इति । त 5 एताः पुरः प्रत्यकुर्वत[2] हविर्धानं दिव आग्नीध्रमन्तरिक्षात्सदः पृथिव्याः । ते ऽब्रुवन्नुपसदमुपायामोपसदा वै महापुरं जयन्तीति । त उपसदमुपायन् । तानुपसद्भिरेवैभ्यो लोकेभ्यो निरघ्नन् । तस्मादाहुरुपसदा वै महापुरं जयन्तीति । [ त एभ्यो लोकेभ्यो निर्हता ऋतून्प्राविशन् । ] ते षडुपायन्[3] । तानुपसद्भिरेवर्तुभ्यो निरघ्नन्द्वाभ्याममुष्माल्लोकाद्द्वाभ्याम- 10 न्तरिक्षाद्द्वाभ्यां पृथिव्याः । त ऋतुभ्यो निर्हताः संवत्सरं प्राविशन् । ते द्वादशोपायन् । तानुपसद्भिरेव संवत्सरान्निरघ्नंश्चतसृभिरमुष्माल्लोकाच्चतसृभिरन्तरिक्षाच्चतसृभिः पृथिव्याः । ते संवत्सरान्निर्हता अहोरात्रे प्राविशन् । ते यत्सायमुपायंस्तेनैनात्रात्र्या अनुदन्त यत्प्रातस्तेनाह्नः । तस्माद्द्यौः सायं प्रातस्तनमाप्यायते प्रातः सायन्तनम् । तानुपसद्भि- 15 रेवैभ्यो लोकेभ्यो नुदमाना आयन् । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वानुपसदमुपैति भवत्यात्मना परास्य भ्रातृव्यो भवति ॥

न द्वादशाग्निष्टोमस्य कुर्यात् । अशान्ता निर्मृज्युः । न तिस्रो ऽहीनस्य । उपरिष्टाद्यज्ञक्रतुर्गरीयानभिषीदेद्ग्रीवा निःशृणीयादार्तिमार्छेत् । द्वादशाहीनस्य कुर्याच्छान्त्या अनिर्मार्गाय । तिस्रो ऽग्निष्टोमस्य 20 प्रत्युत्तब्ध्यै सयत्वाय । देवा वा असुर्यानिमांल्लोकान्नान्ववैतुमधृष्णुवन् । तानग्निना [ मुखेनान्ववायन् । यदग्निमन्त्युपसदां प्रतीकानि भवन्ति यथा

1-1. The ms. देवाश्च वा आसुराश्च समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकुर्वत तदसुरा अकुर्वत.

2. The ms. ते देवाः समस्कुर्वत.

3. The ms. स ज्ञुपसदनुपायुंस्.

क्षेत्रपतिः क्षेत्रे ऽन्ववनयत्येवमेवैतत् । अग्निना ] मुखेनेमांल्लोकान-
भिजयन्तो यन्ति । यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मै । इमे वाव
लोका देवाः साध्याः । सिद्धं ह्यस्यै सिद्धमस्मै सिद्धममुष्मै । य एवं वेद
सिध्यत्यस्मै ॥ ३ ॥ Cf. KS. XXIV, 10; MS. III, 8. 1. 2; TS. VI, 2, 3.

5 इषुं वा एतां[1] देवाः समस्कुर्वन्यदुपसदोऽग्निं शृङ्गं सोमं शल्यं विष्णुं
तेजनम् । तेऽब्रुवन्यो न ओजिष्ठः स इमां विसृजत्विति । ते रुद्रमब्रुवंस्त्वं
वै न ओजिष्ठोऽसि त्वमिमां विसृजेति । सोऽब्रवीद्वार्यं वृणा अहमेव
पशूनामीशां[2] इति । तेऽमन्यन्त यदयं पशूनामीशिष्यते सर्वान्निर्धक्ष्यतीति ।
तेऽब्रुवन्सप्ताहानीशासै न पराचीनामिति । तस्मात्सप्ताहानि रुद्रः पशूना-
10 मीशे । रक्षांसि पराचीनं घ्नन्ति । तां व्यसृजत् । तया पुरः सम-
रुजत् । यत्समरुजत्तद्रुद्रस्य रुद्रत्वम् । विसृष्टिमेव भ्रातृव्याय विसृजति
य एवं विद्वानुपसदमुपैति । न पुनरपक्रामेत् । यतरो वै संयत्तयोः पुन-
रपक्रामति परा स जयते । समेष एतर्हि यतते[3] य उपसदमुपैति ।
सकृदेव पराङतिक्रम्याश्रावयति यज्ञस्याभिजित्यै रक्षसामपहत्यै । न
15 प्रयाजा भवन्ति नानुयाजाः । पुरो वा एते यज्ञस्य यत्प्रयाजानुयाजाः ।
यत्प्रयाजानुयाजान्कुर्यात्पुरो यज्ञस्य कुर्याद्दुरतिव्यर्थं[4] स्यादतीक्ष्णामिषुं
कुर्यात् । चतुर्व्रतो भवति । चत्वारि हीष्वाः पर्वाणि । त्रिव्रतो भवति ।
त्रिषन्धिर्हीषुः[5] शृङ्गं शल्यस्तेजनम् । द्विव्रतो भवति । द्विषन्धिर्हीषुः[6] शल्यश्च
तेजनं च । एकव्रतो भवति । एका ह्येवेषुः । इषुमेवैतां संस्कृत्य तां श्वो
20 भ्रातृव्याय विसृजति । अथो व्रतमेवाप्नोति ॥

ग्रीवा वा एता यज्ञस्य यदुपसदः । न प्रयाजा भवन्ति नानुयाजाः ।
तस्माद्ग्रीवाः प्रति पुरुषस्याणिष्ठम्[7] । ताः सर्वीर्याः प्रयुज्यन्ते । तस्मा-

1. KS. ms. एतान्, which is emended by Schroeder to एता. Cf. MS. p. 92, ll. 10-11 ते देवा एतामिषुं समस्कुर्वन्.
2. The ms. °शा.
3. The ms. यजते.
4. The ms. दुरभिव्यर्ष्यं.
5. The ms. त्रिबन्धुर्हिषु.
6. The ms. द्विबन्धुर्हिषु.
7. The ms. तस्मात्पुरुषस्य निष्टं.

दृग्रीवा अणिष्ठाः सतीर्वीर्यावत्तमाः । तिस्र उपसदो भवन्ति । त्रय इमे लोकाः । तस्मात्पुरुषस्य त्रय स्कन्दाः । अतिषक्ताभिर्यजति । तस्माद्ग्रीवा अतिषक्ताः । अथो अयातयाम्नी । अयातयाम्न्यैव यजति । सच्छन्दसो याज्यानुवाक्याः कुर्यात् । यद्विच्छन्दसः स्युरपचितो[1] होतारं हन्युः । भिद्वतीः पुरां भित्त्यै[2] ॥ ४ ॥  Cf. KS. XXV, 1; MS. III, 8, 1.   5

देवाश्च वा असुराश्च यज्ञे संयत्ता आसन् । स यज्ञो ऽविभेद्यतरे ऽभिजेष्यन्ति ते मा विमथिष्यन्त इति । स न्यलयत । तं देवा अभिजित्यान्वैच्छन् । ते प्रबाहुगिच्छन्त आयन् । तमिन्द्र उपर्युपर्यत्यक्रामत् । सो ऽब्रवीत्को मायमुपर्युपर्यत्यक्रमीदिति । अहमेष कृच्छ्रे हन्तेति । अथ कस्त्वमिति । अहमेष कृच्छ्रादाहर्तेति । एमूषो[3]   10
नामायं वराह इत्यब्रवीदेकविंशत्याः पुरामश्ममयीनां पारे यत्किंचासुराणां वामं वसु तेन तिष्ठति तं जहि य एष कृच्छ्रे हन्तावोचथा इति ।[तमिन्द्रो दाल्भूष्याभिविसृज्य पराभिनत् । सो ऽब्रवीदेष हतः । तमाहर य एष कृच्छ्रादाहर्तावोचथा इति ।] तं विष्णुरपासङ्ग आहरत् । यज्ञो वै विष्णुः । यज्ञेनैवैषां तद्यज्ञमवृञ्जत पशुभिः पशू-   15
निन्द्रियेणेन्द्रियम् । ततो देवा अभवन्परासुरा अभवन् । यज्ञो वै विष्णुः । यज्ञेनैवैतद्यज्ञं भ्रातृव्यस्य वृङ्क्ते पशुभिः पशूनिन्द्रियेणेन्द्रियम् । भवत्यात्मना परास्य भ्रातृव्यो भवति । देवयजनमिच्छन्ति । यज्ञमेवेच्छन्ति । यद्विन्दन्ति यज्ञमेव विन्दन्ति ॥

यदुदीचीनं प्राचीनं प्रवणं स्यात्तस्मिन्यजेत यज्ञकामः । एवमिव   20
हि स यज्ञो ऽशयत् । यज्ञस्यानुवित्त्यै । यत्समं प्रतिष्ठितं तस्मिन्यजेत

1. KS. अपरिचितो is to be corrected. Cf. AitBr. I, 25, 13 यद्विच्छन्दसः कुर्याद्ग्रीवासु तद्गण्डं दध्यात्(See Pro. Caland's note in WZKM. vol. XXVI, p. 125). The Ātharvaṇa mantras relating to अपचित् are used in Kauś. for the healing of the gaṇḍamālās. See AV. VI, 25: Kaus. XXX, 14; AV. VI, 83: Kauś. XXXI, 16, etc.

2. Thus KS. The ms. भिध्यती पुरो त्रित्यै.

3. Thus KS. The ms. ०दाहंत्यमूषो for ०दाहर्तेति । एमूषो.

गतश्रीः । प्रतिष्ठा वा एतस्मा एष्टव्या यो गतश्रीः । एतद्भूम्याः प्रतिष्ठितं यत्समम् । प्रतिष्ठामेवास्मै विन्दति गच्छति प्रतिष्ठाम् । त्र्युन्नते यजेत भ्रातृव्यवान् । त्र्युन्नतेन वै विष्णुरिमांल्लोकानुदजयत् । स एभ्यो लोकेभ्यो ऽसुरान्प्राणुदत । इमानेव लोकानुज्जयत्येभ्यो लोकेभ्यो
5 भ्रातृव्यं प्रणुदते । यस्यैकधा मध्य उन्नतं स्यात्तस्मिन्यजेत स्वर्गकामः । अतो वै देवाः स्वर्गं लोकमायन् । स्वर्गस्य लोकस्य समष्ट्यै । यत्रौषधयो बह्वीरन्यान्या इव स्युस्तस्मिन्यजेत पशुकामः । ओषधयो वै पशवः । भूमानमेव पशूनामुपैति । यत्रौषधयः कृच्छ्रशः पर्यायशः परीयुस्तस्मिन्यजेत पशुकामः । अतो वै देवाः पशूनुदसृजन्त । पशू-
10 नेवोत्सृजते । यद्दृत्तमलोमकं तस्मिन्याजयेद्यं द्विष्यात् । व्यृद्धं वा एतदोषधिभिर्यद्दृत्तमलोमकम् । ओषधयः पशवः । पशुभिरेवैनं व्यर्धयति । यत्समया देवयजनं पन्था विधावेत्तस्मिन्याजयेद्यं कामयेत व्येनं प्रजया पशुभिश्छिन्द्यामिति । एतद्वै विच्छिन्नं नाम देवयजनम् । व्येनं प्रजया पशुभिश्छिनत्ति । यदन्तरापश्च देवयजनं च पन्था विधावेत्तस्मिन्या-
15 जयेद्यं कामयेत नैनमपरो यज्ञ उपनमेदिति । एतद्वै परिवर्त्म नाम देवयजनम् । पर्येणमपरो यज्ञो वृणक्ति । यत्रापः सर्वतः समवद्रवेयुस्तास्मिन्यजेतान्नकामः । दिग्भ्यो वा एतस्मा अन्नं हरन्ति यस्मै हरन्ति । आपो ऽन्नम् । सर्वाभ्य एव दिग्भ्यो ऽन्नाद्यमवरुन्द्धे । तदेतत्समापं नाम देवयजनम् । नीपतममिव[र्ति]समानानां भवति ॥ ५ ॥ Cf. KS. XXV, 2; MS. III, 8, 3. 4; TS. VI, 2, 4. 6.

20 यत्रापः प्राचीराहवनीयात्प्रतीचीर्गार्हपत्याद्व्यवद्रवेयुस्तस्मिन्याजयेद्यमुदके वा पात्रे वा विवाहे वा मीमांसेरन् । पाप्मना वा एषो ऽनुषक्तो यमुदके वा पात्रे वा विवाहे वा मीमांसन्ते । पाप्मनैवैनं व्यावर्तयति । यत्रापो दक्षिणा परिप्लूय पश्चात्प्राची रमेरंस्तस्मिन्यजेत बुभूषन् । आपो वै सर्वा देवताः । एतद्देवताभिर्जुष्टं देवयजनम् । यदेवं
25 देवताभिरेव जुष्टे देवयजने यजते भवत्येव । यत्रापो दक्षिणत उदीची

1. The ms. भि॰.

रश्मेरीस्तस्मिन्यजेत सजातकामः । आपो वै सर्वा देवताः । देवताः सजाताः । सजातानामेवैनं प्रार्धे[1] करोति । कृत्रिमे यजेत बुभूषन् । आत्मा वै देवयजनम् । करोत्येवैनम् । यत्राग्निं चापश्च पश्यन्प्रातरनुवाकमनुब्रूयात्तस्मिन्यजेत यः कामयेत यज्ञो मापर उपनमेदिति । अग्निः सर्वा देवता आपो यज्ञः । उपैनमपरो यज्ञो नमति । देवताश्च हि यज्ञं च पश्यन्यजते । यत्राग्निमपः सूर्यं पश्यन्प्रातरनुवाकमनुब्रूयात्तस्मिन्यजेत ब्रह्मवर्चसकामः । एतद्वै त्रिशुक्रियं नाम देवयजनम् । ब्रह्मवर्चसी भवति । यत्पुरस्तादार्षं स्याद्देवयजनं तास्मिन्यजेत भ्रातृव्यवान् । भ्रातृव्याय वा एष लोक उच्छिष्यते यत्पुरस्ताद्देवयजनस्योच्छिष्यते । एतावन्तमेवास्मै लोकमुच्छिंषति । अलोकमेनं करोति । यो ह वै विद्वान्देवयजनं यजत ऋध्नोति । अग्निर्वाव देवयजनम् । अग्नौ हि सर्वा देवता इज्यन्ते । यत्रैव क्वचाग्निमाधाय यजेत तेनैवर्ध्नोति । ब्राह्मणा वाव देवयजनम् । यत्र ब्राह्मणा बहवः संराधयेयुस्तस्मिन्यजेत । तेनैवर्ध्नोति ॥ ६ ॥ Cf. KS. XXV, 3; MS. III, 8, 4; TS. VI, 2, 6.

इति कपिष्ठलकठसंहितायामष्टात्रिंशत्तमो ऽध्यायः ॥

---

1. The ms. प्रार्धे.

वेदिं विमिमीते । त्रिंशता पश्चात्प्रक्रमैर्मिमीते षट्त्रिंशता प्राचीं चतुर्विंशत्या पुरस्तात् । विराजैवैनां[1] पश्चात्परिमिमीते बृहत्या प्राचीं गायत्र्या पुरस्तात् । छन्दोभिरेवैनां सर्वतः परिमिमीते । विराज्येव प्रतितिष्ठति यद्विराजमभिसंपादयति । स्फ्येन स्तम्बयजुर्हरति । इन्द्रो
5 वै वृत्राय वज्रं प्राहरत् । स त्रेधाभवत्स्फ्यस्तृतीयं यूपस्तृतीयं रथस्तृतीयम् । वज्रो वै स्फ्यः । एतावती पृथिवी यावती वेदिः । वज्रेणैव पृथिव्या भ्रातृव्यं निर्भजति । त्रिर्हरति । त्रय इमे लोकाः । एभ्य एवैनं लोकेभ्यो[2] निर्भजति । तूष्णीं चतुर्थं हरति । अपरिमितादेवैनं निर्भजति । इन्द्रो वै वृत्रं हत्वा तमनयाभिन्यदधात् । यत्तूष्णीं[3]
10 चतुर्थं हरत्यनयैव भ्रातृव्यमभिनिदधाति । मूलं छिनत्ति । भ्रातृव्यस्यैव मूलं छिनत्ति । उद्घ्नन्ति । तस्माच्छिशिर ओषधयः पराभवन्ति । बर्हि स्तृणाति । तस्माद्वसन्ते पुनराभवन्ति । अपाररुमदेवयजनं पृथिव्या देवयजनाज्जहीति । भ्रातृव्यो वा अररुः । भ्रातृव्यमेव पृथिव्या निर्भजति । द्रप्सस्ते द्यां मा स्कन्निति[4] । यो वा अस्या रसः स द्रप्सः ।
15 तमिमाः प्रजा उपजीवन्ति । तमेवास्यां यच्छति तस्यास्कन्दाय । अररुर्द्यां मा पप्तदिति । भ्रातृव्यो वा अररुः । भ्रातृव्यमेव स्वर्गाल्लोकात्प्रतिनुदते ॥

विषाद्वै[5] नामासुर आसीत् । स पृथिवीं विषेणावालिम्पत् । तस्या

1. The ms. adds सर्वतः.
2. The ms. adds भ्रातृव्यं.
3. KS. यं for यत्.
4. The ms. स्का॰. See the mantra section.
5. The ms. ॰वि॰.

न [कश्चनाश्नात् । य आ]श्नात्सो ऽरुप्यत् । यदुद्घ्नन्ति यदेवास्या अमेध्यं यदयज्ञियं तदपहन्ति । अपि मूलमनुखनेदाविद्धस्य निष्कृत्यै । अधो दूरं खनेत् । अधो वा अस्या वीर्यम् । वीर्यस्याभिक्लृप्त्यै[2] । तस्मात्सुकृष्टे व्रीहियवाः पच्यन्ते । तदाहुरुत्तरार्धे वा अस्या वीर्यम् । तादिमाः प्रजा उपजीवन्ति । तस्मान्नातिखेयेति । आ प्रतिष्ठायाः खनेद्य- 5
जमानस्य प्रतिष्ठित्यै । दक्षिणत उद्धनां कुर्यात् । देवयजनस्य रूपम् । रक्षसामपहत्यै । पुरीषवतीं कुर्यात् । पशवो वै पुरीषम् । पशूनेवावरुन्द्धे ॥ १ ॥ Cf. I, 9; KS. XXV, 4; 1, 9; TS. II, 6, 4.

स्फ्येन वेदिं परिगृह्णाति । वज्रो वै स्फ्यः । एतावती पृथिवी यावती वेदिः । वज्रेणैव पृथिव्या भ्रातृव्यं निर्भज्य च्छन्दोभिरात्मने 10
परिगृह्णाति । वसवस्त्वा परिगृह्णन्तु गायत्रेण च्छन्दसेति दक्षिणतः । तेजो वै ब्रह्म गायत्री । तेजसैवैनां[3] दक्षिणतः परिगृह्णाति । रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन च्छन्दसेति पश्चात् । ओजो वै वीर्यं त्रिष्टुप् । ओजसैवैनां पश्चात्परिगृह्णाति । आदित्यास्त्वा परिगृह्णन्तु जागतेन च्छन्दसेत्यु-
त्तरात् । जागता वै पशवः । उत्तरादायतनाः पशवः । पशुभ्य एवै- 15
तदायतनं करोति । पशूनां धृत्यै । अथो तेजसा चैवौजसा[4] चोभयतः पशून्परिगृह्णाति । पुरा क्रूरस्य विसृपो विरप्शिन्निति । यद्वा अस्यास्तेजो यज्ञियं तददश्चन्द्रमसि । तदेवावरुन्द्धे ॥

इध्माबर्हिषी प्रोक्षति । शुष्काणि वा एतान्यमेध्यान्यारण्यादा-
हृतानि । आपो मेध्या यज्ञियाः । यदद्भिः प्रोक्षति मेध्ये एवैने 20
यज्ञिये[1] करोति । वेदिं प्रोक्षति । मेध्यामेवैनां यज्ञियां करोति । अथो यदेवास्या उद्घ्नन्तः क्रूरं कुर्वन्ति तच्छमयति । बर्हिः स्तृणाति । प्रजा वै बर्हिः पृथिवी वेदिः । प्रजा एव पृथिव्यां प्रतिष्ठापयति । सर्वां वेदिमनुस्तृणाति । तस्मात्पृथिवी[5] सर्वामन्वोषधयः । बहुलीं स्तृणीयात् ।

1. The ms. °ज्ञी°.
2. KS. °भितृत्त्यै.
3. KS. °वैनं to be corrected.
4. चैवौजसा is to be supplied in KS., otherwise the following च is rendered superfluous.

अच्चोधुको यजमानो भवत्यनग्रंभावुको ऽध्वर्युः । बर्हिषि प्रस्तरं साद-
यति । यजमानो वै प्रस्तरः प्रजा बर्हिः । यजमानमेव प्रजास्वधिसा-
दयति । उत्तरं सादयति । उत्तरो हि यजमानो ऽयजमानात्[1] । व्या-
वृत्तं सादयति । व्यावृत्तो हि यजमानो ऽयजमानेन[2] । अक्त्वा प्रस्तरं[3]
5 प्रहरति । यजमानो वै प्रस्तरः । हविर्भूतमेवैनं स्वर्गं लोकं गमयति ।
नात्यग्रं प्रहरेत् । यदत्यग्रं प्रहरेद्वृक्णकेशीर्जनयः स्युरत्यासारिणीर्नग्निकाः ।
अग्रमग्र आदीपयति । अग्रेणैवाग्निं समर्धयति । ऋजुं प्रहरेत्स्वर्गकाम-
स्य । ऋजुमेवैनं स्वर्गं लोकं गमयति । यं द्विष्यात्तस्य हूर्छयेत् ।
स्वर्गादेवैनं लोकाद्धूर्छयति । न्यञ्चं प्रहरेद्वृष्टिकामस्य । या वा इत
10 आहुतिरुद्यते सामुतो वृष्टिं च्यावयति । अनयैवाहुत्या दिवो वृष्टिं [नि]-
नयति । ऊर्ध्वं प्रहरेद्यदि कामयेत पुमानस्य पुत्रो जायेतेति । ऊर्ध्व
एव हि पुमान् । प्रथयित्वा प्रहरेद्यदि कामयेत स्त्री जायेतेति । एव-
मेव हि स्त्री प्रथितेव । यजमानो वै प्रस्तरः । हविर्भूतमेवैनं स्वर्गं लोकं
गमयति । एति वा एषो ऽस्माल्लोकाद्यत्प्रस्तरं प्रहरति । यत्तृणमुपगृह्णा-
15 त्यस्मिन्नेवैनं लोके यच्छति । अनुप्रहरति । यदेवास्या उद्घ्नन्तः[5] क्रूरं
कुर्वन्ति यद्विच्छिन्दन्तस्तच्छमयति । अगा३नग्नी३दित्यगन्स्वर्गं[6] लोक-
मित्येवैतदाह । श्रावय श्रौषडिति स्वर्गमेवैनं लोकं गतं श्रावयति ॥ २ ॥
Cf. I, 9; KS. XXV, 5; I, 9; TS. II, 6, 5.

देवाश्च वा असुराश्च संयत्ता आसन् । तान्यदस्यास्तेजो यज्ञियमासी-
त्तत्सिंहीरूपमिव महिषीरूपमिव भूत्वान्तरातिष्ठत् । ते ऽविदुर्यतरान्वा
20 इयमुपावर्त्स्यति त इदं भविष्यन्तीति । तां देवा उपामन्त्रयन्त । साब्रवीद्वार्यं
वृणै मामेव पूर्वामग्नेराहुतिरश्नवाता अथ मया यूयं सर्वान्कामान्व्यश्नवाथेति ।
सा देवानुपावर्तत । ततो देवा अभवन्परासुरा अभवन् । यस्यैवं विदुष
उत्तरवेदिर्न्युप्यते यश्चैवं विद्वान्निवपति भवत्यात्मना परास्य भ्रातृव्यो भवति ।

1. KS. यजमानात् to be corrected.
2. KS. यजमानेन to be corrected.
3. KS. प्रस्तरे.
4. KS. स्वयैवा°.
5. The ms. उद्यंतः. See p. 213, l. 22.
6. KS. adds अगन्निति.
7. The ms. °ज्ञी°.

दश पश्चात्तिरश्ची पदानि भवन्ति दशोभयतः प्राच्यपरिमिता पुरस्ताद्वि-
राजा संमिता । यद्वा असुराणां वित्तमासीत्तद्देवा वेद्याविन्दन्त । तद्वेद्या
वेदित्वम् । यद्वेद्यं तदुत्तरवेद्या । तदुत्तरवेद्या उत्तरवेदित्वम् । यस्यैवं
विदुषो वेदिश्च क्रियत उत्तरवेदिश्च न्युप्यते वित्तं चैव वेद्यं च भ्रातृव्य-
स्य विन्दते । प्रजापतेर्वै नासिकाशीर्यत । सोत्तरवेदिरभवत् । यज्ञः 5
प्रजापतिः । यदुत्तरवेदिं निवपति प्रजापतेरेव नासिकां मुखतः प्रतिद-
धाति । चत्वारि वा एतस्या नामानि नासिका कशारिः सिंह्युत्तरवेदिः ।
तप्तायन्यसीति । तप्ता ह्येनानैत् । वित्तायन्यसीति । वित्ता ह्येनानैत् ।
अवतान्मा नाथितमिति । नाथितान्ह्येनानावत् । अवताद्व्यथितमिति[1] । व्य-
थितान्ह्येनानावत् । अग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसि ॥ यो द्वितीय- 10
स्यां यस्तृतीयस्यामिति यदेवास्यैषु लोकेषु श्लिष्टं यन्न्यक्तं तदवरुन्द्धे ।
विदेदग्निर्नभो नामेति । यद्वा अग्नेर्वामं वसु तन्नभः । तेनेमां पृथिवीं
प्राविशज्जानुदघ्नमधः । तस्माज्जानुदघ्नं खेयम् । तस्यैव वामस्य वसोर-
नुवित्त्यै । सिंह्यसि महिष्यसीति । सिंहीरूपमिव महिषीरूपमिव भूत्वा-
न्तरातिष्ठत् । देवेभ्यः प्रथस्वेति प्रथयत्येवैनाम्[2] । देवेभ्यः कल्पस्वेति 15
कल्पयत्येवैनाम् । देवेभ्यः शुन्धस्वेति शुन्धत्येवैनाम् । देवेभ्यः शुम्भस्वेति
शुम्भत्येवैनाम् । विभ्राड्बृहत्पिबतु सोम्यं मध्वित्यन्तान्कल्पयति । देवपात्रं
वा उत्तरवेदिः । देवपात्रेणैव देवतास्तर्पयति । अथो देवताभ्य एव देव-
पात्रं निवेदयति ॥ ३ ॥ Cf. II, 3; KS. XXV, 6; II,9; MS. III, 8, 5; I, 2,
8; TS. VI, 2, 7; I, 2, 12.

यतीन्वै सालावृकेया आदन् । त आदीयमानाः संमृश्यमाना उत्तर- 20
वेदिं समुदक्रामन् । तान्नाभ्यधृष्णुवन् । तेषामेको ऽस्मयत । तत
एनानभ्यधृष्णुवन् । तेषामेकैकमावर्हमादन् । तस्मान्न मोघहासिना भव्यम् ।
यन्निःसारयति यदेवास्या अभिमृतममेध्यं यदयज्ञियं[3] तन्निःसारयति ।
प्रोक्षति । एतावती वा इयं पृथिव्यासीद्यावत्युत्तरवेदिः । तां समन्तं रक्षांसि

1. In the mantra section Kap. has अवतान्मा.

2. KS. एनान् is to be corrected.

3. The ms. ०ज्ञी०.

संप्राकम्पन्त । तानि देवा विनुद्यैताभिरेव देवताभिः समन्तं परिन्यदधुः । यत्प्रोक्षति । एतद्देवत्या वा इमा दिशः । रक्षांस्येव विनुद्यैताभिरेव देवताभिः समन्तमात्मानं परिनिदधाति । गोपीथाय । एतद्वा एतां पूर्वामग्नेराहुतिरश्नुते यद्व्याघारयति । अथादो ऽब्रवीन्मामेव पूर्वा-
5 मग्नेराहुतिरश्नवाता अथ मया यूयं सर्वान्कामान्व्यश्नवाथेति । अथ वा एतेषां तर्ह्यसुराः सपत्ना आसन् । ते ऽकामयन्त सपत्नान्सहेमहीति । [1]सिंह्यसि सपत्नसाही स्वाहेति । सपत्नांस्तेनासहन्त । ते ऽकामयन्त पशून्विन्देमहीति । [1]सिंह्यसि रायस्पोषवनिः स्वाहेति । पशूंस्तेनोविन्दन्त । ते ऽकामयन्त प्रजां विन्देमहीति । [1]सिंह्यसि सुप्रजावनिः स्वाहेति ।
10 प्रजां तेनाविन्दन्त । ते ऽकामयन्तादित्याःस्यामेति । [1]सिंह्यस्यादित्यवनिः स्वाहेति । आदित्यास्तेनाभवन् । तस्मादिमा आदित्याः प्रजाः । ते ऽकामयन्त यज्ञियाः स्यामेति । [1]सिंह्यस्यावह देवान्देवायते यजमानाय स्वाहेति । यज्ञियास्तेनाभवन् । ते ऽकामयन्त स्वर्गं लोकमियामेति । भूतेभ्यस्त्वेति । देवा वै भूताः । स्वर्गमेव तेन लोकमायन् । यस्यैवं
15 विदुष उत्तरवेदिर्व्याघार्यते यश्चैवं विद्वान्व्याघारयति सर्वानेवैतया कामान्व्यश्नोति । इमे वै लोका अविधृता[2] आसन् । ते संप्राकम्पन्त । तान्देवा एतैर्यजुर्भिर्व्यष्टभ्नुवन् । यदेतैः परिधीन्परिदधात्येषां लोकानां विधृत्यै । अग्निर्वै देवेभ्यो ऽपाक्रामत् । स यां प्रथमां प्रावसत्[3] तां पशुष्ववसद्वृष्णोरन्तराश्रृङ्गम् । तस्मादूर्णास्तुका भवति । यां द्वितीयां
20 तां वनस्पतिषु पीतुदारौ[4] । तस्मात्पीतुदारुर्भवति । यां तृतीयां तामोषधिषु सुगन्धितेजने । तस्मात्सुगन्धितेजनो भवति । यदेते संभारा भवन्ति यदेवास्यात्र श्लिष्टं यन्न्यक्तं तदेतैः संभरति । स पुनरुपावर्तमानः शरीरमधूनुत । तस्य यन्मांसमासीत्तद्गुल्गुल्वभवद्यदस्थि स पीतुदारुर्यानि लोमानि स सुगन्धितेजनः । तस्मात्सुगन्धितेजनो भवति ।

1. The ms. ०ह्यी०.
2. Thus emended. The ms. has आवृता and Kāṭh. आधृता.
3. The ms. प्राविश०.
4. The ms. प्रीतुदारू.

यदेते संभारा भवन्ति यदेवास्यात्र श्लिष्टं यन्न्यक्नं तदेतैः संभरति । अग्नेः कुलायमस्यग्नेः पुरीषमसीति । कुलायमिव ह्येतत्पुरीषमिव । यज्ञः प्रत्यष्ठादिति यज्ञस्यैव प्रतिष्ठित्यै ॥ ४ ॥ Cf. II, 3; KS. XXV, 6; II, 9; MS. III, 8, 5; I, 2, 8; TS. VI, 2, 8; I, 2, 12.

चत्वारो वै देवानां होतार आसन्भूपतिर्भुवनपतिर्भूतानां पतिर्भूतः । तेषां त्रयो होत्रेण प्रामीयन्त । अथो यद्भूत उदशिष्यत स प्रमयाद- 5
बिभेत् । स न्यलयत । स समुद्रं प्राविशत् । स यत्समुद्रे भस्माकु-
रुत स एष कर्दमः । तं मत्स्यः प्राब्रवीत् । तमशपदभिगन्ता त्वा
हतादिति । तस्मान्मत्स्यमभिगन्ता हन्ति । शप्तो हि सः । तत उद्-
द्रुत्य नडं[1] प्राविशत् । तस्मान्नडो[2] दग्धः क्रूर इव वैर्वरः[3] । तमश्वः
श्वेतो ऽवमृशन्नन्वाविन्दत् । तं प्रत्यौषत् । तस्मात्स प्रत्युष्टमुखः । सो 10
ऽक्रन्दत् । सा या वागासीत्स सुश्लोकः शकुनिरभवत् । तस्माद्यं स नष्टै-
षमभ्यवक्रन्दति विन्दत्येव । तं देवा अनुविद्यानयन्निदं नो होता
भविष्यतीति[5] । स प्रमयादबिभेत् । तं भ्रातरः प्रमीता अब्रुवन्वयं त
इतो वर्म[6] भविष्यामो[7] देवेषु णो भागधेयमिच्छेति । ते ऽब्रुवन्यत्किंच
हविर्भूतं बहिष्परिधि स्कन्देत्तदेषां भागधेयमिति । एते वाव ते परि- 15
धयः । यदि हविर्भूतं बहिष्परिधि स्कन्देद्भूपतये स्वाहा भुवनपतये स्वाहा
भूतानां पतये स्वाहेत्यनुमन्त्रयेत । एते वै देवा स्कन्नभागाः । य एव
देवा स्कन्नभागास्तानेतद्गमयति[8] । यज्ञो वा एतेषां मध्यमो यजमानो
दक्षिणार्ध्यो भ्रातृव्य उत्तरार्ध्यः । स्थविष्ठं मध्यमं कुर्याद्द्राघिष्ठं[10] दक्षि-
णार्ध्यं कधिष्ठमुत्तरार्ध्यम् । स्थविष्ठं प्रथमं परिदधाति । प्रथमो हि यज्ञः । 20

1. The ms. खन्युं.
2. The ms. तस्मान्नन्या.
3. The ms. च॰.
4. The ms. मिष्टीकम॰.
5. KS. भविष्यसीति.
6. The ms. चर्म.
7. The ms. ॰मीति.
8. The ms. भूपतये स्वाहेति प्राक् प्रादेशेन परिमिमीत भुवनपतये स्वाहेति दक्षिणा भूतानां पतये स्वाहेति न्युत्तरानुमन्त्रयेत. Cf. p. 218, ll. 7–8.
9. KS. ॰न॰.
10. Here and further the ms. वरिषिष्ठं.

वर्षिंष्ठं दक्षिणार्ध्यम् । यथा यजमानो दक्षिणतो यज्ञ उपसीदत्येवं तत् । पश्चेवोत्तरार्ध्यम् । पश्चेव हि भ्रातृव्यः । यज्ञेनैवैतद्यजमानं प्रतरां करोति । यज्ञेन भ्रातृव्यमपनुदते । अक्त्वा दक्षिणार्ध्ये प्रहरति । मुखत एव यजमानं प्रीणाति । अथो हविर्भूतमेवैनं स्वर्गँ लोकं गमयति । उप-
5 वपत्युत्तरार्ध्यम् । भ्रातृव्यमेव[1] तदुपवपति । अथ ह स्माहायलः काफोडिः[2] किमु स यजेत यो यज्ञस्य स्कन्नेन न वसीयानि[वँ] स्यादिति । यत्र स्कन्देत्तदपो निनीय भूपतये स्वाहेति प्राक् प्रादेशेन मिमीत भुवनपतये स्वाहेति दक्षिणा भूतानां पतये स्वाहेति प्रत्यक् । जनं वा एतद्यज्ञस्यैति यत्स्कन्दति । इयं वाव जनः । यो वा इमामेति न स पुनरागच्छति ।
10 जनँमेवैतस्य यज्ञस्य यां कामयते आशिषं तामवरुन्द्धे । दिशो मिमीते । दिशो वै यज्ञस्य स्कन्नस्याशीर्गच्छति । दिग्भ्य एव यज्ञस्याशिषमवरुन्द्धे । प्रादेशेन मिमीते । एतावद्वै पुरुषे वीर्यं यावदस्य प्राणा अभि । यावदेवास्मिन्वीर्यँ तेनैनत्संभरति । अपो निनयति । म्रियँते वा एतद्यज्ञस्य यत्स्कन्दति । अद्भिस्तान्तमभिषिञ्चन्ति । आपः सर्वा देवताः ।
15 देवता एवैनत्प्रवेशयति । यदि प्रातःसवने स्कन्देद्देवाञ्जनमगन्यज्ञस्तस्य मेष्टँस्य यज्ञस्य द्रविणेहागम्या इत्यनुमन्त्रयेत । यदि मध्यन्दिने ओषधीर्जनमगन्यज्ञ[स्तस्य मेष्टस्य यज्ञस्य द्रविणेहागम्या इत्यनुमन्त्रयेत । ] यदि तृतीयसवने पितॄञ्जनमगन्यज्ञस्तस्य मेष्टस्य यज्ञस्य द्रविणेहागम्या इत्यनुमन्त्रयेत । यदि नक्तं द्यावापृथिवी जनमगन्यज्ञस्तस्य मेष्टस्य यज्ञस्य द्रविणेहागम्या
20 इत्यनुमन्त्रयेत । यदि तिरोह्नयेषु गन्धर्वाञ्जनमगन्यज्ञस्तस्य मेष्टस्य [यज्ञस्य] द्रवि-

1. KS. °मेव to be corrected.

2. Thus the ms. KS. स्माहार्यलः काहोडिः. Professors Macdonell and Keith attribute to KS. Argala Kāhoḍi. Prof. Caland refers me to अर्यलः काहोळिः in JaimBr. III, 177. Aryala also occurs in PañcBr. XXIII, 1, 5. Kahoḍa in well known from ŚatBr. II, 4, 3, 1; ŚāṅkhĀr. XV; BṛĀrUp. III, 5, 1; ĀśvGṛ. III, 4, 4; Śivādi-gaṇa on Pāṇini IV, 1, 112.

3. KS. इत् is to be corrected to इव.

4. The ms. यजमान°.

5. The ms. adds यज्ञस्य.

6. The ms. नियo.

7. In KS. the enclitic मा is preceded by यज्ञस्य, which is rightly omitted in subsequent formulas.

णेहागम्या इत्यनुमन्त्रयेत। एता वै देवता यज्ञस्य स्कन्नस्याशीर्गच्छति। एता एव देवता यथादेवतं प्रत्युपसृत्य यां कामयते यज्ञस्याशिषं तामवरुन्द्धे। यस्यैवं विदुषो यज्ञस्य स्कन्नमनुमन्त्रयन्ते यश्चैवं विद्वाननु- मन्त्रयते वसीयान्भवति ॥ ५ ॥ Cf. KS. XXV, 7; MS. III, 8, 6; TS. II, 6, 6.

इति कपिष्ठलकठसंहितायामेकोनचत्वारिंशत्तमोऽध्यायः ॥

हविर्धाने प्रणेनेक्ति । मेध्ये एवैने यज्ञिये[1] करोति । ग्रन्थीन्वि-
वृञ्जन्ति । देवग्रन्थीनेव ग्रन्थिष्यन्तो मनुष्यग्रन्थीन्विवृञ्जन्ति[2] । हवि-
र्वै हविर्धाने । स्तीर्णे बर्हिषि हविरासादयन्ति । तस्मात्स्तीर्णे बर्हिषि
हविर्धाने प्रवर्तयन्ति । पत्न्युपानक्ति । पत्न्या एवैष यज्ञस्यान्वारम्भः ।
5 अथो मिथुनमेव यज्ञमुखे दधाति । प्रजननाय । त्रिः प्राचीनमुपानक्ति ।
असंख्यातं हि तिरश्चीनं मनुष्या उपाञ्जन्ति । व्यावृत्त्यै । यजुषोपा-
नक्ति । अयजुषा हि मनुष्या उपाञ्जन्ति । व्यावृत्त्यै । दक्षिणत उपा-
नक्ति । दक्षिणतो ह्येते उदीची मनुष्यलोकमुपावर्तेते । मानुषमेवैनयो-
रुत्तरं करोति । यदुत्तरादुपाञ्ज्यान्नान्यतरं चन लोकमुपावर्तेयाताम् ।
10 स्वर्गाय वा एते लोकाय प्रवर्तेते यद्धविर्धाने ॥

युञ्जते मन इति सावित्र्या जुहोति । सवितृप्रसूते एवैने स्वर्गं
लोकं गमयति । हविर्वै हविर्धाने । न हविरनभिघृतं मेधमश्नुते ।
यदभ्यनक्त्यभ्येवैने धारयति । मेध्यत्वाय । शुष्को वा एष निर्ऋति-
गृहीतो यदक्षो नभ्याभ्यामुभयतो बद्ध उपधिभ्यां संदष्टः । यदुपा-
15 नक्ति मेध्यमेवैनं यज्ञियं करोति । घोषो वै नामासुर आसीत् । स
वनस्पतीन्प्राविशत् । तं देवा गृहीत्वोभयतोऽबध्नन् । यत्त्वेवेदसुर्या
वाग्यज्ञमववदेद्रक्षांसि यज्ञमन्ववेत्य हन्युः । अनुगृह्णन्तो यन्ति रक्षसा-
मनन्ववायाय[3] । वर्त्मना वै यज्ञं रक्षांस्यन्ववेत्य जिघांसन्ति । वैष्णव्या
वर्त्मञ्जुहोति । विष्णुर्वै यज्ञः । विष्णुनैव यज्ञाद्रक्षांस्यपहन्ति । व्यृद्धा

1. The ms. यज्ञीये.

2. The ms. ०वृज०.

3. KS. ०मन्ववायाय, which is identical with Kap. ms., is to be corrected.

वा एषाहुतिर्यामनग्नौ जुहोति । यद्धिरण्यमुपास्य जुहोत्यग्निमत्येव जुहोति । समृद्ध्यै । स्वर्गं वा एते लोकं प्रेतो यद्धविर्धाने । गायत्र्या दक्षिण-स्य वर्त्मञ्जुहोति । अस्यामेवैने आक्रमयति । त्रिष्टुभोत्तरस्य । अन्त-रिक्ष एवैने आक्रमयति । आहवनीयं गमयति । स्वर्गमेवैने लोकं गमयति । स्वर्गो हि लोक आहवनीयः । त्रीन्पुरस्तात्प्रक्रामानुच्छिंषति । त्रय इमे 5 लोकाः । इमानेवास्मै[1] लोकानुच्छिंषति ॥

दिवो वा विष्णवुत वा पृथिव्या इति दक्षिणस्य हविर्धानस्य[2] मेथी-मुपमिनोति । विष्णुर्वै यज्ञः । मुखत एव यज्ञस्याशिषमवरुन्द्धे । तां परुषिपरुष्याशासान एति । विष्णोर्नु कं वीर्याणि प्रवोचमित्युत्तरस्य । वैष्णवं वै हविर्धानम् । स्वयैवैनद्देवतया समर्धयति । विष्णोः पृष्ठमसी- 10 ति च्छदिरुपरिष्टादभिनिदधाति । इदमेव तेन करोति यदिदमुत्तरार्धं[?] शीर्ष्णः । विष्णो रराटमसीति पुरस्ताद्रराटमेव तेन करोति । विष्णोः श्नप्त्रे स्थ इत्यभितः । श्नप्त्रे एव तेन करोति । तिर्यञ्चं पुरस्ताद्वंशं विषीव्यन्ति । तस्मात्तिरश्ची पुरुषस्य भ्रुवौ । विष्णोः स्यूरसि विष्णो-र्ध्रुवो ऽसीति । वैष्णवी हि हविर्धानम् । स्वयैव देवतया सीव्यति । 15 स्वया देवतया ग्रन्थिं ग्रथ्नाति । यं प्रथमं ग्रन्थिं ग्रथ्नीयात्तं प्रथमं विवृजेदात्मनो[3] गोपीथाय । यदन्यं पूर्वं विवृजेदमेहेनाध्वर्युः[3] प्रमीयेत । उपरिष्टाच्छम्याः संनह्यन्ति पश्चादुपमिन्वन्ति । अधस्ताद्धि मनुष्या युञ्जन्ति पुरस्तादुपमिन्वन्ति । व्यावृत्त्यै । शिरो वा एतद्यज्ञस्य यद्धविर्धानम् । पुरस्ताद्वर्षीयो[4] भवति पश्चात्क्रधीयः । तस्मात्पुरस्ता- 20 त्पुरुषस्य शिरो वर्षीयः[5] पश्चात्क्रधीयः । वैष्णवमसि विष्णवे त्वेति संमि-तमभिमन्त्रयते । वैष्णवं वै हविर्धानम् । स्वयैवैनद्देवतया समर्धयति । प्र तद्विष्णु स्तवते वीर्येणेति त्रीन्प्रक्रमान्यजमानं प्राञ्चं प्रक्रमयति ।

1. KS. अस्मिन् is to be corrected. Cf. MS. p. 104, ll. 17-18 इमानेव लोका-न्यजमानायोच्छिंषति.

2. The ms. adds रताशांदयति.

3. Thus the ms.

4. The ms. वरिषीयो.

5. The ms. वरिषीयः.

विष्णुमेवैनं भूतमिमांल्लोकान्गमयति ॥ १ ॥ Cf. II, 4; KS. XXV, 8; II, 10; MS. III, 8, 7; I, 2, 9; TS. VI, 2, 9; I, 2, 13.

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवाः । दक्षिणस्य हविर्धानस्याधस्तात्परिलिखति । एतद्वा एतयोः पूर्वम् । मुखत एव यज्ञस्य प्राणान्प्रतिदधाति । तस्मान्मुखतः प्राणाः । चतुरः परिलिखति ।
5 चत्वारो हि प्राणाः । प्रादेशंप्रादेशं परिलिखति । एतावदेतावद्धीमेऽभि[2] प्राणाः । असंभिन्दन्तः खनन्ति प्राणानामसंभेदाय । यत्संभिन्द्या[त्प्राणान्संभिन्द्या]त्प्रमीयेत । तान्पर एकधा संतृन्दन्ति । तस्मात्प्राणाः पर एकधा संतृण्णाः ॥

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते । सवितृप्रसूत एवैनां[3]
10 देवताभिरादत्ते । इदमहं रक्षसो ग्रीवा अपिकृन्तामीति । भ्रातृव्यो वै रक्षः । भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति । इदमहं यो नः समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामीति । प्राणा उपरवाः । प्राणेभ्य एवैनमन्तरेति ताजक्प्रधन्वति । बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति । बृहती[4] ह्येष इन्द्राय वाचं वदति । रक्षोहणं
15 वलगहनं वैष्णवीमिति रक्षसामपहत्यै । यद्वैष्णवीमिति । यज्ञो वै विष्णुः । स्वयैवैनां[5] देवतया समर्धयति । देवाश्च वा असुराश्च व्यभ्यचरन्त । तेऽसुरा देवानां प्राणेषु वलगान्न्यखनन् । तान्बाहुमात्रेऽन्वविन्दन् । तस्माद्बाहुमात्राः खेयाः प्राणानामनुवित्त्यै । इदमहं तान्वलगानुद्वपामि यान्नः समानो यानसमानो निचखानेति । यदेवास्यात्र शप्तं यदभिचरितं
20 तदनुविद्योद्वपति । तस्मादेते भिषज्याः । तस्मादामयाविनमनुमर्शयन्ति । सम्राडसि स्वराडसीति साम्राज्यमेवैतैरुपैति । गायत्रेण च्छन्दसावबाढो यं द्विष्मः ॥ त्रैष्टुभेन जागतेनेति । एतावन्ति वै च्छन्दांसि । छन्दोभिरेव भ्रातृव्यमवबाधते । किमत्र भद्रं तन्नौ सहेत्याशिषमेवाशास्ते । निरस्तो

1. KS. विप॰.
2. The Kap. and Kāṭh. mss. वि॰.
3. KS. एवैनान् to be corrected.
4. KS. एव भ्रातृव्यम॰.
5. KS. स्वयैवैनं to be corrected.

वलगो ऽवबाढो दुरस्युरिति यथायजुः । रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवा-
निति रक्षसामपहत्यै । यद्वैष्णवानिति । यज्ञो वै विष्णुः । स्वयैवै-
नान्देवतया समर्धयति । रक्षोघ्नो वलगघ्नो ऽवसिञ्चामि वैष्णवानिति रक्ष-
सामपहत्यै । अथो यदेवैषां खनन्तः क्रूरं कुर्वन्ति तच्छमयति । यद्वै-
ष्णवानिति । यज्ञो वै विष्णुः । स्वयैवैनान्देवतया[1] समर्धयति । रक्षोघ्नो 5
वलगघ्नो ऽवस्तृणामि वैष्णवानिति रक्षसामपहत्यै । यद्वैष्णवानिति ।
यज्ञो वै विष्णुः । स्वयैवैनान्देवतया समर्धयति । अथावसिश्वत्यव च
स्तृणाति । तस्मात्प्राणा अन्तरतो लोमशा उदन्वन्तः । रक्षोहणौ
वलगहनौ प्रोक्षामि वैष्णवी इति रक्षसामपहत्यै । यद्वैष्णवी इति । यज्ञो
वै विष्णुः । स्वयैवैने[2] देवतया समर्धयति । ऋक्षे वा एते तष्टे अमेध्ये । 10
आपो मेध्या यज्ञियाः[3] । यदद्भिः प्रोक्षति मेध्ये एवैने यज्ञिये करोति ।
हनू वा एते यज्ञस्य यदधिषवणे । अवितृण्णे भवतः । तस्माद्धनू अवि-
तृण्णे । पुरस्ताद्देहीयसी भवतः पश्चाद्वरीयसी । एवमेव हि हनू । ध्यङ्गु-
लमन्तराधिषवणे भवति । तस्मादियमन्त[रा हनू] रास्नाकेव । रक्षो-
हणौ वलगहनावुपदधामि वैष्णवी इति रक्षसामपहत्यै । यद्वैष्णवी इति । 15
यज्ञो वै विष्णुः । स्वयैवैने देवतया समर्धयति । रक्षोहणौ वलगहनौ
पर्यूहामि वैष्णवी इति रक्षसामपहत्यै । यद्वैष्णवी इति । यज्ञो वै विष्णुः ।
स्वयैवैने[2] देवतया समर्धयति । पर्यूहति । तस्माद्धनू अनग्ने अमुषिते
बस्वैरोष्ठाभ्यां सृक्काभ्यां श्मश्रुभिः[4] । शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा
उपरवा हनू अधिषवणे दन्ता ग्रावाणो जिह्वाधिषवणं चर्म मूर्धा द्रोण- 20
कलशः । यज्ञः प्रजापतिः । मुखतो वा इदं प्रजापतेः सोमं निष्पि-
बन्ति । तस्मादजीर्षं जग्धमिव प्सातमिव । एवमिव हि दद्भिः
प्सातं भवति । यो विराजं यज्ञमुखे दोह्यां वेद दुह एनाम् । इयं
वाव विराट् । तस्या एतदूधो यदधिषवणे स्तना उपरवा वत्सा

1. KS. स्वयैवैनं to be corrected.
2. KS. स्वयैवैनं to be corrected. Cf. KS. p. 117, l. 1.
3. The ms. ०ज्ञी०.
4. Thus KS. The ms. अनग्ने अमुषिं उद्वि-षिते चरस्थिरौष्ठाभ्यास्तुक्काभ्यां श्नुश्नुसि.

ग्रावाणस्त्वगधिषवणं चर्म । ऋत्विजो दुहन्ति । य एवं विराजं यज्ञमुखे दोह्यां वेद दुह एनाम् ॥ २ ॥ Cf. II,5; KS. XXV, 9; II, 11; MS. III 8, 8; I, 2, 10; TS. VI, 2, 11; I, 3, 2.

शिरो वा एतद्यज्ञस्य यद्धविर्धानं ग्रीवा आग्नीध्रमुदरं सद ऊर्गु-दुम्बरः । यत्सदस्यौदुम्बरीं मिनोत्यूर्जमेव मध्यतो दधाति यजमाने च
5 प्रजासु च । तस्मान्मध्यतः प्रजा ऊर्गूर्जयति । अस्मै वै लोकायौदुम्बरी मीयते ऽमुष्मै यूपः । तस्मादितः पराञ्चं यूपं प्रोत्त्यमुतो ऽर्वाचीमौ-दुम्बरीम् । अनयोर्लोकयोर्विजित्यै । ऊर्ग्वा उदुम्बरः । यदमुतो ऽर्वाची-मौदुम्बरीं प्रोत्त्यमुत एवार्वाचीमूर्जं च्यावयति । अस्मिन्नेव लोक ऊर्जं न्यनक्ति । प्रजापतेर्वा उद्गातोर्गुदुम्बरी । उच्छ्रयते[1] । प्रजास्वेवोर्जं
10 न्यनक्ति ॥

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते । सवितृप्रसूत एवैनां देव-ताभिरादत्ते । इदमहं रक्षसो ग्रीवा अपिकृन्तामीति । भ्रातृव्यो वै रक्षः । भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति । शुन्धन्तां लोकाः पितृषदना इति शुन्धत्येवैनाम्[2] । अथो यदेवास्य खनन्तः क्रूरं कुर्वन्ति तच्छमयति ।
15 यवमतीरवसिञ्चति । अन्नं वै यवा ऊर्गुदुम्बरः । अन्न एवोर्जं दधाति । पितृषदनं त्वा लोकमास्तृणामीति । यद्वा एतामपबर्हिषं मिनुयुर्गर्तमि-त्स्यात् । अस्या उत्तरार्धे[3] ओषधयः । अस्या एवैनामुत्तरार्धे मिनोति । अगर्तमितमेवाकः । उद्दिवं स्तभानान्तरिक्षं पृण दृंहस्व पृथिव्यामिति दृंह-त्येवैनाम् । नितानस्त्वा मारुतो निहन्त्विति । मनो वै नितानः प्राणा
20 मारुताः । स्वयैवैनां देवतयावहरति । नितानो ह स्म वै मारुतो देवा-नामौदुम्बरीं मिनोति । तेनैवैनां मिनोति । मित्रावरुणयोर्ध्रुवेण धर्मणेति । मित्रेण वा इमाः प्रजाः शान्ता वरुणेन विधृताः । क्लृप्त्या एव विधृत्यै । ब्रह्मवनिं त्वा क्षत्रवनिमित्याशिषमेवाशास्ते । ब्रह्म दृंह क्षत्रं दृंहेत्याशिष-

1. Thus emended. The ms. उद्गातोदुंबर्या सयते. KS. उद्गातोर्गुदुम्बर्या[4] श्रयते.

2. Thus emended. KS. and Kap. mss. ०वैनम्. Cf. ĀpŚr. VII, 9, 10.

3. The ms. ०र्धम्.

4. The ms. स्क०.

मेवास्मा आशिषां दृंहति । घृतेन द्यावापृथिवी आपृणाथामिति घृतेन द्यावापृथिवी व्युनत्ति[1] । तस्मादोषधयो ऽनभ्यक्ता रेभन्ते । घृतेनौदुम्बरीमभिजुहोति । तेजो वै घृतमन्नमुदुम्बरः । अन्न एव तेजो दधाति । आन्तमन्ववस्रावयति[2] । आन्तमेव वनस्पतिषु चौषधिषु च रसं दधाति । विश्वजनस्य च्छायासीति । विश्वजनस्य ह्येषा छाया । गोत्राद्गोत्राद्ध्येतत्संप्रसर्पन्ति । औदुम्बरीमभि च्छदींषि संमुखानि कुर्यात् । दैवीर्वा एता विशो यदोषधयः । ओषधयश्छदींषि । यजमान औदुम्बरी । यजमानमेव प्रजा अभि संमुखाः करोति । छदिर्भवति । अथान्तर्वर्तः । तस्मात्पुरुषस्य मांसम् । अथ पर्शुः । उदरं वा एतद्यज्ञस्य यत्सदः । तिर्यङ् मिनोति । तस्मात्पुरुषे ऽशितं ध्रियते । पुरुषेण वै यज्ञः संमितो यज्ञेन पुरुषः । यत्सद उभयतश्छिद्रं तस्मात्पुरुष उभयतश्छिद्रः । विषीव्यन्ति । तस्मात्पुरुषो ऽन्तरतो विष्यूतः । इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवो ऽसीति । ऐन्द्रं वै सदः । स्वयैव देवतया सीव्यति । स्वया देवतया ग्रन्थिं ग्रथ्नाति । ऐन्द्रमसीन्द्राय त्वेति संमितमभिमन्त्रयते । ऐन्द्रं वै सदः । स्वयैवैनं देवतया समर्धयति ॥

नव च्छदींषि कुर्याद्यद्यग्निष्टोमः स्यात् । तेजसा त्रिवृता संमितम् । पञ्चदश यद्युक्थ्यः । पञ्चदशेन संमितम् । वज्रः पञ्चदशः । वज्रेण संमितम् । सप्तदश यद्यतिरात्रः । सप्तदशेन संमितम् । प्रजापतिः सप्तदशः । प्रजापतिना संमितम् । एकविंशतिं प्रतिष्ठाकामस्य कुर्यात् । एकविंशो वै स्तोमानां प्रतिष्ठा । प्रतिष्ठित्यै । अथो यज्ञक्रतूनामेव व्यावृत्त्यै । या अन्तत स्थूणास्ताः क्रधिष्ठाः कुर्याद्यदि कामयेत वर्षेदिति[3] । नीचैरिव हि द्यौर्वर्षिष्यन्ती[4] भवति । ता वर्षिष्ठाः कुर्याद्यदि कामयेत न वर्षेदिति[5] । उच्चैरिव हि द्यौरवर्षिष्यन्ती[6] भवति । यानि दक्षिणानि

1. The ms. व्यनक्ति.
2. This sentence is missing in KS. Cf. TS. VI, 2, 10, 5; MānŚr. II, 2, 3, 21.
3. The ms. वरिषे॰.
4. The ms. ॰र्वरिषि॰.
5. The ms. वरिषि॰.
6. The ms. ॰वरिषि॰.

च्छदींषि तान्युत्तराणि कुर्यात् । यजमानलोके वा एतानि यानि दक्षिणानि भ्रातृव्यलोक उत्तराणि । उत्तरमेव यजमानमयजमानाद् भ्रातृव्यात्करोति । उत्तरो हि यजमानो ऽयजमानात् ॥ ३ ॥ Cf. II, 6; KS. XXV, 10; II, 12; MS. III, 8, 9; I, 2, 11; TS. VI, 2, 10; I, 3, 1.

धिष्ण्या न्युप्यन्ते ऽनयोर्लोकयोर्विधृत्यै । न्यन्य उप्यन्ते नान्ये ।
5 ये न्युप्यन्त इमं तैर्लोकं दाधार । ये न न्युप्यन्ते ऽमुं तैः । पराङ् ह्यसौ लोको ऽनिरुक्तः । अग्निर्वै देवेभ्यो ऽपाक्रामत् । स पृथिवीं प्राविशत् । तं जानुदघ्ने ऽन्वविन्दन् । तस्माज्जानुदघ्नं खेयम् । अनुविद्यैवैतान्निवपति । चात्वालान्निवपति । एषा वा अग्नेर्योनिः । स्वादेवैनान्योनेर्निवपति । यो वेद्यास्तीर्थं [वेद न सदस्यामार्तिमार्छति ।
10 प्राचीनमाग्नीध्रात्प्रतीचीनं चात्वालात्तेन संचरेत् । एतद्वै वेद्यास्तीर्थम् । य ]एवं वेद न सदस्यामार्तिमार्छति । न प्रत्यङ् सदो ऽतीयादध्वर्युः । उदरं वा एतद्यज्ञस्य यत्सदः । उदरं यज्ञस्य संकर्षेत्[1]प्रमीयेत । जनो वा एषो ऽध्वर्योर्जनमेति जनता जनतामभीत्य जिनाति । यद्यतीयादैन्द्र्या संचरेत् । ऐन्द्रं वै सदः । स्वयैव देवतया संचरति । न प्राङ्
15 हविर्धानमतीयादध्वर्युः । शिरो वा एतद्यज्ञस्य यद्धविर्धानम् । शिरो[2] यज्ञस्य संकर्षेत्[1]प्रमीयेत । यद्यतीयाद्वैष्णव्या संचरेत् । वैष्णवं वै हविर्धानम् । स्वयैव देवतया संचरति । तदाहुः क्षेत्रपत्ययैव[3] संचरेदिति । इयं क्षेत्रस्य पतिः । तेनास्वा नैति ॥

अमुष्मिन्वै लोके सोम आसीत् । तं धिष्ण्या अगोपायन् । तं
20 गायत्र्याहरत् । नेष्टापोत्रोः प्रति गोपीथम् । तस्मादेते होत्रे व्यृद्धे व्यृद्धसोमपीथे । तस्मान्न नेष्ट्रा न पोत्रा भवितव्यम् । तस्मादेतौ सीसचन्ताविव यजतः । तमेते ऽन्वायन्द्वितीयानि नामानि कृत्वा । तस्माद्ब्राह्मणो द्विनामार्धुकः । तं पर्यविशन्भागधेयमिच्छमानाः । तेभ्य एतद्भागधेयमकल्पयत् । यद्धिष्ण्यान्व्याघारयति स्वेनैवैनान्भागधेयेन

1. The ms. संकरिषेत्.
2. The ms. adds वा.
3. Thus KS. The ms. °पत्ये.

समर्धयति । तेषां ये नेदिष्ठं पर्यविरीस्ते सोमपीथ प्राप्नुवन्नाहवनीय आग्नीध्रो होत्रीयः । तस्मादेत उपर्युपरि वषट्कुर्वन्तं न हिंसन्ति । प्रीता हि । न प्रत्यङ् धिष्ण्यानतिसर्पेदध्वर्युः । प्राणा वै धिष्ण्याः । प्राणान्संकर्षेत्[1]प्रमीयेत । न प्रत्यङ् होतारम् । नाभिर्वा एषा यज्ञस्य यद्धोता । ऊर्ध्वं वै नाभ्याः प्राणो ऽवाचीनमपानः । अपाने प्राणं दध्या- 5
त्प्रमीयेत ॥

दक्षिणतो वै देवानां रक्षांसि यज्ञमभ्यजयन्[2] । तमाग्नीध्रात्पुनर-पाजयन् । यदाग्नीध्राद्धिष्ण्यान्विहरन्ति यज्ञस्याभिजित्यै रक्षसामपहत्यै । जम्भो वै नामासुर आसीत् । स देवानां यज्ञमगिरत् । स आग्नीध्र-मपि नागिरत् । यदाग्नीध्राद्धिष्ण्यान्विहरन्ति तेन यज्ञो जीवस्तेन मेध्यः । 10
अङ्गारान्पूर्वयोः सवनयोर्विहरन्ति । शुक्रवती हि ते । शलाकान्दीप्यमानी-स्तृतीयसवने । तेन तच्छुक्रवत् । सर्वाण्यस्य सवनानि शुक्रवन्ति भवन्ति य एवं वेद ॥

प्राचीभिर्वा आहुतिभिर्देवा अन्यानसुरान्प्राणुदन्त प्रतीचीभिरन्यान् । प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते[3] प्राचीरन्या आहुतयो हूयन्ते भ्रातृव्य- 15
स्य वितृत्यै । अग्नेर्वा एता वैश्वानरस्य प्रियास्तन्वो यद्धिष्ण्याः । यद्धिष्ण्यान्व्याघारयति ता एवैतत्समुद्धर्षयति । अग्निर्वा एष वैश्वानर उपावसृज्यते यदग्निष्टोमः । स ईश्वरो ऽशान्तो यजमानं च सदस्यांश्चा-भ्युषः । प्रोर्णुवीत यजमान आत्मनो ऽनतिदाहाय[4] । तृतीयसवने वै यज्ञस्याशिषं कुरुते । यत्प्रोर्णुवीत ताभ्य आत्मानमन्तर्दध्यात् । नाभिं 20
वै पितरो ऽभिसंजानते । आविर्नाभिं कुर्वीत । अभीव कर्णौ प्रोर्णुवीत । नाशीर्भ्य आत्मानमन्तर्दधाति । जानन्त्येनं[5] पितरः । घ्नन्ति वा एत-त्सोमं यदभिषुण्वन्ति । यावन्तः प्रसृप्ताः स्युस्ते सर्वे ऽग्निष्टोममुपगा-येयुः । अन्तो वा अग्निष्टोमः । अन्तमेवैनमागत्य समीरयन्ति । इन्द्रियाय वै कं ब्राह्मणः सोमं पिबति । यदुपगायेदिन्द्रियं निःस्वरेत्[6] । 25

1. The ms. °करिषेत्.
2. The ms. °मजिघांसन्.
3. The ms. वाघारयति.
4. The ms. नातिवाह.
5. The ms. जानंतानं. KS. जानन्त्वेनं.
6. The ms. °दिन्द्रियं द्वे द्वे निसरेत्.

तस्मान्नोपगेयम् ॥

संवत्सरो वा अग्निष्टोमः । द्वादशाग्निष्टोमस्य स्तोत्राणि । द्वादश मासाः संवत्सरः । संवत्सरं प्रजा[1] अनुप्रजायन्ते । यदाग्निष्टोमस्य स्तोत्रे ऽप उपप्रवर्तयति प्रजननाय । यद्वै पत्नी यज्ञे करोति तन्मिथुनम् । यत्पत्न्यप उपप्रवर्तयति मिथुन एव रेतः प्रासिञ्चति[2] । उद्गात्रा पत्नी[3] संख्यापयति । वृषा वा उद्गाता । पत्न्याः प्रजाः प्रजायन्ते । वृषाणमेवास्यामपिसृजति प्रजननाय । ऊरुभ्यां प्रवर्तयति । ऊरुभ्यां हि प्रजाः प्रजायन्ते । प्रजननाय । अन्तरत इव नु देवता । अन्तरतो ह्येषा वीर्यं करोति । दूरमुपर्युदूहेत । अहीतमुखी[3]स्या जायते । न दक्षिणा प्रवर्तयेत् । यद्दक्षिणा प्रवर्तयेत्पितृभ्यः प्रजा निधूवेत् । उदीचीः प्राची[4] प्रवर्तयति । एषा वै मनुष्याणां दिक् । मनुष्यलोक एवैना उपप्रजनयति ॥ ४[5] ॥ KS. XXVI, 1; MS. III, 8, 10; TS. VI, 3, 1; 5, 8.

उपसद्भिर्वै देवा इमांल्लोकानभ्यजयन् । तान्वैसर्जनैरभिव्यसृजन्त यथा ग्रामः संग्रामाद्विसृज्यते । तद्वैसर्जनानां वैसर्जनत्वम् । प्राञ्चं सोमं प्रणयन्ति । प्राचीं पत्नीमुदानयन्ति । इमानेवैतल्लोकानभिप्रयन्ति । अग्निना वै मुखेन देवा इमांल्लोकानभ्यजयन्गार्हपत्येनेममाग्नीध्रेणान्तरिक्षमाहवनीयेनामुम् । यद्गार्हपत्य इमं तेन लोकमभिजयति यदाग्नीध्रो ऽन्तरिक्षं तेन यदाहवनीयो ऽमुं तेन । स्वर्गाय वा एष लोकाय प्रह्रियते । द्वाभ्यां गार्हपत्ये जुहोति । द्विपाद्यजमानः । अस्यामेवैनमाक्रमयति । यदाग्नेय्याग्नीध्रे जुहोत्यन्तरिक्ष एवैनमाक्रमयति । यद्वैष्णव्याहवनीये जुहोति स्वर्गमेवैनं लोकं गमयति । स्वर्गो हि लोक आहवनीयः । रक्षांसि वा एतमेतर्हि जिघांसन्ति प्रच्युतामितो ऽप्राप्तमदः ॥

त्वं सोमेति सौम्या गार्हपत्ये जुहोति । सौमीरिमाः प्रजाः । प्रजाभ्य एवैनं प्राह । जुषाणो अप्तुरित्यप्तुमेवैनं कृत्वेमामतिनयति । यदाग्ने-

1. Thus KS. The ms. पशवः.

2. The ms. marks the close of the section by ॥ ४ ॥

3. The ms. ०दूर्हेताद्गातः.

4. ? Thus KS. The ms. उदीचीं प्राचीं.

5. The ms. ॥ ५ ॥

य्याग्नीध्रे जुहोत्यग्निमेवैनं कृत्वान्तरिक्षमतिनयति । यद्वैष्णव्याहवनीये जुहोति स्वर्गमेवैनं लोकं गमयति । स्वर्गो हि लोक आहवनीयः । सर्वेभ्यो वा एष आह्रियते मनुष्येभ्यः पितृभ्यो देवेभ्यः । त्वं सोमेति सौम्या गार्हपत्ये जुहोति। सौमीरिमाः प्रजाः । प्रजाभ्य एवैनं प्राह । जुषाणो अप्तुरिति पितृभ्य एवैनं प्राह । यदाग्नेय्याग्नीध्रे जुहोति । अग्निः सर्वा देवताः । देवताभ्य एवैनं प्राह । 5
वैष्णवो वै सोमः । तं देवतया व्यर्धयति यदन्यामन्यां देवतां करोति । यद्वैष्णव्याहवनीये जुहोति स्वयैवैनं देवतया समर्धयति । सर्वान्वा एतद्वरुणो गृह्णाति यद्दीक्षिते[2] मनुष्यान्पितॄन्देवान् । त्वं सोमेति सौम्या गार्हपत्ये जुहोति । सौमीरिमाः प्रजाः । प्रजा एव वरुणपाशान्मुञ्चति । [ जुषाणो अप्तुरिति पितॄनेव वरुणपाशान्मुञ्चति । यदाग्नेय्याग्नीध्रे जुहोति । अग्निः 10
सर्वा देवताः । देवता एव वरुणपाशान्मुञ्चति । ] सो ऽनृण इमांल्लोकानभिविसृजमान एति । तद्वैसर्जनानां वैसर्जनत्वम् । तस्मादाहुरपि वा एष देवतापितृभ्य[3] आरण्येभ्यः पशुभ्यो विसृजत इति ॥

आग्नीध्रे ग्राववायव्यानि सादयति । प्राञ्चं सोमं प्रणयति । एतैर्वा एतं घ्नन्ति । हन्तृभिरेवैनं व्यावर्तयति । न हन्तॄन्प्रतिपद्यते[4] य एवं वेद । न[5] पुर- 15
स्तात्प्रतिपद्येत[6] । रुद्रो वा अग्निः पशवो ऽशिवः । रुद्राय पशूनपिदध्यादपशुः स्यात् । पश्चात्प्राञ्चः प्रपद्यन्ते । श्रीर्वै सोमः । पश्चादेव प्राङ् श्रियमाप्नोति । तस्मात्पश्चात्प्राचीः प्रजाः क्षेत्राण्यभिजयन्तीर्यन्ति । पुरस्ताद्गतश्रीः प्रपद्येत । पुरस्तादेव प्रत्यङ् श्रियमाप्नोति । इममेव लोकमभि प्रतितिष्ठति । पश्चात्सोमं प्रपादयन्ति पुरस्ताद्यजमानः प्रपद्यते । उभयत एवास्मै श्रियं परिगृह्णाति ॥ 20

उर्वन्तरिक्षं वीहीति । अन्तरिक्षदेवत्यो ह्येष एतर्हि । अदित्यास्त्वगस्यदित्याः सदने सीदेति । आदित्यो वै सोमः पृथिव्यदितिः । पृथिव्या अनः संभृतम्[7] । स्व एवैनं योनौ दधाति । देव सवितरेष ते सोम इति । सविता वै देवानाम-

1. KS. ०मपि०. But compare the preceding sentence.
2. Thus the Kāṭh. and Kap. mss.
3. Thus the ms. KS. एतर्हि for एष देवतापितृभ्य.
4. The ms. ०पस्यते (for ०पत्स्यते ?).
5. न is missing both in KS. and Kap. mss. Cf. ĀpŚr. XI, 17, 8.
6. The ms. प्रपदेत.
7. Thus KS. The ms. संभृतं.

......[1][ जुष्टं विष्णव इति । ] यज्ञो वै विष्णुः । यज्ञायैवैनं जुष्टं करोति । देवस्त्वा सविता मध्वानक्त्विति । घृतं वै देवानां मधु । मेध्यमेवैनं यज्ञियं करोति । ओषधे त्रायस्वैनमिति वर्मेव करोति । स्वधिते मैनं हिंसीरिति । वज्रो वै स्वधितिः । अहिंसायै । यः प्रथमः शकलः परापतति तमाहरेत् । एतं वा एतस्य परापतन्तं तेजो ऽनुपरापतति । सतेजसमेवैनं मिनोति । 5
यो दक्षिणावृत्त तं वृश्चेत् । गर्त्यः सः । य उदङ्कावृत्तो[2] न तम् । स्थूण्यः[3] सः । यं[4] ऊर्ध्वशाख ऊर्ध्वशकलस्तं वृश्चेत् । एष वै यूप्यः । य एव यूप्यस्तं वृश्चति । यो ऽशुष्काग्रो बहुशाखो बहुपर्णस्तं वृश्चेत् । ओषधयो वै वनस्पतयः पशव ओषधयः । पशुभिरेवैनं समर्धयति । यः शुष्काग्रो ऽशाखो ऽपर्णस्तं वृश्चेद्यं द्विष्यात्तस्य । ओषधयो वै वनस्पतयः पशव ओषधयः । पशुभिरेवैनं व्यर्धयति । य उदङ् प्राङुपनतस्तं वृश्चेत् । एष वै मेधमभ्युपनतः । य एव मेधमभ्युपनतस्तं वृश्चति । 10

1. The Kāṭhaka reads:

न दीक्षितेन होतव्यम् । हविर्वै दीक्षितो रुद्रो ऽग्निः । यज्जुहुयाद्धविर्भूतमात्मानं रुद्रायापिदध्यात् । यन्न जुहुयाद्यज्ञपरुरन्तरियात् । यदि क्रीतस्सोमस्स्याद्दीक्षितस्याग्नौ जुहुयात् । विसृष्टो हि तर्हि यज्ञः । प्रेता आहुतयो भवन्ति । यद्यक्रीतो ऽरणी चाज्यं चादाय परेत्याग्निं मथित्वा वैष्णव्यर्चा यूपस्यान्ते जुहुयात् । वैष्णवो वै यूपः । स्वयैवैनं देवतयाच्छैति । **अत्यन्यानगां नान्यानुपागाम्**मित्यति ह्यन्यानेति नान्यानुपैति । **यान्नाजुजोषं परि तानवृज**मिति यान्हि न जुषते परि तान्वृणक्ति । **अर्वाक्त्वा परेभ्यो ऽविदं परो ऽवरेभ्य** इत्यर्वाग्घ्येनं परेभ्यो विन्दति परो ऽवरेभ्यः । **तं त्वा जुषामहे वनस्पते देवयज्याया** इति देवयज्यायै ह्येनं जुषते ।

2. ? The ms. उदंदुवृत्तो (=उदङ्ङुदवृत्तो ?). KS. उदङ्कावृतो.

3. The ms. स्थूण्यं.

4. The Lahore copy य कुर्व, but Utrecht copy य ऊर्ध्व.

द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या संभवेति । वज्रो वै यूपः । एषां लोकानामहिंसायै । उदश्चं प्राञ्चं प्रश्रयति[1] । एष वै देवलोकः । देवलोकमेवैनमुपप्रश्रयति[2] । वनस्पते शतवल्शो[3] विरोहेत्याव्रश्चने जुहोति । वनस्पतिष्वेव भूमानं दधाति । तस्मादेत आव्रश्चनाद्भूयांसो जायन्ते ।
5 सहस्रवल्शा[4] वि वयं रुहेमेत्याशिषमेवाशास्ते । यं त्वायं स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति । महते ह्येष सौभाग्याय प्रणीयते यद्यज्ञाय प्रणीयते । य आरोहस्तं वृश्चेद्यं द्विष्यात्तस्य । अयोनिर्वा एषो ऽनायतनो य आरोहः । अयोनिमेवैनमनायतनं करोति । यः स्वारुत्तं वृश्चेत् । एष वै योनिमानायतनवान्यः स्वारुत् । योनिमन्तमेवायतनवन्तं यजमानं
10 करोति । गुल्फदघ्ने वृश्चेत् । परुर्हि गुल्फः । यज्ञपरुषा[5] संमितम् । जानुदघ्ने वृश्चेत् । परुर्हि जानु । यज्ञपरुषा संमितम् । यावत्यनक्षसङ्गः स्यात्तावति वृश्चेत् । यज्ञपरुषा संमितम् । पशूनामप्रतिनोदाय ॥ १ ॥

Cf. II, 9; KS. XXVI, 3; III, 2; MS. III, 9, 2. 3; I, 2, 14; TS. VI, 3, 3; I, 3, 5.

पशुसंमितो व्रष्टव्यो दशारत्निः । दश वै पशोः प्राणा आत्मैकादशः । अष्टाश्रयो द्वे परुषी आत्मैकादशः । पशुसंमितमेव वृश्चति ।
15 स्तोमसंमितो व्रष्टव्यो नवारत्निः । तेजसा त्रिवृता संमितः । पञ्चदशारत्निर्व्रष्टव्यः पञ्चदशेन संमितः । वज्रः पञ्चदशः । वज्रेण संमितः । सप्तदशारत्निर्व्रष्टव्यः सप्तदशेन संमितः । प्रजापतिः सप्तदशः । प्रजापतिना संमितः । एकविंशत्यरत्निर्व्रष्टव्य एकविंशेन संमितः । असावादित्य एकविंशः । आदित्येन संमितः । सप्तविंशत्यरत्निर्व्रष्टव्यः
20 सप्तविंशेन संमितः । त्रिणवा इमे लोकाः । एभिर्लोकैः संमितः । त्रयस्त्रिंशदरत्निर्व्रष्टव्यस्त्रयस्त्रिंशेन संमितः । त्रयस्त्रिंशद्देवताः । देवताभिः संमितः । छन्दःसंमितो व्रष्टव्यः । पञ्चारत्निः पङ्क्त्या छन्दसा संमितः । षडरत्निरतिच्छन्दसा संमितः । सप्तारत्निः शक्वर्या संमितः ।

1. The ms. ॰तु.
2. The ms. ॰मुपप्रयाति.
3. The ms. ॰वलिशो.
4. The ms. ॰वलिशा.
5. The ms. ॰पुरुषा.
6. KS. त्रिंश॰ to be corrected.

अष्टारत्निर्गायत्र्या संमितः । नवारत्निर्बृहत्या संमितः । दशारत्निर्विराजा संमितः । एकादशारत्निस्त्रिष्टुभा संमितः । द्वादशारत्निर्जगत्या संमितः । त्रयोदशारत्निः साध्यैर्देवैः संमितः । बृहन्नपरिमितो व्रष्टव्यः । यूपाद्वै देवाः स्वर्गं लोकमायन् । स्वर्गस्य लोकस्य समष्ट्यै । य एव कश्च पुरुषाद्वर्षीयान्स्यात्तं वृश्चेत् । एषा वै यूपस्य मात्रा । यावानेव 5
यूपस्तं वृश्चति । चषालं भवति । चषालाद्वै देवाः स्वर्गं लोकमायन् । स्वर्गस्य लोकस्य समष्ट्यै । इन्द्रो वै वृत्राय वज्रं प्राहरत् । तस्य यावदालब्धमासीत्तत्प्राशीर्यत । तच्चषालं प्रत्यवृञ्जन् । यच्चषालं भव[ति द्रढिम्न एवालब्ध्या अ]शिथिलत्वाय । इयद्भवति । एतावद्धि तदाहुर्लब्धमासीत् । न यूपस्यातिरेचयेत् । यदतिरेचयेदर्बुदिनीर्जनयः स्युः । 10
यावदुत्तममङ्गुलिकाण्डं तावदतिरेचयेत् । यज्ञपरुषा[1] संमितम् । पशूनामप्रतिनोदाय । यद्वै यज्ञस्यातिरिच्यते साध्यीस्तद्देवानभ्यतिरिच्यते । यज्ञस्यैतदतिरिच्यते यद्यूपस्यातिरिच्यते । साध्यानेव तेन देवान्प्रीणाति । अन्यस्य वृक्षस्य चषालं कुर्याद्यस्य च यूपः स्याद्यं कामयेत भ्रातृव्यमस्मै जनयेयमिति । भ्रातृव्या वा एतस्यान्ये वनस्पतयः । भ्रातृव्यमे- 15
वास्य लोकमभ्यारोहयत्यलोकमेनं करोति ॥ २ ॥ Cf. KS. XXVI, 4; MS. III, 9, 2; TS. VI, 3, 3.

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति यूपं प्रोक्षति । एभ्य एवैनं लोकेभ्यः प्रोक्षति । अस्मै वै लोकायौदुम्बरी मीयतेऽमुष्मै यूपः । तस्मादितः पराञ्चं यूपं प्रोक्षत्यमुतोऽर्वाचीमौदुम्बरीमनयोर्लोकयोर्विधृत्यै । देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते । सवितृप्रसूत एवैनां देवता- 20
भिरादत्ते । इदमहं रक्षसो ग्रीवा अपिकृन्तामीति । भ्रातृव्यो वै रक्षः । भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति । शुन्धन्तां लोकाः पितृषदना इति शुन्धत्येवैनम् । अथो यदेवास्य खनन्तः क्रूरं कुर्वन्ति तच्छमयति । यवमतीरवासिञ्चति । अन्नं वै यवास्तेजो यूपः । अन्न एव तेजो दधाति । अन्नं वै यवा वज्रो यूपः । अन्न एव वज्रं दधाति । पितृषदनं त्वा लोक- 25

1. The ms. ०पुरुषा.

मास्तृणामीति । यद्वा एतमपबर्हिषं मिनुयुर्गर्तमित्स्यात् । अस्या उत्त-
रार्धमोषधयः[1] । अस्या एवैनमुत्तरार्धे मिनोत्यगर्तमितमेवाकः । स्वावेशो
ऽस्यग्रेगा नेतॄणामिति यूपशकलमवास्यति । ऋच्छो वा एष तष्टो ऽमेध्यो[2]
ऽपशव्यः । सत्वचसमेवैनं मिनोति । घृतेन द्यावापृथिवी आपृणातामिति
5 घृतेनैव द्यावापृथिवी व्युनत्ति । तस्मादोषधयो ऽनभ्यक्ता रेभन्ते ।
देवस्त्वा सविता मध्वानक्त्विति । घृतं वै देवानां मधु । मेध्यमेवैनं यज्ञियं
करोति । सुपिप्पला[3] ओषधीस्कृधीति चषालं प्रतिमुञ्चति । ओषधीरेव फलं
ग्राहयति । तस्मादेता अकृष्टपच्याः पच्यन्ते । घृतेनाग्निष्ठामनक्ति ।
तेजो वै घृतं यजमानो ऽग्निष्ठाः । तेजसैव यजमानं समर्धयति । आन्तं
10 संततमनक्ति तेजसः संतत्या अविच्छेदाय । यं द्विष्यात्तस्य विच्छिन्द्यात् ।
तेजसैवैनं व्यर्धयति । सर्वतो ऽनक्ति । सर्वत एवैनं तेजसा समर्ध-
यति । द्यामग्रेणास्तम्भीरान्तरिक्षं मध्येनाप्राः पृथिवीमपरेणादृंहीरिति । वज्रो
वै यूपः । एषां लोकानां विधृत्यै । ता वां वास्तूनीति वैष्णव्यावह-
रति । वैष्णवो वै यूपः । स्वयैवैनं देवतयावहरति । विष्णोः कर्माणि
15 पश्यतेति वैष्णव्या कल्पयति । वैष्णवो वै यूपः । स्वयैवैनं देवतया
कल्पयति । अग्निं प्रत्याग्निष्ठां कुर्यात् । तेजो वा अग्निर्यजमानो ऽग्निष्ठाः ।
तेजसैव यजमानं समर्धयति । यं द्विष्यात्तस्येत्थं वेत्थं वा नमयेत् ।
तेजसैवैनं व्यर्धयति । ब्रह्मवनिं त्वा क्षत्रवनिमित्याशिषमेवाशास्ते ।
ब्रह्म दृंह क्षत्रं दृंहेत्याशिषमेवास्मा आशिष्टां दृंहति । तद्विष्णोः परमं
20 पदमिति वैष्णव्योदीक्षते । वैष्णवो वै यूपः । स्वयैवैनं देवतयोदीक्षते
॥ ३ ॥ Cf. II, 10; KS. XXVI, 5; III, 3; MS. III, 9, 3; I, 2, 14; TS. VI, 3, 4; I, 3, 6.

अर्धं वेद्यां यूपावटस्य कुर्यादर्धं बहिर्वेदि परिमितस्य चापरिमि-
तस्य चावरुद्ध्यै । नाविरुपरस्य कुर्यात् । यदाविरुपरस्य कुर्याद्गर्तमि-
त्स्यात् । नापरिवीतमवसृजेत् । यदपरिवीतमवसृजेत्क्षोधुको यजमानो
25 भवति नग्नंभावुको[4] ऽध्वर्युः । ऊर्ग्वै रशना । मध्यं प्रतिपरिव्ययति ।

1. KS. उत्तरार्धं ओ०.
2. The ms. मध्य. KS. omits ऽमेध्यो.
3. The ms. ०ष्प०.
4. The ms. भवत्यन०.

ऊर्जमेव मध्यतो दधाति यजमाने[1] च प्रजासु च । तस्मान्मध्यतः प्रजा ऊर्गूर्जयति । अरशनं मिनुयाद्यं द्विष्यात्तस्य । ऊर्ग्वै रशना । ऊर्जैवैनं व्यर्धयति । ऊर्ध्वामुदूहेदवाचीं यं द्विष्यात्तस्य । ऊर्ग्वै रशना । ऊर्जैवैनं व्यर्धयति । उपरि दूरे परिव्ययेद्यदि कामयेत वर्षेदिति । अद्भ्यो वा एष ओषधिभ्यो वर्षति यर्हि वर्षति । ओषधयो रशना । ओषधीरेव [ नेदीयो वृष्ट्याः करोति ताजक्प्रवर्षति । अधो दूरे परिव्ययेद्यदि कामयेत न वर्षेदिति । अद्भ्यो वा एष ओषधिभ्यो वर्षति यर्हि वर्षति । ओषधयो रशना । ओषधीरेव ] दवीयो वृष्ट्याः करोति चिरं प्रवर्षति । परिवीरसि परि त्वा दैवीर्विशो व्ययन्तामिति । दैवीर्वा एता विशो यदोषधयः । ओषधयो रशना । यजमानो यूपः । यजमानमेव प्रजा अभिसंमुखीः[2] करोति । परीमं रायो मनुष्यमिति । पशवो वै रायः । पशुभिरेवैनं समर्धयति[3] । अन्तरिक्षस्य सानूपेषेति स्वरुमुपोहति । अन्तरिक्षदेवत्यो ह्येष एतर्ह्युपरीवास्माल्लोकादधो ऽमुष्मात् । स्वयैवैनं देवतयो[4]पोहति । पितॄणामुपरं मनुष्याणामूर्ध्वमुपरादोषधीनां रशनां प्रति विश्वेषां देवानामूर्ध्वं रशनाया इन्द्रस्य चषालं साध्यानामतिरिक्तम् । एवमिव वा एषु लोकेषु पितरो मनुष्या देवाः । सर्वदेवत्यो यूपः । सर्वाभिरेवैनं देवताभिः समर्धयति । अग्नेरर्धादुपनतं यूपस्य कुर्याद्बहिष्टान्निर्णतम् । अग्नेर्वा अर्धादुपनतेन यजमानाय लोकं करोति बहिष्टान्निर्णतेन भ्रातृव्यं यज्ञान्निर्णुदते । यज्ञेन वै देवाः स्वर्गं लोकमायन् । ते ऽकामयन्तेमं नो लोकमन्यो नानुप्रजानीयादिति । ते दिशो ऽयोपयन् । यद्दिशो ऽयोपयंस्तद्यूपस्य यूपत्वम् । ते ऽमुं लोकं गत्वा व्यतृष्यन् । ते ऽविदुरमुतःप्रदानाद्वा इहाजगामेति । त एतं पुनः प्रायच्छन् । तेनाध्नुवन् । एष वै यज्ञस्य तन्तुरेष[5] उत्तमपदी । यथा वै मयूखात्तन्त्रं तायत एवमतो यज्ञस्तायते । तं ह स्म वा एतं पुरावृश्चैवं[6] जुह्वति । यत्स्वरुं जुहोत्येतस्यैव निष्क्रीत्यै । सो ऽस्य निष्क्रीतः प्रीतः स्वगाकृत इमांल्लोकाननुपातिष्ठते ।

1. The ms. यजमानेषु. Cf. XL, 3 (p. 224, l. 4).
2. KS. °मुखाः. So also Kap. XL, 3 (p. 225, l. 8).
3. The ms. समर्थ°.
4. KS. देवतया° to be corrected.
5. The ms. विल्मरेष.
6. Thus KS. The ms. °व्रश्चैव.

द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहेतीमानेवैनं लोकान्गमयति ॥ ४ ॥ Cf. II, 10; KS. XXVI, 6; III, 3; MS. III, 9, 4; I, 2, 14; TS. VI, 3, 4; I, 3, 6.

साध्या वै नाम देवा आसन्पूर्वे देवेभ्यः । तेषां न किंचन स्वमासीत् । ते ऽग्निं मथित्वाग्नौ जुह्वत आसत[1] । तस्माद्धन्धोः[2] पशवो ऽजायन्त । तस्मादा-
5 ग्नेयाः सर्वे पशव उच्यन्ते । यदग्निं मथित्वा पशुमालभते प्रजातमेवैनमालभते । अथो यथापूर्वमेव करोति । तदाहुः पशुमालभ्याग्निर्मथितव्य इति । अग्निः सर्वा देवताः । सर्वा एव देवताः पशवः । आलब्धाय जनयति । पशुना सर्वाणि सवनानि पशुमन्ति वीर्यावन्ति कर्तव्यानि । यद्वपया प्रातःसवने चरन्ति तेन तत्पशुमद्वीर्यावत् । यत्पुरोडाशेन मध्यन्दिने चरन्ति तेन तत्प-
10 शुमद्वीर्यावत् । यदितरेण पशुना तृतीयसवने चरन्ति तेन तत्पशुमद्वीर्यावत् । सर्वाण्यस्य सवनानि पशुमन्ति वीर्यावन्ति भवन्ति य एवं वेद । सर्वाभ्यो वा एष दिग्भ्य ऋद्धया आलभ्यते यत्पशुः । यत्प्राचीनं[3] प्रीणन्ति देवलोकं तेनाभिजयति । यदुदञ्चमाप्रीतं नयन्ति मनुष्यलोकं तेनाभिजयति । यद्द-क्षिणतः परिहृत्यावद्यन्ति पितृलोकं तेनाभिजयति । यत्प्रतीचीनं समवत्तं
15 हरन्त्येतां तेन दिशमभिजयति । यदूर्ध्वस्तिष्ठञ्जुहोति स्वर्गं तेन लोकमभिजयति ॥

पशुना वै देवाः स्वर्गं लोकमायन् । ते शरीरमधून्वत । स्वर्गो वपा । यद्वपया प्रातःसवने चरन्ति स्वर्गस्य लोकस्य समष्ट्यै । यदितरेण पशुना तृतीयसवने शरीरस्य निष्क्रीत्यै । यार्द्रा बहुपर्णा तयोपाकुर्यात् । ओषधयो
20 वै वनस्पतयः पशव ओषधयः । पशुभिरेवैनं समर्धयति । या शुष्कापर्णा तयोपाकुर्याद्यं द्विष्यात्तस्य । ओषधयो वै वनस्पतयः पशव ओषधयः । पशुभिरेवैनं व्यर्धयति । घोरो वा अन्यो वज्रः शिवो ऽन्यः । यः शुष्कः स घोरो य आर्द्रः स शिवः । य एव शिवस्तेनोपाकरोति । बर्हिषोपाकरोति । पशवो वै बर्हिः । पशुभिरेवास्मै पशूनुपाकरोति । उपावीरसीत्युप ह्येषो ऽवति ।

1. Thus KS. The ms. जुह्वता अग्नेस्. 3. KS. यत्प्राञ्चमा॰.

2. Thus KS. The ms. तस्माद्धन्द्धो.

उप देवान्दैवीर्विशः प्रागुरिति । दैवीर्वा एता विशो यत्पशवः । पशूनेवास्मा उपाकरोति । वह्नीनुशिज इति । ऋत्विजो वै वह्नय उशिजः । ऋत्विग्भ्य एवै-नानुपाकरोति । बृहस्पते धारया वसूनीति । ब्रह्म वै बृहस्पतिः । ब्रह्मणः[1] प्रजाः प्रजायन्ते । ब्रह्मणैवैनाः प्रजनयति । देव त्वष्टर्वसु रणेति । त्वष्टा वै रूपाणां[2] विकर्ता । सो ऽस्मै रूपाणि विकरोति । रेवती रमध्वमिति । ब्रह्म वै 5
बृहस्पतिः पशवो रेवतीः । ब्रह्मणैवास्मै पशून्यच्छति । अग्नेर्जनित्रमसीति । अग्नेर्ह्येतज्जनित्रम् । वृषणौ स्थ इति । न ह्यमुष्काः प्रजाः प्रजायन्ते । प्रजननाय । उर्वश्यस्यायुरसि पुरूरवा असीति । माता वा उर्वश्यायुर्गर्भः पिता पुरूरवा रेतो घृतम् । घृतेनारणी यत्समनक्ति मिथुन एव रेतो दधाति । गायत्रं छन्दो ऽनुप्रजायस्व ॥ त्रैष्टुभम् ॥ जागतमिति । 10
एतावन्ति वै छन्दांसि । छन्दोभी रेतो हितं प्रजायते । छन्दोभिरेवास्मै रेतो हितं प्रजनयति । दक्षिणा वर्तयति । एषा वा आदित्यस्य प्रज-निष्णुस्तनूः । तामेवानुप्रजायते । अग्नी वा एतर्हि यजमानमभिसंधत्तः । भवतं नः समनसाविति समनसावेवैनौ करोति । मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसावित्यात्मनो[3] ऽहिंसायै । शिवौ भवतमद्य न इति शि- 15
वावेवैनौ कुरुते । रक्षसां वा एते ऽनवजयार्थं[4] परिधीयन्ते यत्परिधयः । यदुपर्युपरि प्रहरेद्रक्षोभ्यस्तीर्थं कुर्यात् । संधिना वा प्रहरत्यग्रेण वा । अतीर्थेनैवं[5] स्रुवेण जुहोति । संजग्मानाभ्यामेवाभ्यां भागधेयमपिदधाति ॥ ५ ॥ Cf. II, 11; KS. XXVI, 7; III, 4; MS. III, 9, 5. 6; I, 2, 15. 7; TS. VI, 3, 5. 6; 1, 3, 7.

सावित्रीमन्वाह । सवितृप्रसूत एवैनं प्रजनयति । एकदेवत्याम- 20
न्वाह । एकधैवैनं प्रजनयति । यद्द्विदेवत्यामनुब्रूयाद्भ्रातृव्यमस्मै

1. The Kap. and KS. mss. ब्रह्मणाः. Schroeder emended it to ब्रह्मणा. But compare KS. XXVIII, 8 (p. 162, ll. 14-15) ब्रह्म वै बृहस्पतिः । ब्रह्मणः प्रजाः प्रजायन्ते । ब्रह्मणैवैनाः प्रजनयति.

2. The ms. रूपाणि.

3. KS. ०वेदस इत्या० to be corrected to ०वेदसा इत्या०.

4. Thus KS. The ms. ए ते न वि शे यां य.

5. KS. तीर्थेनैव to be corrected. Cf. KS. XXVI, 8 (p. 132, l. 1) रक्षोभ्य एवा-तीर्थं करोति.

द्वितीयं जनयेत् । द्यावापृथिव्यामन्वाह प्रजानां प्रजातानां परिगृहीत्यै । न धूमवतीमनुब्रूयात् । इन्द्रो वै यद्वृत्रमहंस्तस्य यत्रयत्र व्यृद्धमासीत्ततो धूम उदायत । व्यृद्धाद्वा एष -जातः । व्यर्धुकमस्मै भवति । यदि मथ्यमानो न प्रजायेत रक्षोघ्नीमनुब्रूयाद्रक्षसामपहत्यै । अनवा-
5 नमनुब्रूयात् । अवानं वा अनु यज्ञं रक्षांसि जिघांसन्ति । रक्षोभ्य एवातीर्थं करोति । गायत्रीं ब्राह्मणस्यानुब्रूयात् । गायत्रो हि ब्राह्मणः । त्रिष्टुभं राजन्यस्य । त्रैष्टुभो हि राजन्यः । जगतीं वैश्यस्य । जागतो हि वैश्यः । यथाछन्दसमेव ॥

देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते । सवितृप्रसूत एवैनां
10 देवताभिरादत्ते । ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति । यो वै यज्ञियो मेध्यः स ऋतस्य पाशः । तेनैवैनमालभते । अमुष्मै जुष्टमिति यस्या देवताया आलभते तस्या एनं जुष्टं करोति । धर्षा मानुषा इति । वज्रो वै यूपः पशवो मानुषाः । वज्रेणैवास्मै पशून्यच्छति । ऋक्षो वा एष तष्टो ऽमेध्यः । यत्पशुं नियुनक्ति[2] मेध्यमे-
15 वैनं यज्ञियं करोति । पुरस्ताद्वै पशवो मेधमुपतिष्ठन्ते । देवता एतस्मिन्प्राणाः । यत्पुरस्तात्प्रत्यञ्चमाप्रीणन्ति देवतानामेवैनम्[3]आप्रीणन्ति । अद्भ्यस्त्वौषधीभ्य इति । अद्भ्यो वा एष ओषधिभ्य आलभ्यते यत्पशुः । अद्भ्य एवैनमोषधिभ्यः प्रोक्षति । अनु त्वा माता मन्यतामनु पितेति । पिता च ह्येतस्य माता चानुमन्तारौ । आपो वै सर्वा देवताः ।
20 सर्वदेवत्यः पशुः । सर्वाभिरेवैनं देवताभिः समर्धयति । बहु वा एषो ऽमेध्यमेवैनमयज्ञियं निगच्छति यत्पशुः । आपो मेध्या यज्ञियाः । यदद्भिः प्रोक्षति मेध्यमेवैनं यज्ञियं करोति । अपां पेरुरसीत्यप उपगृह्णाति । यान्यन्तरतो ऽवदानानि तानि तन्मेध्यानि करोति । स्वात्तं हव्यं देवेभ्यो घृतवदित्युरः प्रत्युपोक्षति । यान्यधस्तादवदानानि

1. The ms. वृधा.

2. Thus KS. The ms. यत्पशुमयक्षनिगछति रायो मेध्यायज्ञयर्यद् प्रोक्षति त्रियुक्तभक्ति. Cf. बहु वा एषो……प्रोक्षति in ll. 20–22.

3. KS. adds अर्धं after एनं.

तानि तन्मेध्यानि करोति । सर्वत उपोक्षति । सर्वत एवैनं मेधेन समर्धयति । शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुः । यदाघार-माघार्य पशुं समनक्ति शिर एव यज्ञस्यात्मन्प्रतिदधाति । सं ते वायुः प्राणेन गच्छतामिति वायुमेवास्य प्राणं गमयति । सं यजत्रैरङ्गा-नीति । देवता यजत्राः । देवता एवास्याङ्गानि गमयति । सं यज्ञपति-राशिषेत्याशिषैव यजमानं समर्धयति ॥ ६ ॥ Cf. II, 12; KS. XXVI, 8; III, 5; MS. III, 9, 5. 6; I, 2, 15; TS. VI, 3, 6. 7; I, 3, 8.

ऋत्विजो वृणीते । छन्दांसि वा ऋत्विजः । छन्दांस्येव तद् वृणीते । तैरस्य वृतैर्युक्तैर्वषट्काराः पुरो युज्यन्ते । होतारं वृणीते । जगतीं तच्छन्दसां वृणीते । अग्निधं वृणीते । पङ्क्तिं तच्छन्दसां वृणीते । अध्वर्युं वृणीते । अतिच्छन्दसं तच्छन्दसां वृणीते । अन्तरा होतारं चाध्वर्युं चाग्निधं वृणीते । तस्मादग्निर्मध्यत ओषधीः प्रविष्टः । यदु-त्तमः संयजति तस्मादुपरिष्टान्मथ्यमानो जायते । मैत्रावरुणं वृणीते । गायत्रीं तच्छन्दसां वृणीते । ब्राह्मणाच्छंसिनं वृणीते । त्रिष्टुभं तच्छन्दसां वृणीते । पोतारं वृणीते । उष्णिहं तच्छन्दसां वृणीते । नेष्टारं वृणीते । ककुभं तच्छन्दसां वृणीते ॥

पश्वाजमिव वा एतच्छन्दो यदनुष्टुप् । पश्वाजेवैषा होत्रा यदच्छावा-कया । तस्मादच्छावाकमुपैव ह्वयन्ते न वृणते । अथैता आप्रियः । प्रजापतिः प्रजाः सृष्ट्वा स रिरिचान इवामन्यत । स एता आप्रीर-पश्यत् । ताभिरात्मानमाप्रीणीत । यज्ञः प्रजापतिर्यज्ञात्मा यजमानः । यदेताः पूर्वार्धे यज्ञस्य क्रियन्ते मुखत एव यजमानमाप्रीणाति । प्रया-जान्यजति । प्राणा वै प्रयाजाः । प्राणानेव तत्प्रयजति । तत्प्रयाजानां प्रयाजत्वम् ।ताननुयाजैरन्वाप्रीणाति । तदनुयाजानामनुयाजत्वम् । अ-नवानमाप्रीणीयाद्यं कामयेत सर्वमायुरियादिति । प्राणा वै प्रयाजाः । अविच्छिन्नानेवास्मिन्प्राणान्प्रतिदधाति सर्वमायुरेति । आत्मा वै पशोर्व-पात्मा यजमानस्याप्रीः । यदुत्तमाप्रीर्वपां परिशय आत्मैवात्मानं परि-शये यज्ञस्य संतत्या अविच्छेदाय । एकादश प्रयाजा एकादशानुयाजा

एकादशोपयजः । एतावतीर्वै देवताः । सर्वदेवत्यः पशुः । सर्वाभिरे-
वैनं देवताभिः समर्धयति ॥

त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपाः । अष्टौ वसव एका-
दश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च ते सोमपाः । प्रयाजा
5 अनुयाजा उपयजस्ते ऽसोमपाः । तस्मात्ते बहिर्यज्ञं क्रियन्ते । सोमेनैव
तद्देवान्सोमपान्प्रीणाति पशुनासोमपान् । ते ऽस्योभये प्रीता यज्ञे भवन्ति ।
एतद्ध वा उवाच श्यापर्णः सायकायनो ऽषाढं कैशिनं[1] यत्रैनमदः सोमा-
न्नयति यदि वै मा सोमान्नेष्यस्युभयैर्मा देवैः सह नेष्यसि सोमपैश्चासो-
मपैश्च । विदेवस्ते[2] यज्ञो ऽवहास्यते । अथो यव्यश्वं मा नेष्यन्ति तत-
10 स्त्वाभीत्य ज्यास्यन्तीति । ते मीमींसित्वेतो नो भयं नास्तीति दक्षिणा
प्रत्यश्वं निन्युः । ततः कुन्तयः[3] पञ्चालानभीत्य जिनन्ति । य एवं-
विद् सोमान्नयत्युभयैरेनं देवैः सह नयति सोमपैश्चासोमपैश्च । विदेवो
ऽस्य यज्ञो ऽवहीयते । अथो यव्यश्वमेनं नयन्ति तत एनमभीत्य
जिनन्ति ॥ ७ ॥ Cf. KS. XXVI, 9; MS. III, 9, 8; TS. VI, 3, 7.

15 देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकु-
र्वत तदसुरा अकुर्वत । ते देवा एतमुपांशुमपश्यन् । त एतस्मिन्यज्ञे
संस्थाप्यमपश्यन् । त एतस्मिन्नेव यज्ञे समस्थापयन् । अष्टौ कृत्वो
ऽभ्यषुण्वन् । गायत्रीं तच्छन्द आप्नुवन् । एकादश कृत्वः । त्रिष्टुभं
तत् । द्वादश कृत्वः । जगतीं तत् । त्रिर्व्यगृह्णन् । सवनान्येव
20 तदाप्नुवन् । ते देवा यावानेव यज्ञस्तं परिगृह्योपोदतिष्ठन्होतुम् । ते
ऽसुरा अपश्यञ्जुह्वति वै देवा इति । तान्वज्रमुद्यत्याभ्यपतन् ।
ते देवा अन्तर्यामेणान्तरदधतैभ्यो लोकेभ्यः । ततो देवा अभवन्प-
रासुरा अभवन् । यस्यैवं विदुष उपांशुं जुह्वति यश्चैवं[4] विद्वाञ्जुहोत्ये-
भ्य एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते भवत्यात्मना परास्य भ्रातृव्यो

1. Thus KS. The ms. शापर्णस्सयेनोषाभंक्के-
शिम.

2. The ms. °ष्टे.

3. The ms. कुंचयः.

4. KS. and Kap. mss. यस्यैवं.

भवति । अथ ह स्माहारुण औपवेशिः[1] किमु स यजेत य उपांशौ यज्ञे संस्थाप्यं न विद्यादिति । अष्टौ कृत्वो ऽभिषुणोति । गायत्रीं तच्छन्द आप्नोति । एकादश कृत्वः । त्रिष्टुभं तत् । द्वादश कृत्वः । जगतीं तत् । त्रिर्निगृह्णाति । सवनान्येव तदाप्नोति । उपांशावेवैतद्यज्ञे संस्थाप्य तेन[2] संस्थितेनारिष्टेनाघात्येन प्रचरति । अष्टावष्टावभिषुणुयाद्ब्रह्मवर्चसकामस्य । अष्टाक्षरा गायत्री । गायत्रीमेव यज्ञमुखे[3] ऽधि वियातयति । गायत्र्यामेवैतत्तेजसि स्वे योनौ स्वर्गे लोके यज्ञमुखं तायते । मुख्यो भवति य एवं वेद । नोपयामगृहीतो ऽसीति ब्रूयात् । इयं वा उपयामः । अनया प्राणानपिहन्यात् । न पवित्रं वितन्वन्ति । अन्तरिक्षं वै पवित्रम् । अन्तरिक्षेण प्राणान्परिगृह्णीयात्प्रमीयेत । अयं वाव यः पवते स प्राणः । तस्येदमपग्राहं प्राणिमः । यन्नोपयामगृहीतो ऽसीत्याह न पवित्रं वितन्वन्ति । तस्मादयमपरिगृहीतः । काममित्थं चेत्थं च पवते । तस्मात्कामं प्राणिमः । प्राणपवित्रो वा उपांशुः । प्राणैरेवैनं पावयति । षडंशून्परि[4]गृह्णाति । तस्मात्षट् प्राणाः । द्वन्द्वं पावयति । तस्मात्प्राणा द्वन्द्वम् । उपांशुसवनादुपांशुं निगृह्णाति । प्राणो वा उपांशुसवनः प्राण उपांशुः । प्राणादेव प्राणं निगृह्णाति । उत्तर उपांशुसवनो भवत्यधरे ऽंशवः । प्राणो वा उपांशुसवनः प्रजा अंशवः । प्रजास्वेवं[5] प्राणं [ दधाति । ] तस्मात्प्राण उत्तमः ॥ ८ ॥

Cf. KS. XXVI, 10; MS. IV, 5, 5. 6; TS. VI, 4, 5. 6.

इति कपिष्ठलकठसंहितायामेकचत्वारिंशत्तमो ऽध्यायः ॥

1. The ms. उपवेशः.
2. KS. यज्ञस्संस्थाप्यते न to be corrected. Cf. MS. p. 70, l. 2.
3. The ms. गायत्री यज्ञमुखेन.
4. The ms. अपि for परी.
5. KS. ०वं.

वाचस्पतये पवस्वेति वाच आधिपत्याय पवस्वेत्येवैतदाह । तस्मा-
देतया कामं वदामश्च प्र चानिर्मः । प्रजापतिर्वा इदमासीत् । तस्य वा-
ग्द्वितीयासीत् । तां मिथुनं समभवत् । सा गर्भमधत्त । सास्मा[दपाक्रामत् ।
सेमाः प्रजा असृजत । सा प्रजापतिमेव पुनः प्राविशत् । वाचस्पतये पवस्वेति ।
5 एतस्मा]देव मिथुनात्प्रजया च पशुभिश्च प्रजायते । वाचस्पतये पवस्वेति ।
ब्रह्म वै वाचस्पतिः । ब्रह्मणैवैनं पावयति । वृष्णो अंशुभ्यां गभस्तिपूत इति ।
इन्द्रो वै वृषा । तस्य हस्तौ गभस्ती । ताभ्यामेवैनं [ पावयति । देवो देवानां
पवित्रमसीति देवताभ्य एवैनं निदिशति । मधुमतीर्ण इष इति[2] सोमेन हि
सोमं पुनन्ति । येषां भागो ऽसीति देवताभ्य एवैनं निदिशति । ] मधुम-
10 तीर्ण[3] इषस्कृधीति । देवता वा इषः । देवेभ्य एवैनं मधुमन्तं करोति ।
स्वांकृतो ऽसीति प्राणमेव स्वं कुरुते । उर्वन्तरिक्षं वीहीति । अन्तरिक्षदेवत्यो
ह्येष एतर्हि । विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव मनुष्येषु च प्राणं दधाति ।
मनस्त्वाष्ट्विति[4] । मनसा हि प्राणो धृतः । स्वाहा त्वा सुभो सूर्यायेति ।
सोमो वै सुभूः । अमुष्मिन्नादित्ये देवानां प्रियास्तन्वः । ता एव तर्पयति ।
15 अथो स्वाहाकारेणैवास्मिन्नाहुतीः प्रीणाति ॥

सर्वहुतं जुहोति । तस्मात्पराङ् प्राणः । [ऋजुस्तिष्ठञ्जुहोति । पुरुषेण ]
वै यज्ञः संमितः[1] । प्राणापानाभ्यां पुरुषः संततः । प्राणापानयोरसंशराय ।
नाध्वर्युर्विहूर्छति य एवं वेद । उत्तरादुपांशुं जुहुयाद्दक्षिणतो ऽन्तर्यामम् । देवरथो
वा एष यद्यज्ञः । तस्यैतौ रश्मी यदुपांश्वन्तर्यामौ । देवरथस्यैव पुरस्ताद्रश्मी

1. The ms. प्रसरिमः.
2. इति is to be inserted in KS.
3. The ms. °र्मे.
4. The ms. °ष्ट्रेति.

विहरति संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै । तामनुकृतिं मनुष्यरथस्य रश्मी विह्रियेते । ऋजू होतव्यौ प्राणानामव्यतिहाराय । ऊर्ध्वमुन्मृज्याद्यदि कामयेत न वर्षेदिति । अमुत्रैव वृष्टिं परिगृह्णाति । अवाचीनमवमृज्याद्यदि कामयेत वर्षेदिति । या वा इतराहुतिरुद्यते सामुतो वृष्टिं च्यावयाति । अनयैवाहुत्या दिवो वृष्टिं निनयति ॥ 5

देवेभ्यस्त्वा मरीचिपेभ्य इति परिधौ निमार्ष्टि । प्राणा वै देवा मरीचिपाः । तानेव प्रीणाति । अथो परिधीनामेवैष सोमपीथः । अन्तरतो निमार्ष्टि । तस्मात्प्राणा अन्तरतः । वि वा एतद्यज्ञं छिनत्ति यत्पुराभिषोतोः संस्थां गमयति । यदंशूननभिषुतानपिसृजति[2] यज्ञस्य संतत्या अविच्छेदाय । षडसंश्लिष्टानंशूनपिसृजति । तस्मात्षट् प्राणाः । द्वन्द्वं पावयति । तस्मा- 10 त्प्राणा द्वन्द्वम् । आर्द्राः सन्तो ऽसंश्लिष्टा भवन्ति । तस्मात्प्राणा आर्द्राः सन्तो ऽसंश्लिष्टाः । यो ह वै सोमस्य सोमपीथं वेद न सोमपीथाच्छिद्यते नास्य प्रजाः । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति । एष वै सोमस्य सोमपीथः । सोममेवैतत्सोमस्य तर्पयति । न सोमपीथाच्छिद्यते नास्य प्रजा य एवं वेद । यद्यभिचरेद् देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां 15 पूष्णो हस्ताभ्यामादद इत्याददीत । प्रहर्षिणो[3] मदिरस्य मदे मृषासावस्त्वथ त्वा होष्यामीति मृषैवैनं करोति । सर्वदेवत्यो वै सोमः । सर्वा वा एतर्ह्येतस्मिन्देवता आशंसन्ते मह्यं होष्यति मह्यं होष्यतीति । देवता एवैनमाहुतिमभीप्सन्तीरुद्दहन्ति । आ तमितोस्तिष्ठति । प्राणस्यैवास्यान्तं गच्छति । यद्यजुर्वदति देवेभ्य एवैनमावृश्चति । उपांशुनाभिचरति । प्राणो वा उपांशुः । 20 प्राणेनैवास्य प्राणमभिचरति ताजक्प्रधन्वति ॥ १ ॥ Cf. III, 1; KS. XXVII, 1; IV, 1. MS. IV, 5, 5; I, 3, 4; TS. VI, 4, 5; I, 4, 2.

देवा वै सोमायाभिषुताय पात्रं नाविन्दन्त येनेमं विगृह्णीमहीति । त इमामेव देवपात्रमपश्यन् । तमनयैव व्यगृह्णत । इयं वाव देवपात्रम् । अस्या स्थालीं[4] कुर्वन्त्यस्या वायव्यानि । प्र श्रेयसः पात्रमाप्नोति य

1. KS. सौम्यै॰.
2. The ms. ॰नतियुतानति॰.
3. The ms. प्रहरिषिणो.
4. KS. ॰लीः.

एवं वेद । ब्राह्मणं पात्रे[1] न मीमांसेत । तद्व्रतम् । उपयामगृहीतो ऽसीति । इयं वा उपयामः । यदत्र स्कन्दत्यनया तद्यतम् । नास्य[2] सोम स्कन्दति य एवं वेद । उपयामगृहीतो ऽसीति । उपयामगृहीता ह्यतः सोमा भवन्ति । पवित्रं वितन्वन्ति । पवित्रपूता ह्यतः सोमा भवन्ति ।
5 स्वर्भानुर्वा असुरः[3] सूर्यं तमसाविध्यत् । स न व्यरोचत । तस्माद्देवास्तमो ऽपालुम्पन् । यत्प्रथममपालुम्पन्साविष्कृष्णाभवत् । यद्द्वितीयं सा फल्गू यत्तृतीयं सा बलक्षी । तस्मात्तस्याः पवित्रं कुर्वन्ति । आदित्यस्यैवैनं तन्वा पावयति । अन्तर्यच्छ मघवन्पाहि सोममित्येभ्य एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते । मधुमतीर्ण[4] इषस्कृधीति । देवता वा इषः । देवे-
10 भ्य एवैनं मधुमन्तं करोति । स्वांकृतो ऽसीत्यपानमेव स्वं कुरुते । उर्वन्तरिक्षं वीहीति । अन्तरिक्षदेवत्यो ह्येष एतर्हि । विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव मनुष्येषु चापानं दधाति । मनस्त्वाष्ट्वित्ति[5] । मनसा ह्यपानो धृतः । स्वाहा त्वा सुभो सूर्यायेति । सोमो वै सुभूः । अमुष्मिन्नादित्ये देवानां प्रियास्तन्वः । ता एव तर्पयति । अथो
15 स्वाहाकारेणैवास्मिन्नाहुतीः प्रीणाति ॥

सृदि[6] कुर्यादन्तर्यामपात्रम् । ऊर्ग्वै सोमरसो[7] ऽन्तरिक्षमन्तर्यामः । अन्तरिक्ष एव रसं दधात्यूर्जं पशुषु । उपांश्वन्तर्यामौ वै पशवो ऽनुप्रजायन्त इतरान्ग्रहानन्वन्याः प्रजाः । तावसन्नौ जुहोति । तस्मादसन्नाः पशवः सद्यदि प्रजायन्ते । तस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति ।
20 संवत्सरे पुरुषः । प्राणाय त्वेत्युपांशुपात्रं सादयति । व्यानाय त्वेत्युपांशुसवनम् । अपानाय त्वेत्यन्तर्यामपात्रम् । व्यानेन वा इमौ प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न क्षीयेते । नायमूर्ध्व[8] उत्क्रामति नेतरो

1. The ms. and KS. पात्रेण is to be corrected. Cf. MS. p. 70, l. 12; Pañc-Br. VI, 5, 9.
2. The ms. नोस्य.
3. KS. आसुरः.
4. The ms. ०र्मे. So also in the preceding section.
5. The ms. ०स्त्वष्टेति.
6. ? Thus KS. The ms. स्रदि.
7. KS. सोमो.
8. The ms. ०मूर्ध्वमु०.

ऽवाङ् संक्रामति । व्यानमेव मध्यतो दधाति प्राणापानयोर्विधृत्यै ॥

शृङ्गमुपांशुरेतो ऽन्तर्याम इन्द्रियं प्रजाः सोमपीथः । एतौ ह स्म वै तद्रजनः कौणेयो ग्रहौ धयन्मन्यते यच्छृङ्गं[1] धयति । यदेतौ पूर्वार्धे यज्ञस्य क्रियेते मिथुनमेव यज्ञमुखे दधाति प्रजननाय । तस्मादाहुः प्राणापानौ वै प्रजा अनुप्रजायन्त इति । पुरुषेण वै यज्ञः संमितः । 5 प्राणापानाभ्यां पुरुषः संततः । यदेते प्रातःसवन्ने आ तृतीयसवनाच्छयाते प्राणापानाभ्यामेव यज्ञं संतनोति । तस्मात्पुरुषात्सुप्तात्प्राणापानौ नापक्रामतः । ते पुनस्तृतीयसवने प्रयुज्येते । तस्मात्सुप्त्वा प्रबुध्यते । तस्माद् द्वाववाञ्चौ[2] प्राणौ ॥ २ ॥ Cf. III, 1; KS. XXVII, 2; IV, 1; MS. IV, 5, 5. 6. 7; I, 3, 4. 5; TS. VI, 4, 6; I, 4, 3.

प्राण उपांशुरपानो ऽन्तर्यामो वागैन्द्रवायवः । यदुपांश्वन्तर्यामा- 10 वैन्द्रवायवो ऽनुगृह्यते प्राणापानयोरेव वाचमुपरिष्टाद्दधाति । तस्मात्प्राण्यापान्य पुरुषो वाचं[3] वदति । देवा वै प्रातःसवनमुद्यमं नाशक्नुवन् । तृतीयसवने तर्हि वायुरासीत् । तं देवाः प्राञ्चं पर्यहरन् । प्राणो वायुरैन्द्रो यज्ञः । यदैन्द्रवायवः प्रातःसवने गृह्यते प्राणेनैव यज्ञं परिगृह्य पुरस्तादुद्यच्छन्ते[4] । वायव्यो वा एष पुरासीत् । 15 सा वाक्सृष्टा न व्यावर्तताध्वनदेव । स इन्द्रो ऽब्रवीन्मह्यमत्रापि गृह्यतामहमेतां व्यावर्तयिष्यामीति । तत एतमैन्द्रवायवमगृह्णन् । सेयं वागिन्द्रियेण व्यावृत्ता वदति । स एष सोमो वाचो व्यावृत्त्यै गृह्यते । व्यावृत्तं पापीयसा वदति य एवं वेद । प्रजानां सृष्टानां प्राणापानौ समभिद्येताम् । ता न प्राण्यापानमशक्नुवन्नापान्य प्राणितुम् । स इन्द्रो 20 ऽब्रवीन्मह्यमत्रापि गृह्यतामहमेतौ प्राणापानौ विदधिष्यां[5] इति । तत एतमैन्द्रवायवमगृह्णन् । वायव इन्द्रवायुभ्यामनुब्रूहीतीन्द्रं मध्ये करोति वायुमभितः प्राणापानयोर्विधृत्यै । इन्द्रियं वै व्यानः । व्यानेन वा

1. The ms. यः श्रृंगं.

2. KS. तस्माद्वा अवाञ्चौ is to be corrected to तस्माद्द्वा अवाञ्चौ. Cf. MS. p. 72, l. 16 तस्मादिमौ द्वा अधस्तात्प्राणौ.

3. The ms. वाचो.

4. The ms. ०यच्छते.

5. The ms. ०दधिष्ठा, KS. ०ददिष्य.

इमौ प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न क्षीयेते । नायमूर्ध्वं[1] उत्क्रामति नेतरो ऽवाक्संक्रामति । व्यानमेव मध्यतो दधाति प्राणापानयोर्विधृत्यै ॥

त्रिर्विगृह्णाति । तस्मात्त्रिर्वाग्वदति शनकैरुच्चैरथ सूच्चैः[2] । देवा वै
5 वायुमब्रुवंस्त्वया मुखेन वृत्रं हनामेति । सो ऽब्रवीद्वार्यं वृणै मदग्रा एव ग्रहा गृह्यन्तां[3] इति । तस्माद्वाय्वग्रा ग्रहा गृह्यन्ते । वार्यवृतो[4] ह्यस्य । स इन्द्रो ऽब्रवीन्मह्यमत्रापि गृह्यतामथ त्वै तैरिष्यामह इति । तत्[5] एतमैन्द्रवायवमगृह्णन् । ततो वृत्रमघ्नन् । स एष सोमो वार्त्रघ्नो[6] विजित्यै गृह्यते । सोमो वै वृत्रः । स हतो ऽपूयत् । ते देवा वायुमब्रु-
10 वन्निमं नो विवाहीति । सो ऽब्रवीद्वार्यं वृणै मद्देवत्यान्येव पात्राण्युच्यन्तां[7] इति । तं व्यवात् । तस्माद्गन्धमपाहन् । स एवं पशौ प्रमीते । तस्मात्तस्मान्नापिगृह्यम् । सोमस्य हि स राज्ञो गन्धः । नैनं राजयक्ष्मो विन्दति य एवं वेद । तस्माच्छुक्रं विषजन्ति । तस्मादपि तृतीयं वायोः पात्रम् । अथ वायव्यान्युच्यन्ते । वार्यवृतानि ह्यस्य ॥ ३ ॥ Cf. KS. XXVII, 3; MS. IV, 5, 8; TS. VI, 4, 7.

15 नाना वा एतौ पुरा सोमावगृह्णन्मित्राय च वरुणाय च । ताः प्रजा अशान्ता अविधृता अन्यान्यां घ्नतीरचरन् । ते देवा अब्रुवन्सहेमं गृह्णाम मित्रेण वरुणं शमयाम वरुणेन मित्रमिति । ततो वा एतं[8] सहागृह्णन् । ते मित्रेणैव वरुणमशमयन्वरुणेन मित्रम् । ता इमाः प्रजा मित्रेण शान्ता वरुणेन विधृताः । यन्मैत्रावरुणो गृह्यते क्लृप्त्या एव विधृत्यै ।
20 देवा वै मित्रमब्रुवन्वृत्रं हनामेति । नेत्यब्रवीन्मित्रो ऽहमास्मि न हिनस्मीति । हनामैवेत्यब्रुवन् । सो ऽब्रवीद्वार्यं वृणै पयसा मे सोमं श्रीणानिति । तस्मा

1. The ms. °मूर्ध्वमु°. So also in the preceding section.
2. The ms. अथा सोच्चैर्.
3. Thus the ms. KS. गृह्यान्ता. Cf. Kāśikā III, 4, 96.
4. The ms. °वृतं.
5. Thus the ms. KS. स्त°.
6. Thus the ms. KS. त.
7. Thus the Kap. and KS. mss. Cf. Kāśikā III, 4, 96.
8. KS. एष.

त्पयसा मैत्रावरुणं श्रीणन्ति । वार्यंवृतं ह्यस्य । ततो वृत्रमघ्नन् । तस्माद्रा-
जन्येनाध्यक्षेण वैश्यं घ्नन्ति । तं मित्रः सन्ननृतमकरिति वरुणो ऽगृह्णादप
पशवो ऽक्रामन् । स मित्रो वरुण एवानाथत । सो ऽब्रवीत्सह नावेष सोमो
गृह्यतामथ त्वातो मोक्ष्यामीति । ततो वा एतं सहागृह्णन् । तेनैनं वरुणा-
दमुञ्चत् । यन्मैत्रावरुणो गृह्यते निर्वरुणत्वाय । पशवो वै पयः । पशूनां 5
हि पयः । यत्पयसा मैत्रावरुणं श्रीणाति पशुभिरेवैनं समर्धयति । असोमो
वा एष इत्याहुरोषधय एताः पय एव सोम इति । यत्पयसा मैत्रावरुणं
श्रीणाति सोममेवैनं करोति । अथो यदेवास्याभिषुण्वन्तो घ्नन्ति यत्क्रूरं
कुर्वन्ति तच्छमयति । शृतेन श्रीणाति । मैत्रं वै शृतं वारुणं प्रतिधुक् ।
स्वेनैवैनौ भागधेयेन समर्धयति । मैत्रो ब्राह्मणो वारुणो राजन्यः । यदेष 10
मैत्रावरुणो गृह्यते तस्माद्ब्रह्मपुरोहितं क्षत्रम् ॥

यज्ञस्य वै शिरो ऽच्छिद्यत । अथ तर्ह्यश्विनावसोमपौ भिषजौ[1] दे-
वानामास्ताम् । तौ देवा अब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रतिधत्त-
मिति । तावब्रूतां वार्यं वृणावहै सोमपीथो नौ देवेष्वस्तु ग्रहो नौ गृह्यतामिति ।
तौ देवा बहिष्पवमानेन पावयित्वा ताभ्यां शुचिभ्यां मेध्याभ्यां पूताभ्यां[2] 15
ग्रहमगृह्णन् । तस्मात्स्तुते बहिष्पवमान आश्विनो गृह्यते । तस्माद्ब्राह्मणो
बहिष्पवमानमासीत । पवित्रं हि तत् । तस्माद्यं द्विष्यात्तं बहिष्पवमाना-
त्परिबाधेत । पवित्रादेवैनं परिबाधते । तौ देवानुपावर्तमानौ तयोर्या
भिषज्या तनूरासीत्तां त्रेधा विन्यदधातामग्नौ तृतीयं ब्राह्मणे तृतीयमप्सु
तृतीयम्[3] । यं कामयेतामयाविनं जीवेदित्यग्नेरन्ते ब्राह्मणाय प्रोच्यापः 20
परिब्रूयात् । एतावद्वै भेषजम् । यावदेव भेषजं तदस्मै करोति जीवति सर्वमा-
युरेति न पुरायुषः प्रमीयते ॥ ४ ॥ Cf. KS. XXVII, 4; MS. IV, 5, 8. 6, 2; TS.
VI, 4, 8. 9.

प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते । तस्मात्प्राणा एकनामानस्ते
द्विपात्रा हूयन्ते । तस्मात्प्राणा द्वन्द्वम् । येन यजुषा प्रयच्छति तेन प्रतिगृ-

1. KS. परि° to be corrected. Cf. TS. VI, 4, 9, 1; MS. p. 80, l. 2.
2. Thus the ms. KS. भू°. Cf. MS. p. 80, ll. 5-6; ĀpŚr. XII, 17, 10.
3. The ms. adds अमुष्मिन्नादित्ये तृतीयं, which is superfluous.

ह्वाति प्राणानां संतत्यै प्रतिज्ञात्यै । नानुवषट्करोति । यदनुवषट्कुर्यात्प्राणा-
न्संस्थापयेत्प्रमीयेत । यन्नानुयजति तस्मात्प्राणा असंस्थिता आ च परा
च चरन्ति । द्विदेवत्याः पूर्वे भक्षयितव्या ३[1] इडोपहूया ३[1] इति मीमां-
सन्ते । इडैव पूर्वोपहूया यज्ञस्य यथापूर्वत्वाय । प्राणा वै द्विदेवत्याः
5 पशव इडा । यदेवं कुर्यात्पशुभिः प्राणानन्तरियात्प्रमीयेत । द्विदेवत्या
एव पूर्वे भक्षयितव्याः । अन्तरे वै प्राणाः परे पशवः । प्राणानेवात्मन्धि-
त्वा पशूनुपह्वयति[2] । ये वा इमे पुरुषे प्राणास्ते द्विदेवत्या वाक्च प्राणश्चैन्द्र-
वायवश्चक्षुश्च मनश्च मैत्रावरुणः श्रोत्रं चात्मा चाश्विनः । अग्निर्होतासीत् ।
स वषट्कृत्यातम्यत् । आहितास्येडासीत् । तस्य देवा द्विदेवत्यैरन्वौन्दन्[3] ।
10 प्राणा वै द्विदेवत्याः । प्राणैरेवैनं तदभ्याधिन्दन्[4] । स इडोपहूतोपहूतेडेति
प्रत्यपद्यत । प्राणा वै द्विदेवत्याः । यद्द्विदेवत्यान्भक्षयति प्राणैरेवात्मा-
नमभिधिनोति । तस्माद्द्विदेवत्या एव पूर्वे भक्षयितव्याः । ते हि पूर्वे
भक्षिताः । आश्विनो दशमो गृह्यते । दश हि प्राणाः । तं तृतीयं जुहोति ।
शिर एव प्राणानभिसंहरति । समन्तं परिगृह्य[5] भक्षयति । श्रोत्रं वा आश्वि-
15 नः । तस्मात्पुरुषः सर्वतः शृणोति ॥

रक्षांसि वा एतत्पात्रे सचन्ते यद्यज्ञे रिक्तमविमुक्तं भवति । पुरोडाशमै-
न्द्रवायवस्य पात्रे ऽवदधाति पयस्यां मैत्रावरुणस्य धानामाश्विनस्य
रक्षसामपहत्यै । तस्मात्प्राणा अदस्ता अरिक्ताः । दक्षिणस्य हविर्धानस्या-
धस्तात्सादयति । एतद्वा एतयोरग्निमद्वीर्यवत् । यदेवाग्निमद्वीर्यवत्तस्मिन्सा-
20 दयति । पुरुषेण वै यज्ञः संमितः । प्राणापानैः पुरुषः संततः । यदेतानि
प्रातःसन्नान्या तृतीयसवनाच्छेरे प्राणापानैरेवं[6] यज्ञं संतनोति । एकया च
दशभिश्चेत्येतां प्रति विमुञ्चति । यदर्वाग्विमुञ्चेत्प्राणान्विच्छिन्द्याद्यत्परः प्राणा-
नतिरेचयेत्प्रमीयेत । प्राणो वै वायुः प्राणा द्विदेवत्याः । प्राणेनैव प्राणा-

1. The figure 3 does not appear in the ms.

2. KS. ०हूते is to be corrected to ०ह्वयते.

3. Thus KS. The ms. ०रन्वविंदंत्.

4. Thus KS. The ms. अभ्यविंदंत्.

5. Thus the ms. KS. ०हृत्य.

6. KS. ०रेवं to be corrected.

न्विमुञ्चति । बहु वायव्यं प्रातःसवने शस्यत एकैव तृतीयसवने । तस्मा-
द्बहवो मुखे प्राणा एको ऽवाङ् । यदि कामयेतावगतमपरुन्ध्युरपरुद्धो
ऽवगच्छेदितीदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विश उदूहामीत्यध्वर्योः
पात्रमुदूहेत् । इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विश्यध्यूहामीति प्रति-
प्रस्थातुः पात्रमध्यूहेत् । अध्वर्युर्वै [1]श्रेयान्पापीयान्प्रतिप्रस्थाता । अवगतः[1] 5
श्रेयान्पापीयानपरुद्धः । अवगतमेवापरुणद्ध्यपरुद्धमवगमयति । ताजग्व्य-
वगच्छेते । व्यत्यूहेत्पात्राणि । यदि कामयेत पापवसीयसी स्यादित्यध्वर्योः
पात्राणां लोके प्रेतिप्रस्थातुः पात्राणि सादयेत्प्रतिप्रस्थातुः पात्राणां लोके
ऽध्वर्योः पात्राणि सादयेत् । अध्वर्युर्वै श्रेयान्पापीयान्प्रतिप्रस्थाता । पापीयांस-
मेव वसीयसो लोके सादयति वसीयांसं पापीयसः । पापवसीयसं करोति । 10
एतद्ध वै विपूजनः सौराकिः पापवसीयसं विदांचकार ॥ ५ ॥ Cf. KS. XXVII,
5; MS. IV, 6, 1. 2; TS. VI, 4, 9.

यदि कामयेत यजमानाद्यजमानं भ्रातृव्यं पूर्वं कुर्यामिति प्रतिप्रस्थाता
पूर्वो गृहीत्वा स पूर्वो निरूहेत् । यजमानो वै श्रेयान्पापीयान्प्रतिप्रस्थाता
भ्रातृव्यः । तस्माद्भ्रातृव्यो ऽयजमानः । भ्रातृव्यमेव तस्मात्पूर्वं करोति ।
अध्वर्योर्लोके तिष्ठञ्जुहोति । अध्वर्युर्वै श्रेयान्पापीयान्प्रतिप्रस्थाता । भ्रातृ- 15
व्यमेवास्य लोकमभ्यारोहयति । अलोकमेनं करोति । नयन्नाश्रावयेदध्व-
र्युरप्रतिष्ठानः स्यात् । नानालभ्य पात्रमाश्रावयेत् । एतद्वा अध्वर्योः स्वम् ।
अस्वः स्यात् । यत्राग्र आहुतिं जुहोति तदुत्तरा जुहुयात् । यत्र वा अग्र
आहुतिं जुहोति तद्देवताः परिविशन्ति । यदन्यत्रै जुहुयाद्देवताभ्यः समदं
कुर्यात् । साक्षादेव देवेभ्यो भागधेयं संप्रयच्छति । नाना वा एतौ पुराग्नी 20
आस्तां पशो[3]श्चाहवनीयश्च । तस्मात्पुरा रुद्रः पशूनघातुक आसीत् । पशवो
वै पशवः पशवो ऽशिवो रुद्रो ऽग्निः । यदाहुतीः संसृजति रुद्राय पशून-
पिदधात्यपशुर्भवति । तस्मादिदानीं रुद्रः पशून्घातुकः । मध्ये ऽग्नेर्जुहु-

1–1. These words are missing in KS. 3. The ms. पशुश्चा०.
2. KS. ०त्रा.

यादाज्याहुतीश्च पश्वाहुतीश्चाभितः सोमाहुतीः । रुद्रमेव पशुभिः परिवृणक्ति । अघातुकस्तत्र रुद्रः पशून्भवति यत्रैवंविदध्वर्युर्भवति ॥ ६ ॥
Cf. KS. XXVII, 6.

इति कपिष्ठलकठसंहितायां द्वाचत्वारिंशत्तमो ऽध्यायः ॥[2]

---

1. KS. पश्वा॰ to be corrected.
2. The ms. leaves out KS. XXVII, 7. Of KS. XXVII, 8 only the first four lines and a half are preserved:
   देवाश्च वा असुराश्च संयत्ता आसन् । बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम् । ते न व्यजयन्त । स इन्द्रो ऽवेदुभये हि वै ब्रह्मण्वन्तः स्मस्तन्न विजयामह इति । तावुपामन्त्रयत । तावब्रूतां (the missing तौ is to be supplied in KS.) वार्यं वृणावहै सोमपीथो नौ देवेष्वस्तु ग्रहौ नौ गृह्येतामिति । ताभ्यामेताविन्द्रः शुक्रामन्थिनौ प्रायच्छत् । आ······The rest of the 43rd adhyāya is lost.

......[1][ आयुः ] प्रजानां प्रदध्यात्प्रमायुकाः स्युः । होतुश्चमसे ऽवनयति । वैश्वदेवो वै होता वैश्वदेवीरिमाः प्रजाः । प्रजास्वेवायुर्दधाति । अध्रुवं वा एनमेतत्करोति यदवनयति । एतस्य वा अध्रुवत्वमनु प्रजाभ्यो न[2] कल्पते ।

1. The Kāṭhaka reads:

आयुर्वै ध्रुव उत्तमो गृह्यते । तस्मादायुः प्राणानामुत्तमम् । नवमो गृह्यते । नव हि प्राणाः । एकाकिनमुत्तरस्मिन्हविर्धाने सादयति । तस्मादेकाकी प्राणानामर्धभागवाङ् प्राणः । ध्रुवं वा अनु मनुष्याः प्रजायन्त इतरान्ग्रहानन्वन्याः प्रजाः । अनुपोप्ते ध्रुवं सादयत्युपोप्त इतरान्ग्रहान् । तस्मात्पुरुषो मांसेन प्रतितिष्ठत्यस्थ्ना पशवः । राजपुत्रो गोपायति । राजन्यो वै प्रजानामधिपतिः । आयुर्ध्रुवः । आयुरेव प्रजानां गोपायति । अथो क्षत्रमेव गोपायते । यदि कामयेतावगतमपरुन्ध्युरपरुद्धो ऽवगच्छेदित्यध्रुवं त्वाध्रु (Schr. त्वा ध्रु॰ to be corrected) **वाक्षितिमध्रुवाणामध्रुवतममच्युतानामच्युततममुष्या विश उदूहामी**ति ध्रुवमुदूहेत् । ध्रुवो वा एष यो ऽवगतो ऽध्रुवो ऽपरुद्धः । अवगतमेवापरुणद्ध्यपरुद्धमवगमयति । ताजग्व्यवगच्छेते । यदेवं कुर्यादायुः प्रजानां विचालयेत् । तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेत् । तेनैवापरुद्धमवगमयति नायुः प्रजानां विचालयति । देवक्षेत्रं वै वेदिः । एतावती पृथिवी यावती वेदिः । देवक्षेत्रेणैवैनं मनुष्यक्षेत्रान्वद[ह्?]ति ॥

पूर्णं गृह्णीयाद्यं कामयेत सर्वमायुरियादिति । पूर्णमेवास्मा आयुर्गृह्णाति सर्वमायुरेति । अल्पं गृह्णीयाद्यं कामयेताल्पमायुरियादिति । अल्पमेवास्यायुष्करोति ताजक्प्रधन्वति । उपर्युपार्धं गृह्णीयाद्यं कामयेतोत्तरमायुरियादिति । उत्तरमेवैनमायुर्गमयति । यथारूपमस्मा आयुः परिगृह्णाति । उभयतोवैश्वानरं गृह्णाति । तस्मात्प्राणा उभयतोवैश्वानराः । **मूर्धानं दिवो अरतिं पृथिव्या** इति देवेषु चैव (Schr. चैवं to be corrected) मनुष्येषु चायुर्दधाति । पुरुषेण वै यज्ञस्संमित आयुषा पुरुषस्संततः । यदेष प्रातर्गृहीत आ तृतीयसवनाच्छय आयुषैव यज्ञं संतनोति । प्रातर्वा एतौ गृह्येते गायत्र्या लोक आग्रायणश्च ध्रुवश्च । ता आ तृतीयसवनाच्छयाते जगत्या लोकात् । तस्माद्गायत्र्ययातयाम्न्युत्तरे सवने प्रत्येति । एतदेवाभिभागधेयम् । प्राणो वै गायत्र्यायुर्ध्रुवः । यदेष प्रातस्सन्न आ तृतीयसवनाच्छये तस्माद्यावदेवायुस्तावान्प्राणः । आयुर्वै ध्रुवो रुद्रो ऽग्निः । नैकाकी होतव्यः ।

2. Thus KS. The ms. नु.

दृंहन्तां दैवीर्विशः कल्पन्तां मनुष्या दिवि दिव्यानि सन्त्वन्तरिक्षे वयांसि पृथिव्यां पार्थिवानीति ध्रुवमवनयति । यथायतनमेव प्रजा दृंहति । आहूत उक्थे ऽवनयेत् । स्तुतेनैव शस्त्रमभिसंतनोति । यदाहूते ऽवनयेदुक्थम-तिरेचयेद्यच्छस्ते ग्रहमतिरेचयेत् । या मध्यमा परिधानीया तस्यामवन-
5 यति । अङ्गानि वा एतानि यज्ञस्य यदुक्थामदानि । आयुर्ध्रुवः । अर्धं वै पुरुषस्यात्मनो ऽङ्गान्यर्धमायुः । अन्तावेवाभितः संधायायुर्मध्यतो दधाति । कस्मात्सत्यादित्याहुर्ब्रह्मवादिन आपस्त्वरमाणा न क्षीयन्ते न प्रदस्य-न्तीति । एतमेव सोमपीथं प्रतीक्षमाणा यद्ध्रुवः । एष ह्येना अपनु-दते । प्रत्यङ्ङासीनो ऽवनयति । अन्वीपमेवैना अवार्जति । न सामि
10 प्रस्तावयेत । अग्निष्टोममेवासीत । आयुर्वै ध्रुवः । आयुर्व्यवस्रावयेत । एतावान्वै यज्ञो यावानग्निष्टोमः । यदाग्निष्टोममास्ते प्राणस्यैवास्यान्तं[1] गच्छति सर्वमायुरेति । उदरं वा एतद्यज्ञस्य यत्सदः । तद्द्रवन्ति निः-सर्पन्तः । यज्ञः प्रजापतिः । यदाग्निष्टोममास्ते प्रजापतेरेवोदरं न रिणक्त्य-क्षोधुको भवति ॥ १ ॥ Cf. KS. XXVIII, 1; MS. IV, 6, 6; TS. VI, 5, 2.

15 देवा वा असुरान्हत्वा वैरदेयादीषमाणास्त ऋतून्संवत्सरममोहयन् । तस्य देवाः क्लृप्तिमैच्छन् । तमृतुग्रहैरेवाकल्पयन् । यदृतुग्रहा गृह्यन्ते संवत्सरस्य क्लृप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै । उभौ सह प्रथमं गृह्णाते । उभौ ह्येतौ[2] सह संवत्सरं कल्पयितुमुपप्रेतः । उभौ सहोत्तमम् । संवत्सरमेव कल्पयित्वोभौ सह विमुच्येते । उभयतोमुखे ऋतुपात्रे
20 भवतः । उभयतोमुखा ह्यृतवः । न हि तद्विद्म यतरत ऋतूनां मुखम् । नान्यो ऽन्यमभिप्रपद्येयाताम् । यदभिप्रपद्येयातामृतुर्[3]ऋतुमभ्यायुकः स्यात् । यद्व्यतीतस्तस्मादाहुरश्वाविवर्तू समघ्रातामिति । द्वादशैते गृह्यन्ते । द्वादश मासाः संवत्सरः । संवत्सरस्य क्लृप्त्यै । संवत्सरो वै स्वर्गो लोकः । तस्यैत आक्रामाः संक्रामा यदृतुग्रहाः । रोहमेवैते रोहति स्वर्गस्य लोकस्य सम-
25 ष्ट्यै । षडन्ये भवन्ति षडन्ये । असौ वा आदित्य ऋतुः । तस्मादेष

1. KS. ०न्तरं to be corrected. 3. Thus KS. The ms. ऋतुभिर् for ऋतुर्.
2. Thus KS. The ms. त्वे०.

षण्मास उदङ्ङेति षड् दक्षिणा। षड्ऋतुना। षड्वा ऋतवः। ऋतुष्वेव प्रतितिष्ठति। चतुर्ऋतुभिः। चतुष्पदाः पशवः। संवत्सरं पशवो ऽनु-प्रजायन्ते। संवत्सरादेवास्मै पशून्प्रजनयति। द्विर्ऋतुना पुनः। द्वि-पाद्यजमानः। पशुष्वेवोपरिष्टात्प्रतितिष्ठति ॥

सोमपा[1] वा एते। सोमपा इन्द्रस्य सजाता यदृतुग्रहाः। ऋतुना 5 सोमं पिबत्विति ह्याह। नर्तवे जुह्वति। तेषामेते स्वे पात्रे याभ्यामेनाञ्जुह्वति[2]। तस्मात्सजातः स्वेन पात्रेणा[3] बलिं[4] हरति। आस्मै बलिं हरन्ति य एवं वेद। व्यतिहारं[4] भक्षयन्त्ययातयामत्वाय। तस्मादृतुमृतुं वर्षति। ते देवाः संवत्सरं कल्पयित्वा स्वर्गं लोकं प्रज्ञाय त एतद्यज्ञस्य ज्योतिरुपरिष्टाददधुः। यदैन्द्राग्नो गृह्यते ज्योतिरेव मुखतो यज्ञस्य दधाति संवत्सरस्य क्लृप्त्यै 10 स्वर्गस्य लोकस्य प्रज्ञात्यै। तस्मात्संवत्सरं ज्योतिरुपर्युपरि चरति। ऋतुपात्रे-णैन्द्राग्नं गृह्णाति। क्षत्रं वा इन्द्राग्नी विडृतवः। विश्येव क्षत्रमध्यूहति। विश्वे वै देवास्तृतीयसवनभागाः सन्तस्ते प्रातःसवनमभ्यकामयन्त। तान्प्रजापति-रेतस्मिन्ग्रहे तर्पयितव्यानपश्यत्। यद्वैश्वदेवः प्रातःसवने गृह्यते विश्वानेव देवान्प्रातःसवने तर्पयति। तानस्य तृप्तान्प्रीतानुत्तरे सवने 15 अभिविसृज्येते। शुक्रपात्रेण वैश्वदेवं गृह्णाति। असौ वा आदित्यः शुक्रो वैश्वदेवीरिमाः प्रजाः। तस्मादेष सर्वाः प्रजाः प्रत्यङ्। मां प्रति मां प्रतीति हि मन्यन्ते ॥ २ ॥ Cf. KS. XXVIII, 2; MS. IV, 6, 7. 8; TS. VI, 5, 3. 4.

माध्यन्दिनेन वै सवनेनेन्द्रो वृत्रमहन्मरुद्भिर्वीर्येण। मरुत्वतीयं स्तोत्रं भवति मरुत्वतीयमुक्थं मरुत्वतीया ग्रहाः। सर्वत एव यजमानं वीर्येण 20 समर्धयति सर्वतो वृत्रं हन्ति। प्रतिहितिरेव प्रथमो मरुत्वतीयो ऽपायतिर्द्वि-तीयः। विसृष्टमु[5] तृतीयेन विसृजति। वज्रमेव प्रथमेन मरुत्वतीयेनोद्यच्छति। प्र द्वितीयेन हरति स्तृणुते तृतीयेन। यं द्विष्यादमरुत्वतीयस्तस्य गृह्णी-

1. KS. सोमपाना.
2. Thus KS. The ms. °मेनां जु°.
3. KS. पात्रेण to be corrected to पात्रेणा. Cf. the next sentence: आस्मै बलिं हरन्ति.
4. KS. व्यव°.
5. Thus the ms. KS. °ष्टिं.

यात्। वीर्यं वै मरुतः। वीर्येणैवैनं व्यर्धयति। इन्द्रो वै वृत्रं हनिष्यन्प्रदानं देवेभ्यः प्रायच्छद्दक्षिणाः। स मरुत्वतीयैरेव वृत्रमहन्। तस्मान्मरुत्वते ऽनूक्ते न देयम्। हतो हि तर्हि वृत्रो विजितं भवति। नो प्रतिगृह्णीयात्। प्रतिष्ठितान्पशून्प्रच्यावयति। अपशुर्भवति। इन्द्रो वै वृत्रं हत्वा स महेन्द्रो ऽभवत्।
5 सो ऽन्यान्देवानत्यमन्यत। स एतं ग्रहमुद्धारमुदहरत महेन्द्रीयम्। तस्माद्राजा संग्रामं जित्वा निराजं निरजते। ते तं देवा अब्रुवन्सर्वं वा अवोचथा अस्तु नो ऽत्रापीति कथं वो ऽपि स्यादिति। विराजैतस्य ग्रहस्य यजत्विति[1]। देवपात्रं वै विराट्। यद्विराजा यजति देवपात्रेणैवं[2] देवतास्तर्पयति। तस्माद्य-द्राजा संग्रामं जयत्यपि तत्र सूतग्रामणीनाम्। गायत्र्या वै त्रिवृदायतनवी-
10 स्त्रिष्टुभा पञ्चदशो जगत्यैकविंशः। अथैषा विराडायतनमेव यत्सप्तदशः। यद्विराजा यजति सप्तदशमेवायतनवन्तं यजमानं करोति। यं द्विष्यात्त्रिष्टुभा तस्य यजेत्। ओजो वै वीर्यं त्रिष्टुप्। ओजसैवैनं वीर्येणायतनाच्छिनत्ति। सो ऽनायतनः पराभवति। देवा वा असुरान्हत्वा वैरदेयादीषमाणास्ते यज्ञं मध्यतः प्राविशन्। एतां वाव तदृचं प्राविशन्विराजमेव। यद्विराजा
15 यजति देवतानामभीष्ट्यै। आदित्या वै स्वर्गं लोकं यन्तस्ते ऽङ्गिरसो ऽस्मिंल्लोके सह यज्ञेन प्रत्यौहन्। ते ऽङ्गिरस आदित्यानब्रुवन्कतिभ्यो हव्यं वक्ष्याम इति। त्रयस्त्रिंशत इत्यब्रुवन्। दश वसव इन्द्र एकादशो दश रुद्रा इन्द्र एकादशो दशादित्या इन्द्र एकादशः। त्रिंशदेता देवतास्त्रिंशद[3]क्षरा विराट्। तेनैता देवतास्तर्पयति यास्त्रिंशत्[3]। अक्षरो वषट्कार एकाक्षरा
20 वाक्। तेनैन्द्रम्। कल्पन्ते ऽस्य देवता हव्ये। यथादेवतमस्य हव्यं गच्छति। वृणत एनमार्त्विज्याय य एवं वेद। यावतीर्हि देवतास्ता हव्यं गमयति॥ ३॥
Cf. KS. XXVIII, 3; MS. IV, 6, 8; TS. VI, 5, 5.

माध्यन्दिनाद्वै सवनाद्देवाः स्वर्गं लोकमायन्। तेषामेत आक्रामाः संक्रामा यद्दक्षिणाः। यद्दक्षिणा ददाति सेतुमेव कीर्त्वा स्वर्गं लोकमेति। यावद्वा इह प्राणद्ददाति तावन्तो ऽमुष्मिंल्लोके प्राणाः। तस्माद्बहु देयम्।

1. Thus KS, The ms. यजति.
2. Thus KS, The ms. पात्रेणैवाद्य.
3–3. These words are missing in KS.

तस्मादिह बहु दत्तं प्रशंसन्ति । ज्यायांसमेव सेतुं किरते । एतर्हि वै देवता नेदिष्ठान्न्यानमन्ति[1] । तस्मादेष एतर्हि तेजिष्ठं तपति यावन्नेदिष्ठादेव स्वर्गं लोकमारोहति[2] । सौरीभ्यां जुहोति स्वर्गस्य लोकस्य समष्ट्यै । द्वाभ्याम् । द्विपाद्यजमानः । अस्यामेवैनमाक्रमयति । यदाग्नेय्याग्नीध्रे जुहोत्यन्तरिक्ष एवैनमाक्रमयति । यद्ददाति स्वर्गमेवैनं लोकं गमयति । द्यां गच्छ स्वर्गच्छेति स्वर्गस्य लोकस्य समष्ट्यै । रूपं वो रूपेणाभ्यागां वयसा वय इति । एतद्वै पशूनां रूपं यद् घृतं यद्धिरण्यम् । रूपमेवैषां रूपेणाभ्यैति[3] वयसा वयः । तूथो[4] वो विश्ववेदा विभजत्विति । सत्यं वै तूथो विश्ववेदाः । सत्येनैवैनां[5] ब्रह्मणा विभजति । एतत्ते अग्ने राध एति सोमच्युतमिति । आग्नेया वै पशवः । ते सोमे दीयन्ते । तन्[6]मित्रस्य पथा नयेति मित्रस्यैवैनाः[7] पथा नयति । अन्तराग्नीध्रं च सदश्च नयति । एतेन वै पथा देवाः स्वर्गं लोकमायन् । तमेवैना अपिपादयति ॥

दक्षिणतो वै देवानां यज्ञं रक्षांस्यभ्यजयन् । तमाग्नीध्रात्पुनरपाजयन् । यदाग्नीध्राद्दक्षिणा दक्षिणा नयन्ति यज्ञस्याभिजित्यै रक्षसामपहत्यै । आग्नेय्याग्नीध्रे[8] जुहोति । आग्नेया वै पशवः । पशूनां निष्क्रीत्यै । वारुण्या द्वितीयया जुहुयाद्यद्यश्वं वानो वा रथं वा दास्यन्स्यात् । वारुणा ह्यश्वा वारुणा वनस्पतयः । अग्नीधे ऽग्रे ददाति[9] । अग्निः सर्वा देवताः । देवतानामभीष्ट्यै । उपबर्हणं ददाति । एतद्वै छन्दसां रूपम् । रूपेणैव च्छन्दांस्यवरुन्द्धे । हिरण्यं ददाति । हिरण्यज्योतिष एवैनाः स्वर्गं लोकं गमयति । अस्मद्राता मधुमती देवत्रा गच्छेति स्वर्गमेवैना लोकं गमयति । प्रदातारमाविशेति । तस्मादमुष्मिंल्लोक आगामुकाः । ऋतस्य पथा प्रेत चन्द्र-

1. Thus KS. The ms. निदिष्ट्रिज्ञानमंत्ति.
2. The ms. ०रोहयति.
3. KS. ०भ्येति to be corrected. Cf. अभ्यागां in the mantra.
4. The ms. तु०. See the mantra section.
5. KS. ०नान्. Cf. TS. sec. 2 तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजति । तेनैवैना विभजति, and further in sec. 3 सत्येनैवैना ऋतेन विभजति.
6. KS. ता० is to be corrected.
7. Kāṭh. and Kap. mss. ०नान्.
8. KS. ०घ्रे.
9. This sentence has fallen out in KS.

दक्षिणा इति । यो वै यज्ञियो मेध्यः स ऋतस्य पन्थाः । तेनैवैनां[1] नयति ।
ब्राह्मणमद्यध्र्यांसं पितृमन्तं पैतृमत्यमिति । यो वै श्रोत्रिय आर्षेयः स पितृ-
मान्पैतृमत्यः । तं विदेयमित्येवैतदाह । स हि सुधातुदक्षिणः । याम-
ब्राह्मणाय ददाति वनस्पतयस्तया प्रथन्ते । यां कण्वकश्यपेभ्यो ददाति
5 नीहारस्तया प्रथते । यां ब्राह्मणायाश्रोत्रियाय[2] ददाति मरीचयस्तया
प्रथन्ते । यां श्रोत्रियायार्षेयाय[3] ददाति तयामुष्मिंल्लोक ऋध्नोति । अस्मिंश्चा-
स्य लोके पुनर्भोगाय[4] भवति । तस्मात्स एवैष्टव्यः । वि स्वः पश्य व्यन्त-
रिक्षमिति सदः प्रेक्षते[5] । सोमपा वा एते ब्राह्मणाः । तेषां तेजस्वीनि
चक्षूंषि । अरातीयन्ति वा एते ददते । त एनमीश्वराः प्रतिनुदः ।
10 तेभ्य एव नमस्करोत्यप्रतिनोदाय । अत्रिर्हिरण्यं[6] ददाति । स्वर्भानुर्वा
असुरः सूर्यं तमसाविध्यत् । तमत्रिरेवान्वविन्दत् । यदात्रिर्हिरण्यं[6]
ददाति स्वर्गस्य लोकस्य समष्ट्यै । यद्यात्रेयं न विन्देद्य आर्षेयः सैहित-
स्तस्मै दद्यात् । तेनैवर्ध्नोति । असुरा वै देवेभ्यो दक्षिणामनयन् । तां
प्रत्यनुदन्त । ते ऽब्रुवन्नास्निहदेषेति । तेभ्यो ऽपरामनयन् । तां [प्रत्यनु-
15 दन्त । ते ऽब्रुवन्नृम्णमेषा]गादिति । तेभ्यो ऽपरामनयन् । तां प्रत्यनुद-
न्त । ते ऽब्रुवन्नद्राप्सीदेषेति । एतां[7] ह वै तदृषिरभ्यनूवाच ॥

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणामदधाम्[8] ॥

इति । सा सालावृकी संभूयासुरान्प्राविशत् । सैनान्निरदहत् । तस्मा-
20 द्दक्षिणा प्रतिनुत्ता न प्रतिगृह्या । न गोषु चारयेत्[9] । सालावृक्ये[10]-
वैनं भूत्वा प्रविशति । सैनं निर्दहति ॥ ४ ॥ Cf. III, 7; KS. XXVIII, 4; IV, 9; MS. IV, 8, 2. 3; I, 3, 37; TS. VI, 6, 1; I, 4, 43.

1. The ms. ॰नां.

2. The ms. adds आर्षेयाय.

3. The ms. ॰यरिषियाय.

4. The ms. ॰र्भोगाय.

5. The ms. सदा प्रत्यक्षयते.

6. Thus the ms. KS. आत्रिहिरण्यं. Cf. MS. p. 111, 1. 2 यदात्रेयाय हिरण्यं ददाति, which would fit in with Kāṭh. and Kap. यदात्रेयं न विन्देद्य आर्षेयः सैहितस्तस्मै दद्यात्. in lines 12-13.

7. Thus the ms. KS. एता.

8. Thus KS. The ms. तृमणामंथंद्री.

9. KS. चालयेत्.

10. The ms. छा॰.

यद्गां ददात्यायुस्तेन स्पृणोति । यद्वासो ददाति दीर्घं तेनायुः कुरुते । यदश्वं ददाति सूर्यभ्राजमेवैनं करोति । यदनो यद्रथं ददाति शरीराणि तेन स्पृणोति । यदविं यदजां ददाति मांसानि तेन स्पृणोति । यदोदनं यन्मन्थं ददाति यदेवास्यान्तरात्मं तत्तेन स्पृणोति । यद्वरं ददात्यात्मानं तेन स्पृणोति । आत्मा हि वरः । यद्ब्रह्मणे 5 ददाति बार्हस्पत्यो वै ब्रह्मा बृहस्पतिमेव तेन प्रीणाति । यदुद्गात्रे ददाति प्राजापत्यो वा उद्गाता प्रजापतिमेव तेन प्रीणाति । यद्धोत्रे ददाति वैश्वदेवो वै होता सर्वा एवास्य तेन देवता अभीष्टाः प्रीता भवन्ति । यदध्वर्युभ्यां ददात्याश्विनौ वा अध्वर्यू आश्विनावेव तेन प्रीणाति । यदृत्विग्भ्यो ददाति होत्रा वा ऋत्विजो होत्रा एवास्य तेना- 10 भीष्टाः प्रीता भवन्ति । यत्सदस्येभ्यो ददाति यमेव ते सोमं पिबन्ति तं तेन निष्क्रीणाति[2] । यां ब्राह्मणाय श्रोत्रियायानृत्विजे प्रसृप्ताय ददाति यामेव स विद्यां वेद सास्य तेनाभीष्टा प्रीता भवति । याम- ब्राह्मणायाश्रोत्रियायानृत्विजे प्रसृप्ताय ददाति यामेव स विद्यां वेद सास्य तेनाभीष्टा प्रीता भवति । यामकामो ददाति तस्मात्त्वत्रं 15 ब्रह्मात्ति । यां याचितो ददाति भ्रातृव्यं तया जिन्वति । यां बहिर्वेदि ददाति नैनं सा गच्छति । यां ज्ञातये ऽनृत्विजे प्रसृप्ताय ददाति पाप्मानं तन्निधत्ते । यां ज्येष्ठाय यां श्रोत्रियाय ददाति येनैव स तदि- न्द्रियेण भवति तदस्याभीष्टं प्रीतं भवति ॥ ५ ॥ Cf. KS. XXVIII, 5; MS. IV, 8, 3.

आदित्या वा असुरान्हत्वा वैरदेयादीषमाणास्ते देवान्प्राविशन् । 20 द्विदेवत्यान्वाव तत्प्राविशन् । एते हि देवानां सह भूयिष्ठाः । तस्मा- दादित्यो द्विदेवत्येभ्यो गृह्यते । उच्छिष्टाद्वा आदित्या जाताः । तस्मा- देष उच्छिष्टः सोमो गृह्यते । [उच्छेषणभागा वा आदित्याः । तस्मा- देष उच्छिष्टः सोमो गृह्यते ।] परिश्रिते गृह्णाति । रुद्रो वा अग्निः पशव आदित्यः । पशूनां गोपीथाय । रुद्रं वै देवा यज्ञान्निरभजन् । ते 25

1. The ms. ॰भा॰. 2. The ms. omits निष्.

समवादिशन्नेष ते मातरि भाग इत्यादित्यान्तमेतावदागमयित्यैतत्प्रति[1] यज्ञादन्तरदधुः । यत्परिश्रित आदित्यं गृह्णाति रुद्रमेव यज्ञादन्तर्दधाति । पशवो वा आदित्यः । यदेष भूयिष्ठः सोमो गृह्यते तस्मात्पशवो ऽद्यमाना न क्षीयन्ते । यदा बहवो ऽन्तर्वेदि स्युरथ गृह्णीयात् । ताने-
5 वान्नाद्यमवरुन्द्धे । यदास्य भ्रातृव्यो ऽन्तर्वेदि स्यादथ गृह्णीयात् । एष वै यजमानस्य स्वो लोको यद्वेदिः । पशव आदित्यः । स्व एव लोके भ्रातृव्यस्य पशून्वृङ्क्ते । बृहतीः पुरोरुचो भवन्ति । पशवो वै बृहतीः पशव आदित्यः । पशुष्वेव पशून्दधाति । सोममग्रे गृह्णाति । अथ दध्यथ सोमम् । ऊर्ग्वै दधि पशव आदित्यः । ऊर्जमेव पशुषु मध्यतो
10 दधाति । शृतातङ्क्यं भवति । तस्मादामा पक्वं दुहे । यदि कामयेत वर्षेदिति या दिव्या वृष्टिस्तया त्वा श्रीणामीति दध्नोपरिष्टाच्छ्रीणीयात् । पशवो वै दधि पशव आदित्यः । पशुभ्य एव वर्षति यर्हि वर्षति । पशुभ्य एव वृष्टिं निनयति । उपांशुसवनेन मेक्षयति । प्राणो वा उपांशुसवनः पशव आदित्यः । पशुष्वेव प्राणं[2] दधाति । विवस्व आदि-
15 त्यैष ते सोमपीथ इति । एष वाव स उपांशुसवनः । साक्षादेवैनं सोमपीथेन समर्धयति । यद्युद्गृहीतस्य स्तोको ऽवपद्यते ताजक्प्रवर्षति[3] । गृहीत्वापिदधाति गर्भाणां धृत्या अप्रपादाय । तं दशमे स्तोत्रे प्रच्यावयति । तस्माद्दशमे मासि गर्भा हिताः प्रजायन्ते । अन्यत्रेक्षमाणो[4] जुहोति । रुद्रो वा अग्निः पशव आदित्यः । पशूनां गोपीथाय । यदी-
20 क्षेत ब्राह्मण उपद्रष्टा पशून्गृह्णीयात् । पशूनामेव प्रदीयमानानामनुपद्रष्टा भवति ॥ ६ ॥ Cf. III, 8; KS. XXVIII, 6; IV, 10; MS. IV, 6, 9; TS. VI, 5, 6; I, 4, 22.

अन्तर्यामपात्रेण सावित्रं गृह्णाति । पशवो वा अन्तर्यामः । सवितृप्रसूताः पशवः प्रजायन्ते । सवितृप्रसूत एवैनान्प्रजनयति । तमसन्नं

1. Thus KS. The ms. °मेता गमयत्वैतत्प्राति.
2. The ms. प्राणा.
3. The ms. °वरिषति.
4. The ms. अन्यन्प्रेक्षमाणौ.
5. The ms. प्रवीर्य°.

जुहोति । तस्मादसन्नाः पशवः सददि[1] प्रजायन्ते । देवा वै तृतीयसवन-मुद्यमं नाशक्नुवन् । प्रातःसवने तार्हि सवितासीत् । तं देवा अब्रुवं-स्त्वयेदमुद्यच्छामहा[2] इति । नेत्यब्रवीन्मुख्यो ऽहमस्मि न प्रत्यङ्ङपक्र-मिष्यामीति । मुख्य एवात्रासै[3] इत्यब्रुवन्मुख्य इहाथ त्वयोद्यच्छामहा इति । तत्सवित्रोदयच्छन्त । यत्सावित्रो गृह्यते तृतीयसवनस्योद्यत्यै । 5
अभि त्वा देव सवितरित्येतया प्रातःसवने मुख्यः । समन्तं वै तत्स-विता यज्ञं पर्यभवत् । समन्तं भ्रातृव्यं परिभवति य एवं वेद । अन्तर्यामपात्रेणाग्रायणात्सावित्रं तृतीयसवने गृह्णाति । प्रातर्वा एष गृह्यते गायत्र्यां[4] लोके यदाग्रायणः । तं तृतीयसवने विगृह्णाति जगत्या लोके । तस्मादाग्रायणात्सवित्रो गृह्यते । सविता हि देवानां गायत्रः । 10
सावित्रस्य संस्रावे वैश्वदेवमभिगृह्णाति । समानो वा एष ग्रहः । संतत्यै । वैश्वदेवीरिमाः प्रजाः । सवितृप्रसूता प्रजाः प्रजायन्ते । सवितृप्रसूता एवैनाः प्रजनयति । सुशर्मासि सुप्रतिष्ठान इति । सोमे हि सोममभि-गृह्णाति । अथो सुशर्माणमेवोत्तरमधरस्मै करोति सुप्रतिष्ठानमधरमुत्तरस्मै । बृहदुक्षे[5] नम इति । बृहद्धि देवानां नमः पितॄणाम् । उक्थभागा[6] वै पितरो 15
ऽस्तोमभाजः । यत्रैवैभ्य उक्थं शंसति तदेभ्यो ग्रहं गृह्णाति ॥ ७ ॥

Cf. III, 8; KS. XXVIII, 7; XV, 12; IV, 10; MS. IV, 7, 1; I, 3, 28; TS. VI, 5, 7; I, 4, 26.

प्रजननं वै पात्नीवतः । यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रज-ननमेव तत् । उपांशुपात्रेण गृह्णाति । प्राणो वा उपांशुः । प्राणात्प्रजाः प्रजायन्ते । प्रजननाय । उपांशुना प्रयन्त्युपांशुपात्रेणोद्यन्ति । प्राणो वा उपांशुः । प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति । बृहस्पतिसुतस्य त इति । ब्रह्म वै 20
बृहस्पतिः । ब्रह्मणः प्रजाः प्रजायन्ते । ब्रह्मणैवैनाः प्रजनयति । इन्द इति[7] रेत एव दधाति । इन्द्रियावत इति । इन्द्रियं वै प्रजाः सोमपीथः ।

1. The ms. सदधि.
2. The ms. अब्रुवंस्त एतमु॰.
3. The ms. एवामासत.
4. The ms. गायत्रिया.
5. The ms. बृहदुक्थ्यै.
6. The ms. ॰क्थ्य॰.
7. The ms. इन्दविति.

अग्ना३इ पत्नीवा३[1] निति मिथुनमेव करोति । सजूस्त्वष्ट्रा सोमं पिबेति । त्वष्टा वै रूपाणां विकर्ता । सो ऽस्मै रूपाणि विकरोति । एष वै ग्रहः पत्नीभ्यो नातिष्ठत । तं देवा आज्यं वज्रं कृत्वाघ्नन् । यत्पात्नीवतं श्रीणाति स्तृत्यै[2] । संपातेन श्रीणाति संतत्यै । उपरिष्टाच्छ्रीणाति । तस्मात्स्त्र्यखलतिर्भावुका ।
5 भृतं वा एतं सोमं जुहोत्यभृतानितरान् । तस्मात्स्त्री निर्वीर्यानिर्वीर्यः पुमान् । नैतस्य होता यजति । पश्चेव हि सः । पश्चात्प्राणान्परिहरेत् । अग्नीध्यजति । पुरो हि सः । पुरः प्राणान्नानुयजति । यदनुयजेदग्निना प्राणानन्तरियात्प्रमीयेत । भृतं[3] वा एतं सोमं भक्षयति । तस्मादग्नीत्पण्डको भावुकः । प्रजननं वै पात्नीवतः । तस्माद्बहुपशुर्भावुकः । सह पात्रेण
10 नेष्टारमभिसर्पति । पत्नीरेव सोमपीथं गमयति । नोपस्थ आसीत । यदुपस्थ आसीत पण्डकः स्यात् । अन्तरा नेष्टारं च धिष्ण्यं च व्यवसर्पति । स्त्रीणां वै नेष्टा पुमान्धिष्ण्यः । मिथुन एव रेतो दधाति ॥ ८ ॥

Cf. III, 9; KS. XXVIII, 8; IV, 11; MS. IV, 7, 4; I, 3, 29; TS. VI, 5, 8; I, 4, 27.

इन्द्रो वै वृत्रमहन् । तस्य मूर्धानमुदरुजत् । स द्रोणकलशो ऽभवत् । ततो यः सोमः समस्रवत्स हारियोजनो[4] ऽभवत् । इन्द्रो वै वृत्रं हत्वा तस्य
15 क्रोम्णो[5] हृदयात्सोमं समसिञ्चत् । स हारियोजनो[4] ऽभवत् । सो ऽमन्यत यदिममभृतमद्वितीयं होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वाभविष्यन्तीति[6] । संस्थितः सोम आसीत्प्रहृताः परिधयः । अथोपोदतिष्ठद्धोतुम् । तमग्निरब्रवीन्न मय्येतमभृतमद्वितीयं होष्यसीति । तस्मिन्धाना आवपत् । तं भृतं द्वितीयवन्तमजुहोत् । यद्धाना आवपति भृतत्वायैव
20 द्वितीयत्वाय । ये वै ते वृत्रे पशव आसंस्त एवैते । पशूनेवैतत्कामदुघो ऽवरुन्द्धे । कामंकामं ह्येतेषां कुरुते । ऋक्सामे वा इन्द्रस्य हरी । तयोरेतद्भागधेयं यद्धारियोजनः । आधानानि परिधयः । यत्प्रहृतेषु परिधिषु हारियोजनं

1. The figure 3 is to be supplied in KS. as well.
2. The ms. स्तृत्यै.
3. KS. स्तृतं is to be emended.
4. The ms. हार्यो०.
5. The ms. क्रोम्नो.
6. ? Cf. MS. p. 98, l. 5 यन्न होष्यामि तदन्वभविष्यन्तीति.

जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति । प्रजापतिर्वा आग्रायणः ।
आग्रायणादेष सोमो ऽतिरिच्यते । यद्वै यज्ञस्यातिरिच्यते प्रजापतिं तदभ्य-
तिरिच्यते । यदेतमतिरिक्तं सोमं जुहोति तस्मादयमतिरिक्तः प्रजापतिः
प्रजा अभिपवते[1] । द्रोणकलशेनोन्नेता हारियोजनं[2] जुहोति । अतिरिक्तं वा
एतत्पात्राणां यद्द्रोणकलशो ऽतिरिक्त एष ऋत्विजां यदुन्नेतातिरिक्त एष 5
सोमानां यद्धारियोजनः[2] । अतिरिक्तेनैवातिरिक्तमाप्नोति । उन्नेतर्युपहवमिच्छ-
न्ति य एव तत्र सोमपीथस्तस्यावरुद्ध्यै । ये वै ते वृत्रे पशव आसंस्त एवैते ।
यत्संभिन्द्यात्सीशारुका एनमल्पाः पशवो भुञ्जन्त उपतिष्ठेरन् । हिनस्ति हि ।
यन्न संभिन्द्यादसीशारुका एनं बहवः पशवो ऽभुञ्जन्त उपतिष्ठेरन् । न हि
हिनस्ति । समवगृह्णीयात्[3] । उभयमेव करोति । असीशारुका एनं बहवः 10
पशवो भुञ्जन्त उपतिष्ठन्ते । निरवधयेद्य[4] एव तत्र सोमपीथस्तस्यावरुद्ध्यै ।
उत्तरवेद्यां निवपति । पशवो वा उत्तरवेदिः पशवो हारियोजनीः[2] । पशुष्वेव
पशून्दधाति ॥ ९ ॥ Cf. KS. XXVIII, 9; MS. IV, 7, 4; TS. VI, 5, 9.

इति कपिष्ठलकठसंहितायां चतुश्चत्वारिंशत्तमो ऽध्यायः ॥

---

1. KS. °वपते is to be corrected.
2. The ms. हार्यो°.
3. Thus the ms. KS. समिव.
4. Thus the ms. KS. निरिव.

पात्राणि प्रयुज्यन्ते ऽनयोर्लोकयोर्विधृत्यै । प्रान्यानि युज्यन्ते नान्यानि । यानि प्रयुज्यन्त इमं तैर्लोकं दाधार । यानि न प्रयुज्यन्ते ऽमुं तैः । पराङ् ह्यसौ लोको ऽनिरुक्तः । उपांशुपात्रं प्रयुज्यते । अजा एव तत्पशूनामनुप्रजायन्ते । त्रिर्विगृह्णाति । तस्मात्सा त्रीञ्जनयति । अथो द्वौ ।
5 यदुपांशुपात्रं प्रयुज्यते ऽजा एव तेन पशूनां दाधार । अन्तर्यामपात्रं प्रयुज्यते । अवय एव तत्पशूनामनुप्रजायन्ते । यदन्तर्यामपात्रं प्रयुज्यते ऽवीरेव तेन पशूनां दाधार । ऋतुपात्रे प्रयुज्येते । अश्वा एव तत्पशूनामनुप्रजायन्ते । तस्मात्तयोरश्वस्येव शफो ऽधस्तात् । यदृतुपात्रे प्रयुज्येते अश्वानेव तेन पशूनां दाधार । उक्थ्यपात्रं प्रयुज्यते । आरण्या एव तत्प-
10 शवो ऽनुप्रजायन्ते । तस्मात्तान्धृतान्ग्राममागतान्घ्नन्ति । यदुक्थ्यपात्रं प्रयुज्यत आरण्यानेव तेन पशून्दाधार । शुक्रपात्रं प्रयुज्यते । अत्त्रीरेव तत्प्रजा अनुप्रजायन्ते । मन्थिपात्रं प्रयुज्यते । आद्या एव तत्प्रजा अनुप्रजायन्ते । यदेते प्रयुज्येते उभयीरेवैतदत्रीश्चाद्याश्च[1] प्रजा दाधार । ऋतुपात्रे शुक्रपात्रात्पूर्वे प्रयुज्येते । असौ वा आदित्यः शुक्रो रश्मय ऋतवः ।
15 तस्मादेते पूर्वे प्रयुज्येते । पूर्वे ह्येते[2] । एतस्मादवरमादित्यपात्रं शुक्रपात्रात्प्रयुज्यते । गाव एव तत्पशूनामनुप्रजायन्ते । यदादित्यपात्रं प्रयुज्यते गा एव तेन पशूनां दाधार । आग्रायणपात्रं प्रयुज्यते । सर्वा एव तत्प्रजा अनुप्रजायन्ते । यदाग्रायणपात्रं प्रयुज्यते सर्वा एव तेन प्रजा दाधार । द्रोणकलशः प्रयुज्यते । प्रजापतिर्वै द्रोणकलशः । यद्द्रोण-

1. KS. उभयो॰ is to be emended. The ms. उभयै॰.
2. The ms. ह्येव.

कलशः प्रयुज्यते तस्मादिदं प्रजापतिः प्रजा वेद तस्मादयं वयो ऽस्ति। एतावन्तो वै प्रातर्ग्रहा गृह्यन्ते । ते[1] स्तोत्रवन्त उक्थवन्तो निदानवन्त आयतनवन्तः कर्तव्याः । नवैतान्गृहीत्वा नवभिर्बहिष्पवमाने[2] स्तुवन्ति । तेन[3] ते स्तोत्रवन्तः । यत्पुनरेत्याश्विनं गृह्णाति । स्तोमेनैव स स्तोत्रवान् । यदुपांश्वन्तर्यामौ हुतौ होतानुमन्त्रयते तेन तावुक्थवन्तौ । यदैन्द्रवायवं तेनैन्द्रवायव उक्थवान् । यन्मैत्रावरुणं तेन मैत्रावरुण उक्थवान् । यदाश्विनं तेनाश्विन उक्थवान् । यन्निष्केवल्यं तेन शुक्रामन्थिनावुक्थवन्तौ[4] । यद्वैश्वदेवं तेनाग्रायण उक्थवान् । यदाग्निमारुतं तेन ध्रुव उक्थवान्[5] । यदुक्थान्युक्थशंसिनः शंसन्ति तेनोक्थ्य उक्थवान् । एतावन्तो वै प्रातर्ग्रहा गृह्यन्ते । तानेतत्स्तोत्रवत उक्थवतो निदानवत आयतनवतः करोति । निदानवानायतनवान्भवति य एवं वेद[6] ॥ १ ॥ Cf. KS. XXVIII, 10; MS. IV, 8, 8; TS. VI, 5, 10. 11.

देवाश्च वा असुराश्च संयत्ता आसन् । ते देवाः संघातंसंघातं पराजयन्त । ते ऽविदुरनायतना हि वै स्मस्तस्मात्पराजयामहा इति । त एताः पुरो ऽकुर्वत । ता एषामनायतना नाध्रियन्त । त एतान्पुरोडाशानपश्यन् ।ताननुसवनं निरवपन् । तैः पुरो ऽदृंहन् । सवनानि वाव ते पुरो ऽकुर्वत । यत्पुरो ऽदृंहंस्तत्पुरोडाशानां पुरोडाशत्वम् । यदनुसवनं पुरोडाशान्निर्वपति सवनानां धृत्यै विजित्यै । तस्मादनुसवनं पुरोडाशस्य प्राश्नीयात्सोमपीथस्य धृत्यै । यतो घृतानक्तं[7] स्यात्ततः प्राश्नीयात् । आज्येन वै वज्रेण देवा वृत्रमघ्नन् । सोमो वृत्रः । सोमपीथस्याघाताय ।

1. The ms. तस्मान.
2. Thus KS. The ms. न.
3. KS. सो॰ to be corrected.
4. KS. शुक्रम॰. Elsewhere Kāṭh. also has शुक्राम॰.
5. This sentence is missing in KS.
6. The ms. adds इति आयुस्थानकं दशमं प्रपाठकः समाप्तः ॥ १ ॥
7. The ms. घृतानाक्तं. KS. घृताक्तं is to be corrected. Cf. MS. p. 136, l. 19 seq. घृतं वै देवा वज्रं कृत्वा सोममघ्नन् । अभि खलु वा एतं घारयन्ति । यत्प्राश्नीयात्सोमपीथं हन्यात् । यन्न प्राश्नीयात्सोमपीथेन व्यृध्येत । यत्रानभिघृतं तत्प्राश्यः सोमपीथस्य धृत्यै । तन्न सूर्द्यम् । प्राश्य एव.

तदाहुर्न वा अन्येनाज्यादहीने समष्टुमर्हतीति । सर्वमेतद्धविर्भूतं यत्किं-
चोत्पुनन्ति । यदेवानुत्पूतं स्यात्तस्य नाश्नीयात् । दीर्घजिह्वी वै देवानां
यज्ञमवालेट्[1] । प्रातःसवनं तद्यमात् । यत्सा पयस्याभवत्तस्मादामिक्षा
विमदितेव । यत्पयस्या प्रातःसवने भवति प्रातःसवनस्य समृद्ध्यै ।
5 मैत्रावरुणी प्रातःसवने भवति । नोत्तरे सवने अश्नुते । प्राणापानौ
वै मित्रावरुणौ । प्राणापानावेव मुखतः परिहरते । तस्मान्मुखतः प्राणा-
पानौ । न वै स्तोत्रेण न शस्त्रेण पङ्क्तिर्यज्ञे ऽवकल्पते । पञ्चैतानि
हवींषि । पङ्क्तिमेवैतद्यज्ञे ऽवकल्पयति । हविष्पङ्क्तिर्वै यज्ञो नाराशंस-
पङ्क्तिः पाङ्क्तः । पञ्चैतानि हवींषि । तेन हविष्पङ्क्तिः । द्विनाराशंसा
10 प्रातःसवने द्विनाराशंसा माध्यन्दिन एकनाराशंसा तृतीयसवने । तेन
नाराशंसपङ्क्तिः । अग्नीषोमीयः पशुस्त्रीणि सवनानि वशानूबन्ध्या ।
तेन पाङ्क्तः । य एवमेतानि यज्ञस्य रूपाण्यनुवेदश्नोति ॥

देवाश्च वा असुराश्च संयत्ता आसन् । ते देवेभ्यो महिमानो
ऽपाक्रामन् । ते ऽसुरानगच्छन् । ते ऽसुरा देवानां बहूनि शतान्य-
15 घ्नन् । तानीमानि च्छन्दांसि यान्ययज्ञवाहानि । ते देवा अबिभयुरित्थं
वाव नः सर्वानसुरा अवपत्स्यन्तीति । तान्युपामन्त्रयन्त । ते ऽब्रुवन्वार्यं
वृणामहा इति । ते परिवापपुरोडाशमवृणत । तद्भागधेयमभ्यायन् ।
ऋक्सामे वावैभ्यस्तदपाक्रामताम् । पशवो वागिन्द्रियं प्राणापानौ । स
इन्द्रो ऽमन्यतेमे वावेदमभूवन्निति । तेषां सायुज्यमगच्छत् । हरिवाँ
20 इन्द्रो धाना अत्त्विति । ऋक्सामे वा इन्द्रस्य हरी । ऋक्सामयोरेव
तत्सायुज्यमगच्छत् । पूषण्वान्करम्भमिति । पशवो वै पूषा । पशूनामेव
तत्सायुज्यमगच्छत् । सरस्वतीवान्भारतीवान्परिवाप इति । वाग्वै सरस्वती ।
वाच एव तत्सायुज्यमगच्छत् । इन्द्रस्यापूप इति । इन्द्रियं वा इन्द्रः ।
इन्द्रियस्यैव तत्सायुज्यमगच्छत् । मित्रावरुणयोः पयस्येति । प्राणापानौ
25 वै मित्रावरुणौ । प्राणापानयोरेव तत्सायुज्यमगच्छत् । एतेषामेव महिम्नां
सायुज्यं गच्छति सर्वमायुरेति पशुमान्भवति न यज्ञियामार्तिमार्छति य

1. The ms. °लेत्.

एवं वेद ॥ २ ॥ Cf. KS. XXIX, 1; MS. III, 10, 5, 6.

नीडं[1] वा एतद्यज्ञस्य क्रियते यद्यजुषा क्रियते । उच्चैर्ऋचा च साम्ना च क्रियते । यदृचः पुरोरुचो भवन्ति द्रढिम्न एव प्रत्युत्तब्ध्या अशिथिलत्वाय । प्रैवर्चाह प्र यजुषा यच्छति गमयति ग्रहेण । ऋचा वै स्तोत्राय गृह्यते यजुषा शस्त्राय । तस्मादेते संहिते । संहिते हि स्तोत्रं च शस्त्रं च । पराङ् वा एतर्हि यज्ञः पराचीर्देवतास्तृतीयसवने यजमानात् । आग्नेय्या पुरस्तात्सौम्यं परियजति वैष्णव्योपरिष्टात् । अग्निर्वै सर्वा देवता विष्णुर्यज्ञः । देवताश्चैव यज्ञं चालभते । घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति । तस्यैषानुस्तरणी यत्सौम्यः । दक्षिणार्धे ऽग्नेर्जुहोति । दक्षिणा हि पितॄणाम् । सकृदवद्यति । सकृदवत्तं हि पितॄणाम् । यन्मेक्षणेन द्वितीयमवद्यति तेनैव सकृदवत्तं भवति । उद्गातृभ्यो हरन्ति । सोमदेवत्यं वै साम । साम्नः सवीर्यत्वाय सतनूत्वाय । प्राश्यो न प्राश्यं[2] इति मीमांसन्ते । यत्प्राश्नीयात्प्राकारुकः स्याद्यन्न प्राश्नीयादहविः स्यात् । अवजिघ्रेत् । उभयमेव करोति । यो ऽलमन्नाद्याय सन्नन्नं नाद्यात्स प्राश्नीयात् । परं वा एतदन्नं यत्पितरः । परेणैवान्नेनावरमन्नाद्यमवरुन्द्धे । भेषजं वा एतद्देवा यज्ञायाकुर्वन् । यत्सौम्यस्तदेष भिषज्यः[3] । तस्मादामयाविना प्राश्यः ॥

पितरो मन्दन्ती सोमप्रतीका मन्दन्तां व्यशेम देवहितं यदायुः । इन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुः । हृदिस्पृक् [ क्रतुस्पृग् ] वर्चोधा असि वर्चो मे धेहि ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

इति सौम्यमवेक्षेत । यद्वा इह प्राकरोति यदस्यात्मनो मीयते पितॄंस्तद्गच्छति । यत्सौम्यमवेक्षते तदेवात्मन्यच्छते । परीव पश्येत् । यत्परिपश्यत्यात्मानमेव परिपश्यति । स ह[4] त्वा अमुष्मिँल्लोके सर्वतनूर्य एवं वि-

1. Bloomfield suggests नीचं. See Schroeder's note in KS.

2. Thus the ms, KS. प्राश्या३ न प्राश्या३.

3. The ms. यत्सौम्यस्तस्मादेषा भविष्यद्यस्.

4. KS. सह to be corrected.

द्वान्सौम्यमवेक्षते । वीर्यं वा उपसदो निर्वीर्यं तृतीयसवनम् । ता बहिर्यज्ञं क्रियन्ते । यत्सौम्येन [ तृतीयसवने चरन्ति ] तृतीयसवन एवं[1] वीर्यं दधति । एता हि देवता उपसत्स्विज्यन्ते । आग्नेय्या पुरस्तात्सौम्यं परियजति हतो नेद्यज्ञमभिप्रपद्याता[2] इति । वैष्णव्योपरिष्टादग्निष्टोमे नेत्सौम्यमभिप्र-
5 पद्याता इति । उभयत एव परिस्तृणात्यनभिप्रपादाय । आग्नेय्या घृतस्य यजति सौम्या सौम्यस्य वैष्णव्योपरिष्टाद्घृतस्य । यथापूर्वमेव देवतास्तर्पयति[3] ॥ ३ ॥ Cf. KS. XXIX, 2; MS. IV, 7, 2. 3; TS. VI, 6, 7.

प्राणा वै सीस्थितयजूंषि । नवैतानि यजूंषि । नवभिर्बहिष्पवमानीं स्तुवन्ति । नव प्राणाः । प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति । संततं जुहोति
10 प्राणानां संतत्या अविच्छेदाय । यं कामयेत प्रमीयेतेति नव कृत्वो गृहीत्वायजुष्केणैकैकं जुहुयात् । प्राणा वै सीस्थितयजूंषि । प्राणेभ्य एवैनमन्तरेति ताजक्प्रधन्वति । विश्वरूपो वै त्वाष्ट्रो यज्ञस्य व्यृद्धं च समृद्धं चापश्यत् । षडेतान्यृग्म्याणि । यदेवास्य व्यृद्धं तत्तैः समर्धयति । त्रीणि यजूंषि । समृद्धमेव तत् । षडृग्म्याणि । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठति ।
15 त्रीणि यजूंषि । त्रय इमे लोकाः । एष्वेव लोकेष्वृध्नोति ॥

यद्वै यज्ञस्यातिरिच्यते वरुणस्तद्गृह्णाति । यज्ञस्यैतदतिरिच्यते यदृजीषं यदौदुम्बरी यदधिषवणे । तेनापो ऽवभृथमवयन्ति । आपो वै वरुणः । निर्वरुणत्वाय । न वहन्तीष्वभ्यवेयुः[4] । पशवो वा ऋजीषम् । पशूनस्य निर्मृज्युरपशुः स्यात् । नोदञ्चो ऽभ्यवेयुः । यदुदञ्चो ऽभ्यवेयुरभीपतः प्रजा
20 वरुणो गृह्णीयात् । न दक्षिणा । यद्दक्षिणा पितृभ्यः प्रजा निधूवेयुः । उदञ्चः प्राञ्चो ऽभ्यवयन्ति । पश्चाद्धि प्राङ् यज्ञो वरुणपाशादुन्मुच्यमानं[5] एति । स्थावरास्ववयन्ति[6] । स्थावरा वै प्रत्यक्षं वरुणः । वरुण एव वरुणमवयजते । उरुं हि राजा वरुणश्चकार ॥ शतं ते राजन्भिषजः सहस्रमिति

1. The ms. ॰सवनस्यैव.
2. The ms. नो for नद्.
3. KS. देवताः कल्पयाति.
4. The ms. ॰भ्येयुः.
5. The ms. ॰ना.
6. The ms. स्थावराः स्ववयंति. KS. स्थावरास्स्वयन्ति is to be corrected. Cf. MS. p. 112, l. 5 स्थावरा अभ्यवयन्ति । ता हि साक्षाद्वरुणः.

यथायजुः। अग्नेरनीकमप आविवे[शेत्याघारमाघारयति समिद्ध्या एवोद्दीप्त्यै। ..... ॥ ४ ॥] Cf. III, 11; KS. XXIX, 3; IV, 13; MS. IV, 8, 4. 5; I, 3, 39; TS. VI, 6, 3; I, 4, 45.

[यज्ञस्य वै शिरो ऽच्छिद्यत। ततो यो रसो ऽस्रवत्सा वशाभवत्। यद्वशानूबन्ध्या भवति यज्ञस्य सरसत्वाय। मित्रो वै यज्ञस्य स्विष्टं] गृह्णाति वरुणो दुरिष्टम्। यन्मैत्रावरुणी वशानूबन्ध्या भवत्युभयत एव यज्ञं प्रमुच्य यजमानाय संप्रयच्छति मित्राच्च वरुणाच्च। यथा लाङ्गलेनोर्वरां प्रभिनेत्त्येवमृक्सामाभ्यां यज्ञः प्रभिद्यते। यथा मत्यमन्ववास्यत्येवं तत्। यद्वशानूबन्ध्या यज्ञस्य शान्त्या अनुबध्यते। यत्प्रथममस्रवत्तद्बृहस्पतिरुपायद्यद्द्वितीयं तन्मित्रावरुणौ यत्तृतीयं तद्विश्वे देवाः। यदि तिस्रो ऽनूबन्ध्याः स्युर्मैत्रावरुणीं प्रथमां कुर्यादथ वैश्वदेवीमथ बार्हस्पत्यां यज्ञस्य सर्वत्वाय सरसत्वाय। अत्रात्र हि

1. The Kāṭh. continues:

यत्र तृणं वा दारु वा पश्येत्तत्प्रत्याघारयेत्। अग्निमत्येव जुहोति समृद्ध्यै। अपबर्हिषः प्रयाजान्यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति। आज्यभागौ यजति। प्राणापानौ वा आज्यभागौ। प्राणापाना एव प्रजानां वरुणपाशान्मुञ्चति। अथैष वारुणो निर्वरुणत्वायैककपालो भवति। न वै पुरुषं कपालैराप्तुमर्हति। एकधैवैनमाप्नोति। अग्नीवरुणाभ्यां समवद्यति। उभयत एवैनं वरुणपाशान्मुञ्चत्यग्नेश्च वरुणाच्च। सर्वो वा एष यज्ञः। तस्य बहु क्रियते बहु न क्रियते। यत्संस्थापयेद्यज्ञं वरुणेन ग्राहयेत्। यत्र संस्थापयति यज्ञमेव वरुणपाशादुत्सृजति। **समुद्रे ते हृदयमप्स्वन्त**रिति। समुद्रयोनिर्वै यज्ञः। स्वमेवैनं योनिं गमयति। **यज्ञस्य त्वा यज्ञपत** इत्याहुतिमेव करोति। **अवभृथ निचुङ्कुण**ेत्युभयस्मादेवैनमेतद्देवकृताच्च मनुष्यकृताच्चैनसो मुञ्चति। **देवीराप एष वो गर्भ** इति। अपां वा एष गर्भः। स्वमेवैनं योनिं गमयति। **अभिष्ठितो वरुणस्य पाशो ऽवहतो वरुणस्य पाश** इति वरुणपाशमेवावहन्ति। **अप्सु धौतस्य ते देव सोमे**ति बिन्दुमाचामति य एव तत्र सोमपीथस्तस्यावरुद्ध्यै। यदाचामेद्वरुण एनं ग्राहुकस्स्यात्। नीव गृह्णीत। उभयमेव करोति। **प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पाशाये**ति वरुणपाशमेव प्रत्यस्यति। **उदेत प्रजामायुर्वर्चो दधाना** इत्याशिषमेवाशास्ते। **एधो ऽस्येधिषीमही**ति वरुणमेव निरवदायैधन्तमुपयन्ति। **समिदसि समेधिषीमही**त्याशिषमेवाशास्ते। **तेजो ऽसि तेजो मयि धेही**ति तेज एवात्मन्धत्ते। **अपो अद्यान्वचारिषं रसेन समगन्मही**ति यथायजुः ॥ ३ ॥ For references see above.

2. This long passage of twelve lines (beginning with गृह्णाति and ending with प्रतितिष्ठति in line 6, page 272) has been misplaced in the ms. It occurs there after यथा. p. 272, l. 18.

यज्ञस्य रसः । यातयामा[1] वा एतस्य देवताश्च ब्रह्म च यः सोमेन यजते । यदेते वैश्वदेवी च बार्हस्पत्या च भवतो देवतानां चैव ब्रह्मणश्चायातयामत्वाय । वैश्वदेवी मध्ये भवति । वैश्वदेवीरिमाः प्रजाः । प्रजास्वेव रेतो दधाति । उपांशु यजति । अनिरुक्तं हि रेतः ।
5 बार्हस्पत्योत्तमा[2] भवति । ब्रह्म वै बृहस्पतिः । अन्तमेवागत्य ब्रह्मवर्चसे[3] प्रतितिष्ठति । यथा वा अनड्वान्यथाश्वो विमुक्तो ऽपक्रामत्येवं सोमेनेजानाद्देवताश्च यज्ञश्चापक्रामन्ति । आग्नेयं पञ्चकपालमुदवसानीयं निर्वपति । अग्निर्वै सर्वा देवताः पाङ्क्तो यज्ञः । देवताश्चैव यज्ञं चालभते । गायत्रो वा अग्निर्गायत्रच्छन्दाः । तं छन्दसा व्यर्धयति यत्प-
10 ञ्चकपालं करोति । अष्टाकपालः कार्यः । अष्टाक्षरा गायत्री । गायत्रो ऽग्निर्गायत्रच्छन्दाः । स्वेनैवैनं छन्दसा समर्धयति । पाङ्क्ते[4] याज्यानुवाक्ये भवतः । पाङ्क्तो यज्ञः । तेन यज्ञान्नैति ॥ ५ ॥ Cf. KS. XXIX, 4; MS. IV, 8, 6; TS. VI, 6, 7.

उपयामगृहीतो ऽसि । प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधम् । अग्निजिह्वेभ्यस्त्वर्तायुभ्यो वातापिभ्य पर्जन्यात्मभ्यः इन्द्र-
15 ज्येष्ठेभ्यो वरुणराजभ्यः । पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा । सते त्वासते त्वा । भूताय त्वा भव्याय त्वा । यतः प्रजा अखिद्रा अजायन्त तस्मै त्वा प्रजापतये विभुदाम्ने[5] जुहोमि स्वाहा ॥

अभि सोमो ऽपः कामयते ऽभि सोममापः । यथा गावः संजानानाः संगत्यान्यान्यां घ्नन्त्येवं वा एतौ संजानानौ संगत्यान्यो ऽन्य-
20 स्येन्द्रियं वीर्यं निर्हर्तः[6] । उभयमेतत्प्राजापत्यं यत्सोमश्चापश्च । अपामेष ओषधीनां रसो यद्दधि । यद्वै पुत्रौ युध्येते पिता ताभ्यां कल्पयति । स्व एवैनौ लोके स्वेन भागधेयेन पिता शमयति । सह त्वै यज्ञेन

1. KS. ऽयातयामा is to be corrected. Cf. MS. p. 114, l. 1.
2. KS. बार्हस्पत्युत्तमा is to be corrected.
3. The ms. ब्रह्मवर्चसेनं.
4. The ms. पांक्ती.
5. KS. ०म्ने.
6. Thus emended. The ms. न्यस्ये प्रियं तिरहरत. KS. वीर्यान्निर्हतः is to be corrected. Cf. MS. p. 103, l. 4.

समृद्धेन यजते यस्यैष गृह्यते । दध्ना सर्वाणि सवनानि पशुमन्ति वीर्यवन्ति कर्तव्यानि । यत्पयस्यया प्रातःसवने चरन्ति तेन तत्पशुमद्वीर्यवत् । यद्दधिघर्मेण मध्यन्दिने तेन तत्पशुमद्वीर्यवत् । यदाशिरा तृतीयसवने तेन तत्पशुमद्वीर्यवत्[1] । सर्वाण्यस्य सवनानि पशुमन्ति वीर्यवन्ति भवन्ति य एवं वेद ॥ ६ ॥ Cf. KS. XXIX, 5; MS. I, 3, 35; TS. III, 5, 8. 9. 5

देवा वा असुरान्यज्ञमभिजित्य ते प्रबाहुग्ग्रहान्गृह्णाना आयन् । स प्रजापतिरमन्यत यः प्रथमो ग्रहीष्यते स एवेदं भविष्यतीति । स एतमंशुमपश्यत् । तं पराङ् प्राणन्नगृह्णीत[2] । स पराङ् श्रियो ऽन्तमगच्छत् । बुभूषन्नेतं गृह्णीत । पराङेव प्राण्यान्नापान्यात् । पराङेव श्रियो ऽन्तं गच्छति । यदपानित्यार्तिमार्छति प्र वा मीयते सर्वज्यानिं वा 10 जीयते । यदि कामयेत सदृङ् यजमानः स्यादिति न प्राण्यान्नापान्यात् । सदृङ्ङेव भवति । चतुःस्रक्ति पात्रं भवति । चतस्रो दिशः । सर्वास्वेव दिक्ष्वृध्नोति । हिरण्येन संस्पर्शयति । अमृतं वै हिरण्यम् । अमृतेनैवैनं संदधाति । स[कृदभिषुतस्य गृह्णाति । न वै प्रजापतिं सवनैराप्तुमर्हति । एकधैवैनमाप्नोति । नर्चमन्वाह न यजुर्वद]ति । न 15 वै प्रजापतिं वाचाप्तुमर्हति । मनसैवैनमाप्नोति । यो ऽंशोरायतनं वेदायतनवान्भवति । वामदेव्यमेवांशुं गृह्णन्वामदेव्यं मनसा ध्यायेत् । एतद्वा अंशोरायतनम् । आयतनवान्भवति य एवं वेद । हिरण्यमभिव्यनिति । आयुर्वै हिरण्यम् । आयुषैवात्मानमभिधिनोति । अद्भिः प्रत्युक्षति । अमृतं वा आपः । अमृते[नैवैनं] संरम्भयति ॥ ७ ॥ 20
Cf. KS. XXIX, 6; MS. IV, 7, 7; TS. VI, 6, 10.

अथैते ऽतिग्राह्या यदेव परमोजो वीर्यमनवरुद्धं तस्यावरुद्ध्यै । यदाग्नेयस्तेजो वा अग्निस्तेज एव तेन पुरस्ताद्धत्ते । यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रियमेव तेन मध्यतो धत्ते । यत्सौर्यो ब्रह्मवर्चसमसावादित्य उपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते । तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्मवर्चसमसावादित्यः । तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियम्नुभयत आत्मन्परिगृह्णाति । उपस्तम्भनं 25

1. The ms. तत्स॰. 2. KS. प्राणन्न गृह्णीत is to be corrected.

वा एतद्यज्ञस्य यदतिग्राह्याः । चक्रियौ[1] पृष्ठानि । यदेते न गृह्येरन्नुपरिष्टाद्वरीयांसि पृष्ठानि प्राश्वं यज्ञं संमृण्युः । यदेते गृह्यन्ते पुरस्तादेव यज्ञमुपस्तभ्य चक्रियावुपास्यति सयत्वाय । प्रातःसवने गृह्णीयात् । एतद्वै सवनानां वीर्यवत्तमम् । वीर्यादेवैनानधिगृह्णाति ॥

5 देवा वै सर्व एव सदृशा आसन् । न व्यावृतमगच्छन् । तत एत एतान्ग्रहानपश्यन्नग्निराग्नेयमिन्द्र ऐन्द्रं सूर्यः सौर्यम् । ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानाम् । यस्यैते गृह्यन्ते व्यावृतमेव गच्छति श्रैष्ठ्यं समानानाम् । प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशत् । यज्ञमेव सो ऽमन्यतात्मानमन्तरगामिति । तस्य याः प्रियास्तिस्रस्तन्व आसींस्ता अपन्यधत्त ।

10 एतान्वाव तद्ग्रहानपन्यधत्त । येन यज्ञेनेर्त्सेत्तस्मिन्नेतान्गृह्णीयात् । सर्वमेवैनं सवीर्यं सयोनिं सतनूमृद्ध्यै संभरति ॥

वृत्रे वा एते पुरासन् । स इन्द्रो वृत्रं हत्वा स एतमाग्नेयमविन्दत । तमग्नये प्रायच्छदेतं मे धारयेति । स सौर्यमविन्दत । तं सूर्याय प्रायच्छदेतं मे धारयेति । स ऐन्द्रं विच्वेतरौ पुनरयाचत । तावस्मै न पुनरदत्ताम् । त

15 इमांल्लोकान्व्युपायन्नग्निरिममिन्द्रो ऽन्तरिक्षं सूर्यो ऽमुम् । एतैर्वै ते ग्रहैरेषु लोकेष्वार्ध्नुवन्नेतैरेषां लोकानामाधिपत्यं पर्यायन् । सर्वेष्वेवैषु लोकेष्वृध्नोत्येषां लोकानामाधिपत्यं पर्येति यस्यैते गृह्यन्ते ॥

यद्वै विराजस्तेजस्तदा[ग्नेयो यच्छक्वर्यास्तदैन्द्रो यद्रेवत्यास्तत्सौर्यः । ......[2]॥ ८ ॥ ] Cf. KS. XXIX, 7; MS. IV, 7, 3; TS. VI, 6, 8.

[ इति कपिष्ठलकठसंहितायां पञ्चचत्वारिंशत्तमो ऽध्यायः ॥ ]

---

1. Thus KS. The ms. चक्रति.

2. The Kāṭhaka continues:

यत्रैतानि सामानि स्युस्तदेतान्गृह्णीयात्साम्नां सतेजस्त्वाय । अथैते होमाश्च भक्षणानि च । एतैर्वै बम्भाविश्ववयसा इमांल्लोकानर्वाचश्च पराचश्च प्राजानीताम् । यस्यैते गृह्यन्ते समस्मा इमे लोका अर्वाञ्चः पराञ्चश्च भान्ति । एतेषां वै वीर्येणाग्निरित ऊर्ध्वो भात्यर्वाङ् सूर्यस्तपति तिर्यङ् वायुः पवते । सुप्रज्ञानो वा इत इत्थमसौ लोकः । अमुतो ह त्वा अर्वाङ् दुष्प्रज्ञानम् । स ह त्वा इमं लोकममुतो ऽर्वाङ् प्रजानाति यस्यैते गृह्यन्ते ॥ ७ ॥ For references see above.

......[1] अथ सौम्यः । सोमो रेतोधाः । मिथुन एव रेतो दधाति । अथ

1. The Kāṭhaka reads:

आग्नेयस्सौम्यो बार्हस्पत्यस्ते समानमर्धमालभ्यन्ते । यदाग्नेयस्तेजो वा अग्निस्तेज (the ms. ०स्तेजस, which Schr. emended to ०स्तेजस्स) एव तेन पुरस्ताद्धत्ते । यत्सौम्य इन्द्रियं वै सोम इन्द्रियमेव तेन मध्यतो धत्ते । यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिरुपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते । तेजो वा अग्निरिन्द्रियं सोमो ब्रह्म बृहस्पतिः । तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन्परिगृह्णाति ॥

दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसन् । या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते रक्षसामपहत्यै । किं तदेकादशिन्यां क्रियत इत्याहुर्ब्रह्मवादिनो यस्माद्विट् क्षत्रस्योपाशारमवस्यतीति । या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते । या अबलीयसीस्ताभ्य उत्तराम् । तस्माद्विट् क्षत्रस्योपाशारमवस्यति । दक्षिणत उद्धनां कुर्याद्देवयजनस्य रूपं रक्षसामपहत्यै । तस्माद्दक्षिणतस्तीर्थानां गाधम् । ये ऽग्निष्ठास्त्वयस्तान्समान्कुर्यात् । अग्निं वै पशवो ऽनूपतिष्ठन्ते । पशूनामुपस्थित्यै । आत्मा वा अग्निष्ठो भ्रातृव्या अस्येतरौ । तौ कधीयींसौ कुर्यात् । अधरमेव भ्रातृव्यं कुरुते । यौ परौ ता अग्निष्ठेन समौ । तौ हि तस्यस्वौ । आ परार्धादेवं मिनुयात्पापवसीयसस्य व्यावृत्त्यै । अथो अधरमेव भ्रातृव्यं कुरुते । ये ऽग्निष्ठादुदीचीनं तान्वर्षीयसः कुर्याद्यदि कामयेत विट् क्षत्रादोजीयसी स्यादिति । विशमेव क्षत्रादोजीयसीं करोति । ये ऽग्निष्ठाद्दक्षिणात्तान्वर्षीयसः कुर्याद्यदि कामयेत क्षत्रं विश ओजीयस्स्यादिति । क्षत्रमेव विश ओजीयः करोति । सर्वान्समान्कुर्याद्यदि कामयेत पापवसीयसं स्यादिति । पापवसीयसमेव करोति । तिरश्ची मीयते दिशां विधृत्यै । ऊर्ध्वा मीयन्त एषां लोकानां विधृत्यै । न यूपं बहिर्वेदि मिनुयान्न वेद्या अतिरेचयेत् । यजमानो वै यूपः । एतावती पृथिवी यावती वेदिः । यद्यूपं बहिर्वेदि मिनुयात्पृथिव्या यजमानं निर्भजेत् । यद्वेद्या अतिरेचयेद्भ्रातृव्याय लोकमुच्छिंषेत् । समां वेद्यन्तेन मिनुयात् । न पृथिव्या यजमानं निर्भजति न भ्रातृव्याय लोकमुच्छिंषति । उपरसंमितां मिनुयाद्यदि कामयेत पितृलोक ऋध्नुयादिति । पितृलोक एवर्ध्नोति । रशनासंमितां मिनुयाद्यदि कामयेत मनुष्यलोक ऋध्नुयादिति । मनुष्यलोक एवर्ध्नोति । चषालसंमितां मिनुयाद्यदि कामयेत देवलोक ऋध्नुयादिति । देवलोक एवर्ध्नोति । सर्वेष्वेवैषु लोकेष्वृध्नोति । रथाक्षेण मिमीते । वज्रो वै यूपो वज्रो रथः ।

**[ पौष्णः । ······[1] अथ ] पौष्णो ऽथ बार्हस्पत्यः । पशवो वै पूषा ब्रह्म बृहस्पतिः । पशूंश्चैव ब्रह्म चात्मन्नुपनियुङ्क्ते । अथ वैश्वदेवो ऽथैन्द्रः । वीर्यं वै विश्वे देवाः सह इन्द्रः । वीर्यं चैव सहश्चात्मन्नुपनियुङ्क्ते । अथ मारुतो ऽथैन्द्राग्नः । बलं वै मरुत ओज इन्द्राग्नी । बलं चैवौजश्चात्मन्नुपनियुङ्क्ते ।**

वज्र एव वज्रं दधाति । सर्वे ऽभिष्ठाः कार्याः । या अभिष्ठा अश्रयस्ता अग्निमभिपर्यूहेत् । तेनैव सर्वे ऽभिष्ठाः क्रियन्ते ॥

यदभिष्ठाद्रशना विहरन्ति तेनैव सर्वे ऽभिष्ठाः क्रियन्ते । द्वेद्वे रशने यूपमृच्छतः । तस्मात्स्त्रियः पुंसो ऽतिरिक्ताः । तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून्पतीन् । उपशयो द्वादशो भवति । द्वादश मासस्संवत्सरः । संवत्सरस्याप्त्यै । तं दक्षिणतः परिहृत्य निदधाति । दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसन् । वज्रो यूपः । रक्षसामपहत्यै । यद्यभिचरेत्पुरुषपशुं कुर्या**दिदमहममुमामुष्यायणममुष्याः पुत्रं नियुनज्मी**ति । रशनां यूपे ऽधिन्यस्येत् । वज्रो वै यूपः । वज्र एवैनं नियुनक्ति । ताजक्प्रधन्वति । यदि नाभिचरेदारण्यं पशुं निर्दिशेत् । तस्य नाश्नीयात् । उपशयं वा अन्वारण्याः पशव उपतिष्ठन्त एकादशिनीं ग्राम्याः । यदेकादशिन्या वेदिर्मीयते तस्माद्ग्राम्याः पशव आविरिव शान्ता इवं । यदुपशयो गुहेव शये । तस्मादारण्याः पशवो गुहेव निलायमिव प्रलायमिवं चरन्ति ॥ ८ ॥ Cf. MS. IV, 7, 9; TS. VI, 6, 4.

प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत । स एतामेकादशिनीमपश्यत् । तामाहरत् । तयात्मानमाप्रीणीत । यो रिरिचान इव मन्येत स एतामेकादशिनीमाहरेद्यस्मिन्नेव कस्मिंश्च यज्ञे । दश वै पुरुषे प्राणा आत्मैकादशः । यावानेवास्यात्मा तमाप्रीणाति । अग्निस्सर्वा देवताः । अग्ना एवैता देवता उपालभ्यन्ते । आत्मा वा आग्नेयो वाक्सरस्वती । यत्सारस्वती वाचमेव मिथुनमात्मन्नुपनियुङ्क्ते ।

1. There is again a gap. The Kāṭhaka text is as follows:

पशवो वै पूषा । प्रैव जनयति । अथ बार्हस्पत्यः । ब्रह्म वै बृहस्पतिः । ब्रह्मैव पशुष्वधिवियातयति । अथ वैश्वदेवः । वैश्वदेवीरिमाः प्रजाः । प्रजा एव ब्रह्मन्ननुनियुनक्ति । अथैन्द्रः । क्षत्रं वा इन्द्रः । क्षत्रमेव प्रजास्वधिवियातयति । अथ मारुतः । विड्वै मरुतः । विशमेव क्षत्रायानुनियुनक्ति । अथैन्द्राग्नः । ओजो वै वीर्यमिन्द्राग्नी । ओजसैव वीर्येण विशं क्षत्रायोपोहति । प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः । प्रजापतिः प्रजा असृजत । ता अस्मादपाक्रामन् । ता ऊर्ध्वा आयन् । ता अकामयतोप मा वर्तेरन्निति । सो ऽतप्यत । स आत्मानं मेधायालभत । ता एनमुपावर्तन्त । ता अस्मादबिभयुः । ता न्याच्यन्त । तस्मात्पशवो न्यक्ताः । ता आरादचरन् । ता एनं बलिभिरुपायन्देवयजनेन पृथिवी बर्हिषौषधयः प्रोक्षणीभिराप इध्मेन च यूपेन च वनस्पतयः पशुभिरजावय आशिरा चाज्येन च गावः । एते वै देवा बलिहृतः । यज्ञः प्रजापतिः । तस्मा एते । सर्वा हैवं बलिं हरन्ति । आस्मै बलिं हरन्ति य एवं वेद । तेषामपक्रमादबिभेत् । तेषां द्वन्द्वं वीर्याण्यात्मन्नुपन्ययुङ्क्त । आत्मा वा आग्नेयो वाक्सरस्वतीन्द्रियं सोमः । वाचं चैवेन्द्रियं चात्मन्नुपनियुङ्क्ते ॥

प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः ॥ २ ॥ Cf. KS. XXIX, 9; MS. IV, 7, 8; TS.VI, 6, 5.

आग्नेयं सारस्वतीं[1] सौम्यं बार्हस्पत्यं तान्सहालभेत ब्रह्मवर्चसकामः प्रजाकामः [पशुकामः] पुरोधाकामः। यदाग्नेय आग्नेयो हि ब्राह्मणः। यत्सारस्वती वाग्वै सरस्वती। वाचं हि वदति। यत्सौम्यः सोमं हि पिबति। यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मैव चतुष्पात्संपाद्य प्रतिष्ठापयति। ब्रह्मवर्चसी भवति। अथ पौष्णः। पशवो वै पूषा। पशूनेव ब्रह्मन्ननुनियुनक्ति। अथैन्द्रः। क्षत्रं वा इन्द्रः[2]। क्षत्रमेव संपाद्य प्रतिष्ठापयति। अथो क्षत्रेणैव पशून्ब्रह्मण उपोहति। आग्नेयो मध्ये भवत्यैन्द्रावभितः। आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यः। ब्रह्मणैव क्षत्रं मध्यतो व्यवसर्पति। प्र पुरोधामाप्नोति य एवं वेद। इन्द्राग्नी पशूनां भूयिष्ठभाजौ करोति। अग्नेराग्नेय इन्द्रस्यैन्द्र ऐन्द्राग्नः सह। तस्माद्ब्राह्मणश्च राजन्यश्च प्रजानां भूयिष्ठभाजौ। अथ वैश्वदेवो ऽथ मारुतः। विड्वै विश्वे देवा विण्मरुतः। विशमेव संपाद्य तां क्षत्रायानुनियुनक्ति। ब्रह्ममुखमेव क्षत्रं कृत्वा तस्मै विशमनुनियुनक्ति। प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः। सम्यगेव ब्रह्म समूहति सम्यक्क्षत्रं समीचीं विशम्। यत्रैव क्लृप्तैकादशिन्यालभ्यते कल्पते तत्र प्रजाभ्यः। ब्राह्मण एव ब्राह्मणो भवति राजन्यो राजन्यो वैश्यो वैश्यः। एकादशिन्या वा इदमक्लृप्तमनु प्रजाभ्यो न कल्पते। एषा वावैकादशिनी। तामेतां कापेया विदुः। तामेतामतिरात्रचरम आलभेत[3]। सत्त्रियेयमितरा यामिदं[4] प्रजा आपद्य चरन्ति। अह्नामेवैषा विधा। एतद्देवत्यान्यहानि ॥ ३ ॥ Cf. KS. XXIX, 10.

प्रजननं[5] वै पात्नीवतः। यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रजन-

1. The ms. adds तत्सौम्यः सौम्यो हि ब्राह्मणा.

2. KS. अथैन्द्राग्नो ऽथैन्द्रः। क्षत्रं वा इन्द्राग्नी क्षत्रमिन्द्रः.

3. Thus emended. The ms. ०चरममालभेत, KS. ०चरमामालभेत.

4. KS. ०मितरायामिदं to be corrected. For this and the previous emendation see ĀpŚr. XIV, 7, 20. 22.

5. The ms. begins the section with ओं. It is to be noted that this anuvāka begins a new chapter in KS.

नमेव तत् । पराङ् वा एतर्हि यज्ञः पराचीर्देवताः । त्वाष्ट्रो भवति । पराचीष्वेव देवतासु त्वष्टारं वृषाणमपिसृजति । सो ऽस्मै मिथुनं करोति । वज्रो वा एष पुरस्तात्संमीयते यदेकादशिनी । स ईश्वरः प्रत्यञ्चं यज्ञं संपुरः[1] । यत्पात्नीवतो मीयते प्रत्युत्तब्ध्यै सयत्वाय । मनोर्वै कपा-
5 लान्यासन् । तैर्यावतोयावतो ऽसुरानभ्युपादधात्ते[2] पराभवन् । अथ तर्हि त्वष्टावरूत्री आस्तामसुरब्रह्मौ । तावसुरा अब्रुवन्निमानि मनुक-पालानि याचेथामिति । तौ प्रातरित्वानावभिप्रापद्येतां वायवे ऽग्ना३इ[3] वायव इन्द्रा३ इति । किंकामौ स्थ इत्यब्रवीत् । इमानि नौ कपाला-नि देहीति । तान्याभ्यामददात् । तान्यरण्यं पराहृत्य समपिंष्टाम् ।
10 तन्मनोर्गावो ऽभिव्यतिष्ठन्त । तान्यृषभः समलेट्[4] । तस्य रुवतो यावन्तो ऽसुरा उपाशृण्वंस्ते पराभवन् । तौ प्रातरित्वानावभिप्रापद्येतां वायवे ऽग्ना३ इ वायव इन्द्रा३ इति । किंकामौ स्थ इत्यब्रवीत् । अनेन त्वर्ष-भेण[5] याजयावेति । तत्पत्नी यजुर्वदन्ती प्रत्यपद्यत । तस्या द्यां वागा-तिष्ठत् । तस्या वदन्त्या यावन्तो ऽसुरा उपाशृण्वंस्ते पराभवन् ।
15 तस्मान्नक्तं स्त्री चन्द्रतरं वदति । तौ प्रातरित्वानावभिप्रापद्येतां वायवे ऽग्ना३इ वायव इन्द्रा३ इति । किंकामौ स्थ इत्यब्रवीत् । अनया त्वा पत्न्या याजयावेति । सा पर्यग्निकृतासीत् । अथेन्द्रो ऽचायन्मनुं श्रद्धादेवं त्वष्टावरुत्री[6] असुरब्रह्मौ जायया व्यर्धयत इति । स आग-च्छत् । सो ऽब्रवीदाभ्यां त्वा[7] याजयानीति । नेत्यब्रवीत् । न वा
20 अहमनयोरीश इति । अतिथिपतिर्वावातिथेरीश इत्यब्रवीत् । तावस्मै प्रायच्छत् । स प्रतिवेशो वेदिं कुर्वन्नास्त । तावपृच्छतां को ऽसीति । ब्राह्मण इति । कतमो ब्राह्मण इति ॥

किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम् ।

1. The ms. संमुरो.
2. KS. ०पाधात् to be corrected to ०पादधात्.
3. The ms. does not give the figure 3.
4. The ms. ०लेत्.
5. KS. त्वर्षभेन is to be corrected. The ms. त्वं वृषभेण.
6. The ms. adds आस्तां.
7. The ms. adds पत्न्या.

श्रुतं चेदस्मिन्वेद्मि स पिता स पितामहः ॥

इति । तावविन्तामिन्द्रो वा इति । तौ प्रापतताम् । तयोर्याः प्रोक्षणीराप आसिस्ताभिरनुविसृज्य शीर्षे अच्छिनत् । तौ वृषश्च[1] यवाषश्चाभवताम् । तस्मात्तौ वर्षेषु[2] शुष्यतः । अद्भिर्हि हतौ । तां पर्यग्निकृतामुदसृजत्[3] । तयार्ध्नोत् । ता इमा मनाव्याः प्रजाः । यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामृध्नोति । सँस्थाप्यां३[4] न सँस्थाप्या३[4]मिति मीमाँसन्ते । स्रवति वै यज्ञो ऽसँस्थितः । तं स्रवन्तं यजमानो ऽनु परास्रवति[5] प्रजया च पशुभिश्च । सँस्थाप्यमेव यज्ञस्य प्रतिष्ठित्यै । यदि सँस्थापयेद्यावन्ति पशोरवदानानि तावन्त्याज्यस्यावद्येत्[6] । अयातयामि ह्येतत्प्राजापत्यं यदाज्यम् । अयातयामो देवानां प्रजापतिः । तदेव सँस्थापयति तदु न सँस्थापयति । उभयमेव करोति ॥ ४ ॥ Cf. KS. XXX, 1; MS. IV, 8, 1; TS. VI, 6, 6.

ऐन्द्रवायवाग्रा अग्रे गृह्यन्ते ऽथ शुक्राग्रा अथाग्रायणाग्राः । गायत्रो वा ऐन्द्रवायवस्त्रैष्टुभः शुक्रो जागत आग्रायणः । एतावन्ति वै छन्दाँसि । छन्दोभिर्देवाः स्वर्गं लोकमायन् । छन्दोभिरेव स्वर्गं लोकमेति । आग्रायणाश्चतुर्थे ऽहन् । जागतो वा आग्रायणः । जगन्मुख एष त्रिरात्रः । यदेव च्छन्द आप्नोति[7] तेनोत्तरं त्रिरात्रं प्रतनुते । ऐन्द्रवायवाग्राः पञ्चमे ऽहन् । गायत्रो वा ऐन्द्रवायवः । प्राणो गायत्री । प्राणमेव मध्यतो दधाति । तस्मान्मध्यतः प्राणः । शुक्राग्रा एव षष्ठे ऽहन् । त्रैष्टुभो वै शुक्रः । त्रिष्टुबन्त एष त्रिरात्रः । अन्तमेवैनमभ्युदूहति । शुक्राग्रा एव सप्तमे ऽहन् । त्रैष्टुभो वै शुक्रः । त्रिष्टुम्मुख एष च्छन्दोमः प्रत्युत्तब्ध्यै सयत्वाय । अथो यदेव च्छन्द आप्नोति तेनोत्तरं त्रिरात्रं प्रतनुते । आग्रायणाग्रा अष्टमे ऽहन् । जागतो वा आग्रायणः । जगन्मध्य एष च्छन्दोमः । छन्दसामेव

1. The ms. रि०.
2. The ms. वर्षे.
3. KS. उदासृजत् to be corrected. Cf. उत्सृजति in the next line and TS.
4. The ms. omits the figure 3.
5. The ms. पराभवति.
6. The ms. adds अयातयाम हित घृतेन प्रवरति.
7. The ms. जगन्मुख एष छंदोमः प्रत्युत्तब्धै सयत्वायाथो यदेव छंद आप्नोति. Cf. line 21.

व्यूहमनुव्यूहति ऐन्द्रवायवाग्राः प्रायणीय ऐन्द्रवायवाग्रा उदयनीये । प्राणो वा ऐन्द्रवायवः । प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति । प्राणा वै ग्रहाः । तानेतन्मोहयति यद्व्यतिहारं गृह्णाति । यदग्रान्यदग्रान्गृह्णीयात्तं धारयन्ना सादयितोरासीत्[1] । प्राणा वै ग्रहाः । प्राणानेवायतनश आपादयति । अथो-
5 त्तरं प्रसूता गृह्यन्ते । एवं ह वै केशिनो दाल्भ्यस्य[2] वैशवश्रंने ग्रहाञ्जगृहुः । स होवाच लुशाकपिः खार्गलिः[3] कथं ग्रहानग्रहीष्टेति । इत्थमित्थमिति हास्मा ऊचुः । स होवाच त्र्यनीकमस्य प्रजा भविष्यतीति । ततः पञ्चालास्त्रे-धाभवन् । यस्यैवं ग्रहा गृह्यन्ते त्र्यनीकमस्य प्रजा भवति ॥ ५ ॥ Cf. KS. XXX, 2; TS. VII, 2, 8.

ऐन्द्रवायवाग्रान्गृह्णीत यः कामयेत यथापूर्वं प्रजाभ्यः कल्पेतेति ।
10 यज्ञस्य वै क्लृप्तमनु प्रजाभ्यः कल्पते । यज्ञस्याक्लृप्तमनु न कल्पते । यथा-पूर्वमेव प्रजाभ्यः कल्पयति । न कनीयाञ्ज्यायांसमतिक्रामति । ऐन्द्रवायवा-ग्रान्गृह्णीयादामयाविनः । प्राणेन वा एष व्यृध्यते यस्यामयति । प्राण ऐन्द्रवायवः[4] । प्राणेनैवैनं समर्धयति । मैत्रावरुणाग्रान्गृह्णीरन्येषां दीक्षितानां प्रमीयेत । प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षि-
15 तानां प्रमीयते । प्राणापानौ मित्रावरुणौ । प्राणापानावेव मुखतः परिह-रन्ते । तस्मान्मुखतः प्राणापानौ । आश्विनाग्रान्गृह्णीतानुजावरः । अश्विनौ वै देवानामानुजावरौ । तावग्रं पर्यैताम् । अश्विनावेतस्य देवता य आनुजावरः । तावेवान्वारभते । तावेनमग्रं परिणयतः । शुक्राग्रा-न्गृह्णीत गतश्रीः । असौ वा आदित्यः शुक्रः । एषो ऽन्तः । अन्तं मनु-
20 ष्यः श्रियो गत्वा निवर्तते । अन्तादेवान्तमालभते । न ततः पापीया-न्भवति यादृङ् सन्यजते । मन्थ्यग्रान्गृह्णीताभिचरन् । आर्तपात्रं वा एतद्यन्मन्थिपात्रम् । मृत्युनैवैनं ग्राहयति । उक्थ्याग्रान्गृह्णीताभिचर्यमाणः । सर्वेषां वा एतत्पात्राणामिन्द्रियं वीर्यं यदुक्थ्यपात्रम् । सर्वेणैवैनमिन्द्रि-येणातिप्रयुङ्क्ते ॥

1. The ms. ०रासीन्.

2. The ms. दर्भस्य.

3. The ms. स्वार्ग्रलिः.

4. The ms. omits प्राण ऐन्द्रवायवः.

मा त्वत्क्षेत्राण्यरणानि गन्म मापस्फरीः पयसा मा न आधक् ।
मा वयमेनो ऽन्यकृतं भुजेम सरस्वत्यभि नो नेषि वस्यः ॥

इति । मृत्योर्वै क्षेत्राण्यरणानि । तेनैव मृत्योः क्षेत्राणि न गच्छति । आग्रायणाग्रान्गृह्णीत यस्य पिता पितामहः पुण्यः स्यात् । अथ तन्न प्राप्नुयात् । वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो भवति । अथ तन्न प्राप्नोति । उर इवैतद्यज्ञस्य वागिव यदाग्रायणः । वाचैवैनमिन्द्रियेण समर्धयति । पूर्णान्ग्रहान्गृह्णीयादामयाविनः । प्राणान्वा एतस्य शुगृच्छति यस्यामयति । प्राणा ग्रहाः । प्राणानेवास्य शुचो मुञ्चति । पूर्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत् । प्राणान्वा एतर्हि प्रजानां शुगृच्छति यर्हि पर्जन्यो न वर्षति । प्राणा ग्रहाः । प्राणानेव प्रजानां शुचो मुञ्चति ताजक्प्रवर्षति ॥ ६ ॥ Cf. KS. XXX, 3; TS. VII, 2, 7.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥

उपयामगृहीतो ऽसि । अदित्यै त्वा चतुरूध्न्यै ॥

उदीरयत मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवः शुभं यातामनु[1] रथा अवृत्सत ॥

उपयामगृहीतो ऽसि । अदित्यै त्वा चतुरूध्न्यै ॥

महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥

उपयामगृहीतो ऽसि । अदित्यै त्वा चतुरूध्न्यै ॥

एष ते योनिः ॥
अदित्यै त्वा चतुरूध्न्यै ॥

वृष्टिर्वै देवेभ्यो ऽपाक्रामत् । सैषु लोकेष्वश्रयत । तां देवा अन्वेष्टुमध्रियन्त । त एतं ग्रहमपश्यन् । तमगृह्णत । तेनैभ्यो लोकेभ्यो वृष्टिं संप्राच्यावयन् । तमेतं वृष्टिकामो गृह्णीत । क्षेत्रस्य पते मधुमन्त-

1. The ms. याथानु.

मूर्मीमिति । असौ वै क्षेत्रस्य पतिरमुतो वर्षति । उदीरयत मरुतः समुद्रत इति । मरुतः सृष्टां वृष्टिं नयन्ति । महीमू षु मातरं सुव्रतानामिति । इयमदितिः । अस्यां वर्षति । एता वै देवता वर्षस्येशते । ता एवो-पधावति । एभ्य एव लोकेभ्यो वृष्टिं संप्रच्यावयति । चतुस्तनं पात्रं 5 भवति । चतस्रो दिशः । दिग्भ्य एव वृष्टिं संप्रच्यावयति । यं प्रथमं स्तनमनुपद्यते तस्या दिशो ऽभ्येतद्वर्षति । अपि पात्रे क्रियमाणे वर्षति । मृन्मयेन गृह्णाति । दारुमयेण जुहोति । न हि मृन्मयमाहु-तिमानशे ॥ ७ ॥ Cf. KS. XXX, 4.

तृतीयस्यां वै दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य 10 पर्णमच्छिद्यत । स पर्णो ऽभवत् । तत्पर्णस्य पर्णत्वम् । तस्मात्सर्वे वृक्षाः पर्णवन्तः । अथैष एव पर्ण उच्यते यत्पर्णशाखा भवति । तमेव सोम-मेवरुन्द्धे । देवा वै ब्रह्मन्समवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नामैषः । न बधिरो भवति य एवं वेद । यत्पर्णशाखया प्रार्पयति ब्रह्मणैवैनाः[1] प्रार्पयति । प्रजापतिः पशूनसृजत । तानयं देवो ऽभ्यम-15 न्यत । तं शम्याशमयत् । तच्छम्याः शमीत्वम् । यच्छमीशाखया प्रार्पयति शान्त्यै । अपां वा एतदोषधीनां तेजो यद्दर्भाः । यद्दर्भपि-ञ्जूलैः प्रार्पयत्यपामेवैना ओषधीनां तेजसा प्रार्पयति । इषे त्वोर्जे त्वेति । इषमेवोर्जं यज्ञे दधाति । वायव स्थेति । वायुर्वा अन्तरिक्षस्याध्यक्षः । अन्तरिक्षदेवत्याः पशवः । वायुरेवैनानन्तरिक्षाय परिददाति । प्र वा 20 एनानेतदाकरोति यद्वायव स्थेत्याह । अरण्यस्येव हि वायुः । उपायव स्थेति यजमानायैव पशूनपाकरोति । देवो वः सविता प्रार्पयत्विति प्रसूत्यै । श्रेष्ठतमाय कर्मण इति । यज्ञो वै श्रेष्ठतमं कर्म । आप्यायध्वमघ्न्या देवभा-गमिति । वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्ते । अथैतर्हि देवेभ्य एवैना आप्याययति । प्रजावतीरनमीवा अयक्ष्मा इति । प्रजावती-25 रेवैना अनमीवा अयक्ष्माः करोति । मा व स्तेन ईशत माघशंस इत्याशि-

1. The ms. सोमपीथम॰. 2. The ms. ॰नां.

षमेवाशास्ते । परि वो रुद्रस्य हेतिर्वृणक्त्विति रुद्रमेव पशुभिः परिवृणक्ति । अघातुको ऽस्यं[1] रुद्रः पशून्भवति यस्यैवं विदुषो यश्चैवं विद्वान्हविषे गाः प्रार्पयति । ध्रुवा अस्मिन्गोपतौ स्यातेति दृंहत्येवैनाः[2] । बह्वीरिति भूमानमेवैना गमयति । यजमानस्य पशून्पाहीति यजमानस्य पशूनां गोपीथाय । वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति । 5 वसूनां वा एतद्भागधेयं यत्पवित्रम् । तेभ्य एवैनत्[3]करोति । प्रतीचीं[4] शाखामुपगूहति । तस्माद्ग्राम्याः पशवः सायमारण्याद्ग्राममायन्ति । यत्पराचीमुपगूहेदरण्ये ह्रीयेरन् ॥ ८ ॥ Cf. I, 1; KS. XXX, 10; I, 1; MS. IV. 1, 1; I, 1, 1; TB. III, 2, 1; TS. I, 1, 1.

इति कपिष्ठलकठसंहितायां षट्चत्वारिंशत्तमो ऽध्यायः ॥

---

1. The ms. omits ऽस्य.

2. The ms. दृंहत्येतैनैवेना.

3. Thus the ms. KS. XXXI, 2 एवैनं.

4. The ms. इति सप्त॰.

[1]प्रजापतिर्वा ओषधीः परुःशो वेद । प्राजापत्यो ऽश्वः । यदश्व-
पर्श्वा बर्हिर्दात्योषधीनामहिंसायै । घोषदसीति रयिमेव यजमाने दधाति ।
निष्टप्तं रक्ष इति यज्ञमुखादेव रक्षांस्यपहन्ति । प्रेयमगाद्धिषणा बार्हिरच्छेति ।
विद्या वै धिषणा । विद्ययैवैनदच्छैति । मनुना कृता स्वधया वितष्टेति ।
5 मनुना ह्येषा कृता स्वधया वितष्टा । उर्वन्तरिक्षं वीहीति समष्ट्यै ।
इन्द्रस्य परिषूतमसीति । यद्वा इदं किंच तदिन्द्रस्य परिषूतम् । यथा
श्रेयसे प्रोच्य कर्म करोत्येवमेवैतदिन्द्राय प्रोच्य बर्हिर्दाति । यावत्प-
रिदिशति तत्सर्वं दाति[2] । यत्तत्सर्वं न[3] दाति यज्ञस्य तदतिरिच्यते ।
यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन वर्धयति । एकं स्तम्बं परिदिशेत् ।
10 तं सर्वं दायाद्यज्ञस्यानतिरेकार्य[4] । यत्सर्वं दायान्न पशुभ्यो जीवनमुच्छिं-
षेत् । एकां वा श्नुष्टिं द्वे वोच्छिंषेत् । न यज्ञस्यातिरेचयति । उत्प-
शुभ्यो जीवनं शिंषति । माधो मोपरि परुस्त ऋध्यासमित्यृद्ध्यै ।
आच्छेत्ता ते मा रिषदिति । यावद्यावद्वा अविद्वानध्वर्युर्बर्हिषो दाति
तावदस्यात्मनो मीयते । नास्यात्मनो मीयते य एवं वेद । देव बर्हिः
15 शतवल्शं[5] विरोहेत्योषधिष्वेव भूमानं दधाति । सहस्रवल्शा[6] वि वयं रुहे-
मेत्याशिषमेवाशास्ते । अदित्या रास्नासीति । इयमदितिः । अस्या
एवैनद्रास्नां[7] करोति । इन्द्राण्याः संनहनमिति । इन्द्राणी वा अग्रे देव-

1. The ms. begins the adhyāya with ओं. Mark that this is also the beginning of the third book in KS.
2. In Kāṭh. and Kap. mss. तत्सर्वं दाति is missing. Cf. MS, p. 3, ll. 4-5.
3. न is missing in the ms.
4. The ms. ०रेचाय.
5. The ms. ०वलिशं.
6. The ms. ०वलिशा.
7. The ms. एवैनां राश्लां.

तानी समनह्यत । साध्नोत् । ऋद्ध्यै । बर्हिः संनह्यति । प्रजा वै बर्हिः । प्रजानामपरावापाय । तस्मात्स्नाव्ना प्रजाः संतताः । पूषा ते ग्रन्थिं ग्रथ्नात्विति । पुष्टिर्वै पूषा । पुष्टिमेव यजमाने दधाति । स ते मा स्थात्[1] इत्यहिंसायै । इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इतीन्द्रस्यैवैनद्बाहुभ्यामुद्यच्छते[3] । बृहस्पतेस्त्वा मूर्ध्ना हरामीति[4] । ब्रह्म वै बृहस्पतिः । ब्रह्मणै- 5
वैनद्धरति । देवंगममसीति । बहु वा एतस्य पूर्वेद्युराह्रियमाणस्य स्कन्दति । अस्कन्नमेवैनद्देवेभ्यः संप्रयच्छति । तदाहरन्ति कवयः पुरस्तादिति । ब्राह्मणा वै कवयः । ब्राह्मणा ह्येतदाहरन्ति । देवेभ्यो जुष्टमिह बर्हिरासद इति देवेभ्य एवैनज्जुष्टं करोति ॥ १ ॥ Cf. I, 2; KS. XXXI, 1; I, 2; MS. IV, I, 2; I, 1, 2; TB. III, 2, 2; TS. I, 1, 2.

प्रजापतिः प्रजा असृजत । तस्योखे अस्रंसेताम् । स एते उखे 10
अपश्यत् । ताभ्यामादत्त । यदेते उखे भवतः प्रजापतेरेवोखे प्रतिदधाति । अयक्ष्मा वः प्रजया संसृजामीत्ययक्ष्मा एवैनाः करोति । रायस्पोषेण बहुला भवन्तीरिति भूमानमेवैना गमयति । मधुमद्घृतवत्पिन्वमाना इति मधुमदेव घृतवद्देवेभ्यो हव्यं करोति । जीवा जीवन्तीरुप वः संदेमेत्याशिषमेवाशास्ते । मातरिश्वनो घर्मो ऽसीति । अन्तरिक्षं वै 15
मातरिश्वनो घर्मः । द्यौरसि पृथिव्यसीति दिवमेवैनां पृथिवीमकः । विश्वधायाः परेण धाम्नाहुतासि मा ह्वारिति दृंहत्येवैनाम् । पवित्रमपिदधाति । ओषधीनां चैव पशूनां च पयः संसृजति । सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया इति । असौ वै विश्वायुरन्तरिक्षं विश्वव्यचा इयं विश्वधायाः । इमानेव लोकान्यथापूर्वं प्रदापयति । इमे ऽस्मै लोका यथा- 20
पूर्वं प्रत्ता दुहे । तिस्रो यजुषाभिमन्त्रयते । त्रय इमे लोकाः । एष्वेव लोकेषु रसं दधाति । तस्मादिमांल्लोकान्प्रजा उपजीवन्ति । उपजीवनीयो भवति य एवं वेद । हुत स्तोको हुतो द्रप्स इत्यनुमन्त्रयते

1. KS. मास्था॰ to be corrected.
2. The ms. ॰वैतद्बा॰.
3. The ms. ॰ति.
4. KS. मूर्ध्नाहरामीति to be corrected.
5. The ms. ॰ताः.

ऽस्कन्दाय । अग्नये बृहते नाकायेति । इयं वा अग्निर्बृहन्नाकः । बहु वा एतस्य दुह्यमानस्य स्कन्दति । अस्यामेवैनत्प्रतिष्ठापयति । अस्कन्दाय । न दारुपात्रेण दुह्यात् । अग्निमद्धै दारुपात्रम् । यातयाम्नां[1] हविषा यजेत । तदु ह स्माहुर्दात्रेयाः पुरोडाशमुखं वै हविर्न वा
5 इतइतः पुरोडाशी[2] हविषो यामो ऽस्ति दोग्धव्यमेवेति । न शूद्रो दुह्यात् । असतो वा एष संभूतः । असत्स्यात् । यद्वाव पवित्रमत्येति तद्धविः । अग्निहोत्रमेव शूद्रो न दुह्यात् । तद्धि नोत्पुनन्ति । संपृच्यध्वमृतावरीरिति प्रत्यानयति भृतत्वाय । भृतकामा हि देवाः । इन्द्रस्य त्वा भागं सोमेनातनच्मीति[3] सोममेवैनं[4] करोति । सोमो वै देवानां
10 परोक्षं सान्नाय्यम् । तस्य ह त्वै सोमपीथः संततो य एवं विद्वान्सान्नाय्येन यजते । अदस्तमसि विष्णव इति । यज्ञो वै विष्णुः । यज्ञायैवैनददस्तं करोति । न मृत्पात्रेणापिदध्यात् । यन्मृत्पात्रेणापिदध्यात्पितृदेवत्यं हविः स्यात् । दारुपात्रेणापिदधाति । अग्निमद्धै दारुपात्रम् । अग्निरेव हव्यं रक्षते । उदन्वत्कुर्यात् । आपो रक्षोघ्नीः । रक्षसामप-
15 हत्यै । विष्णो हव्यं रक्षस्वेति विष्णुरेव हव्यं रक्षते । आपो जागृतेति । आपो यज्ञस्य गोप्त्रीः । ताभ्य एवैनत्परिददाति[5] ॥ २ ॥ Cf. I, 3; KS. XXXI, 2; I, 3; MS. IV,1, 3; I, 1, 3; TB. III, 2, 3; TS. I, 1, 3.

अपः प्रणयति । आपो वै यज्ञः । यज्ञमेव तत्वा प्रचरति । आपो देवानां प्रियं धाम । देवानामेव प्रियं धाम प्रणीय प्रचरति । आपो रक्षोघ्नी रक्षसामपहत्यै । आपो वज्रः । वज्रमेव भ्रातृव्याय प्रहरति ।
20 आपः श्रद्धा । श्रद्धास्मै देवाः श्रन्मनुष्या दधते यस्यैवं विदुषो यस्यैवं विद्वानपः प्रणयति । कर्मणे वामिति हस्तावनेनिक्ते । कर्म ह्येतत्क्रियते । वानस्पत्यमसीति स्रुक्शूर्पमादत्ते[6] । निष्टप्तं रक्ष इति यज्ञमुखादेव

1. Thus the ms. KS. MS. यातयामेन.
2. The ms. यत यतः पुरोडाशो.
3. The ms. °तनज्मि.
4. The ms. °मेवैतत्.
5. The ms. एवततै.
6. ? This is the tentative emendation for the ms. वानस्पत्यमसि श्रुक्शूर्पमाधत्ते. KS. does not at all give the viniyoga. See ĀpŚr. I, 17, 1; MānŚr. I, 2, 1, 20.

रक्षांस्यपहन्ति । उर्वन्तरिक्षं वीहीति समष्ट्यै । धूरसि धूर्व धूर्वन्तमिति । धुर्यो वा एषो ऽग्निः । यदनालभ्यातीयाद्यजमानं शुचार्पयेत् । द्वौ वै पुरुषस्य भ्रातृव्यौ यं च द्वेष्टि यश्चैनं द्वेष्टि । तावेवास्य शुचार्पयति । देवानामसि वह्नितममिति देवेभ्य एवैनद्वह्निं करोति । विष्णोः क्रमो ऽस्यह्रुतमसि हविर्धानमिति दृंहत्येवैनत् । मित्रस्य त्वा चक्षुषा प्रेक्ष इति 5
मित्रमेवैनत्कुरुते[1] । उरु त्वा वातायेति । यद्वै किं च वातो नाभिवाति तद्वरुणस्य । अवरुण्यमेवैनत्करोति । देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यो[2] निर्वपति । अमुष्मै जुष्टमिति यस्या एव देवतायै निर्वपति तस्या एनज्जुष्टं करोति । यच्छन्तु त्वा पञ्चेति ।
पञ्च वा ऋतवः । ऋतूनेव प्रीणाति । ते ऽस्मै प्रीताः कल्पन्ते । 10
कल्पन्ते ऽस्मा ऋतवो य एवं वेद । रक्षायै त्वा नारात्या इति रक्षसामपहत्यै । इदं देवानामिदं नः सहेति व्यावृत्त्यै । स्वरभिव्यख्यमिति । तम इव वा एष प्रपद्यते[3] परीणहम् । स्वरेवाभिविपश्यति । इमे वै लोका हविषो गृहीतादुदवेपन्त । तान्देवा एतेन यजुषादृंहन् । दृंहन्तां
दुर्या इतीमानेव लोकान्दृंहति । उर्वन्तरिक्षं वीहीति[4] ब्रूयाद्व्यायुको ऽध्वर्युः 15
स्यात् । उर्वन्तरिक्षं प्रेहीत्यव्यायुको ऽध्वर्युर्भवति य एवं वेद । अग्ने हव्यं रक्षस्वेत्युपसादयति । अग्निरेव हव्यं रक्षते ॥ ३ ॥ Cf. I, 4; KS. XXXI, 3; I, 4; MS. IV, 1, 4. 5; I, 1, 4. 5; TB. III, 2, 4; TS. I, 1, 4.

विष्णोर्मनसा पूते स्थ इति पुनात्येवैने । देवो वः सविता पुनात्विति सवितृप्रसूत एवैना[5] देवताभिरुत्पुनाति । अमुष्मै जुष्टमिति यस्या एव देवतायै
प्रोक्षति तस्या एनज्जुष्टं करोति । शुन्धन्तां पात्राणि देवयज्याया इति देवेभ्य 20
एवैनानि शुन्धति । अवधूतं रक्षो ऽवधूतारातिरिति रक्षसामपहत्यै । आदित्यास्त्वगसीति । इयमदितिः । अस्या एवैनत्त्वचं करोति । अधिषवणमसि वानस्पत्यमित्यधिषवणमेवैनत्करोति । अग्नेस्तनूरसि वाचो विसर्जनमिति । अग्ने-

1. The ms. °वैनं.

2. The ms. देवेभ्यो.

3. The ms. प्रजायेत.

4. The ms. उर्वांतरिक्षं वाहोत—(corr. उर्वन्तरिक्षं वीहीति) । यद्वीहीति.

5. The ms. एवैतद्.

ह्येषा तनूर्वाचो विसर्जनम्। यदा हि पशव ओषधीरश्नन्त्यथ वाचं विसृजन्ते। बृहद्ग्रावासि वानस्पत्य इति ग्रावाणमेव कृत्वा हविष्करोति। हविष्कृदाद्रवेति य एव देवानां हविष्कृत्तं ह्वयति। त्रिर्ह्वयति। त्रिषत्या हि देवाः। अद्रिरसि श्लोककृदपहतं रक्षो ऽपहतारातिरिति रक्षसामपहत्यै। वर्षी
5 संघातींसंघातं जयेमेति संघातींसंघातमेव भ्रातृव्यं जयति॥

मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्। तेषां यावन्तो ऽसुरा उपाशृण्वंस्ते पराभवन्। य एवं विद्वान्भ्रातृव्याणां मध्ये ऽवसाय यजेत यावन्तो ऽस्य भ्रातृव्या यज्ञायुधानामुपशृण्वन्ति तेषामिन्द्रियं वीर्यं वृङ्क्ते। भवत्यात्मना परास्य भ्रातृव्यो भवति।
10 वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति मिथुनमेव करोति। अस्रा वै देवाः पशुभ्यो रक्षांसि निरवादयन्त तुषैरोषधिभ्यः। परापूतं रक्षः परापूतारातिरित्येतावतैव यज्ञाद्रक्षांसि निरवदयते। निरस्तो अघशंस इति। भ्रातृव्यो वा अघशंसः। भ्रातृव्यमेव निरस्यति। वायुर्व इष ऊर्जे विविनक्त्विति। वायुर्वै देवानां पवित्रम्। पुनात्येवैनान्। सुफलीकृतान्करोति। मेध्यानेवैनान्य-
15 ज्ञियान्करोति। त्रिः फलीकरोति। त्रिषत्या हि देवाः॥ ४॥ Cf. I, 5; KS. XXXI, 4; I, 5; MS. IV, 1, 6. 7; I, 1, 6. 7; TB. III, 2, 5; TS. I, 1, 5.

अवधूतं रक्षो ऽवधूतारातिरिति रक्षसामपहत्यै। अदित्यास्त्वगसीति। इयमदितिः। अस्या एवैनं त्वचं करोति। धिषणासि पार्वती प्रति त्वादित्यास्त्वग्वेत्तु पृथिवीं दृंहेति पृथिवीमेव दृंहति। धिषणासि पार्वतेयी प्रति त्वा पार्वती वेत्तु दिवं दृंहेति दिवमेव दृंहति। दिव स्कम्भन्यसीति शम्यामुपद-
20 धाति। इमे वै सहास्ताम्। ते शम्यामात्रींशम्यामात्रं व्यैताम्। वज्रः शम्या। यच्छम्यामुपदधात्यनयोरेव[1] विधृत्यै। धान्यमसि धिनुहि देवानिति। एतस्य वै यजुषो[2] वीर्येण यावदेका देवता कामयेत। यावदेका[3] तावदस्या आहुतिः[4] प्रथते। प्राणाय त्वा व्यानाय त्वापानाय त्वेति प्राणं व्यानमपानं तानेव यज-

1. The ms. °त्ये°.
2. The ms. यज्ञस्य.
3. The ms. omits यावदेका.
4. KS. आहुतेः to be corrected. Cf. MS. and TB.

माने दधाति । दीर्घामनु प्रसितिमायुषे त्वेत्यायुरेवास्मिन्दधाति । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति प्रेव वा एते स्कन्दन्ति प्रतिष्ठित्यै । अदब्धेन वश्चक्षुषावपश्यामीति चक्षुषो गोपीथाय ॥ ५ ॥ Cf. I, 6; KS. XXXI, 5; I, 6; MS. IV, 1, 7; I, 1, 7; TB. III, 2, 6; TS. I, 1, 6.

निर्दग्धं रक्ष इति रक्षसामपहत्यै । अपाग्ने अग्निमामादं जहीति य आमात्क्रव्यात्तमपहत्य यज्ञिये[1] देवयजन उपदधाति । यदधस्तादङ्गारमुपवर्तयत्यस्मिंस्तेन[2] लोके ज्योतिर्धत्ते । यदुपरिष्टादधिवर्तयत्यन्तरिक्षे[3] तेन ज्योतिर्धत्ते । असावेवास्यादित्यो ऽमुष्मिंल्लोके ज्योतिर्भवति । त्रीणि समीचीनान्युपदधाति । त्रयो वै प्राणाः प्राणो व्यानो ऽपानः । तानेव यजमाने दधाति । त्रय इमे लोकाः । एष्वेव लोकेष्वृध्नोति ॥

ध्रुवमसि पृथिवीं दृंहेति पृथिवीमेव दृंहति । आयुर्देहि प्राणं देहीत्याशिषमेवाशास्ते । धरुणमस्यन्तरिक्षं दृंहेत्यन्तरिक्षमेव दृंहति । चक्षुर्देहि श्रोत्रं देहीत्याशिषमेवाशास्ते[4] । धर्त्रमसि दिवं दृंहेति दिवमेव दृंहति । ओजो देहि बलं देहीत्याशिषमेवाशास्ते । धर्मासि दिशो दृंहेति दिशः[5] एव दृंहति । रयिं देहि पोषं देहीत्याशिषमेवाशास्ते । यन्त्रमस्याशा दृंहेत्याशा एव दृंहति । रूपं देहि वर्णं देहीत्याशिषमेवाशास्ते ॥

प्रजापतिर्वै यदग्रे समभवत्स एतावच्छ एवँ[6] समभवत् । एकं वा अग्रे शीर्ष्णः कपालं संभवत्यथ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमम् । यदष्टौ समीचीनान्युपदधात्यात्मानमेवैतद्यजमानः [ संस्कुरुते......[7] ॥ ६ ॥ ] Cf. I, 7; KS. XXXI, 6; I, 7; MS. IV, 1, 8; I, 1, 8; TB. III, 2, 7; TS. I, 1, 7.

1. The ms. °ज्ञ°. See the mantra section.
2. The ms. °ज्ञी°.
3. The ms. °मुपवेशय°.
4. श्रोत्रं देहि is missing in KS.
5. The ms. दिशम्.
6. The ms. एतावं for एतावच्छ एव.
7. The Kāṭhaka reads: ते संस्कृतममुष्मिंल्लोके ऽनुपरैति । यदष्टा उपदधाति गायत्रीं तच्छन्द आप्नोति । यदेकादश त्रिष्टुभं तत् । यद्द्वादश जगतीं तत् । छन्दस्संमितान्येवोपदधाति । **चितस्स्थ परिचित** इति सर्वाण्येव यजुष्मन्ति करोति । **भृगूणामङ्गिरसां तपसा तप्यध्वमि**त्येतासामेवैनानि देवतानां तपसा तपति । **यानि घर्मे**

...[ पुरोडाशं वा अधिश्रि]तं रक्षांस्यजिघांसन् । स नाको नाम दिवि रक्षोहाग्निः । सो ऽस्माद्रक्षांस्यपाहन्[1] । देवस्त्वा सविता श्रपयतु वर्षिष्ठे ऽधि[2] नाक इति रक्षसामपहत्यै । अग्निस्ते तन्वं मा हिंसीदित्यहिंसायै त्वचं ग्राहयति । तस्मान्मस्तिष्कः परिततः । यानि वा इमानि शीर्ष्णः कपालानि तानि कपालानि । यो मस्तिष्कः स पुरोडाशः । यन्नाभिवासयेदाविर्मस्तिष्कः स्यात् । यदभिवासयति तस्माद्गुहा मस्तिष्कः । भस्मनाभिवासयति । तस्मादस्थि मांसेन च्छन्नम् । वेदेनाभ्यूहति । तस्माच्छिरः केशैश्छन्नम् । ते देवास्तन्नाविन्दन्त यस्मिन्यज्ञस्य क्रूरं मार्क्ष्यामहै[3] इति । सो ऽग्निरब्रवीदहं वस्तं जनयिष्यामि यस्मिन्यज्ञस्य क्रूरं मार्क्ष्यध्वे[4] इति । सो ऽपो ऽङ्गारेणाभ्यपातयत् । तत एकतो ऽजायत । द्वितीयम् । ततो द्वितः । तृतीयम् । ततस्त्रितः । यदात्मनो निरमिमीत तदात्मेयानामात्मेयत्वम् । यदद्भ्यो निरमिमीत तदाप्येयानामाप्येयत्वम्[5] ।

**कपालान्युपचिन्वन्ति वेधस** इति । असौ वा आदित्यो घर्मः । तस्य दिशः कपालानि । ता एवैतद्विमुञ्चति यथायतनम् । **पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चता**मितीन्द्रवायू एवैषां विमोक्तारौ करोति ॥ ६ ॥ For references see above.

**देवस्य त्वा सवितुः प्रसव** इति सवितृप्रसूत एवैनद्देवताभ्यस्संवपति । **अमुष्मै जुष्ट**मिति यस्या एव देवतायै संवपति हविरेव करोति । अपि तस्या एनज्जुष्टं करोति । पवित्रवति संवपति । हविरेव करोति । अप उपसृजति । अमृतं वा आपः । अमृतमेव हव्यं करोति । **समाप ओषधीभिस्समोषधयो रसेने**त्यन्या वा एतासामन्या जिन्वन्त्योषधयः । **यद्वो रेवती रेवत्यं यद्वो हविष्या हविष्यं यद्वो जगतीर्जगत्य**मिति । आपो वै रेवतीरोषधयो मधुमतीः पशवो जगतीः । अप ओषधीः पशूंस्तानेवास्मा एकधा संसृज्य मधुमतः करोति । **जनयत्यै त्वे**ति संयौति । मिथुनमेव करोति । **मखस्य शिरो ऽसी**ति । यज्ञो वै मखः । यज्ञस्यैव शिरः करोति । **घर्मो विश्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथता**मिति प्रथयत्येव । **प्रत्युष्टं रक्ष** इति यज्ञमुखादेव रक्षांस्यपहन्ति । घर्मो वा एषो ऽर्धमासेऽर्धमासे प्रवृज्यते यत्पुरोडाशः । स ईश्वरो ऽशान्तो यजमानस्य पशून्निर्दहः । यत्पर्यग्निं करोति पशुमेव करोति शान्त्या अनिर्दाहाय । त्रिः परिहरति । त्रय इमे लोकाः । एभ्य एवैनल्लोकेभ्यश्शमयति ।

1. Thus KS. The ms. °पाहन्ति. Cf. MS. p. 11, l. 14; TB. III, 2, 8, 6.
2. The ms. अधि.
3. Thus KS. The ms. क्रोरं मक्षामहा. Cf. TB III, 2, 8, 9 and Schr's. note on MS. p. 12, l. 3 क्रूरमार्क्ष्यामहा.
4. Thus KS. The ms. महाक्ष्ध्वम्. MS. आर्क्ष्ध्वा and TB. मृक्ष्यध्व.
5. The ms. °प्ये°.

अन्तर्वेदि निनयति । तदेवावरुन्द्धे । उल्मुकेनाभिघारयति[1] शृतत्वाय । शृतकामा हि देवाः । ते ऽतिमृजानो[2] आयन् । सूर्याभ्युदिते ते ऽमृजत । सूर्याभ्युदितः सूर्याभिनिम्रुक्ते । सूर्याभिनिम्रुक्तः कुनखिनि । कुनखी श्यावदति[3] । श्यावदन्परिवित्ते । परिवित्तः परिविविदाने । परिविविदानो ऽग्रेदिधिषौ । अग्रेदिधिषुर्दिधिषूपतौ । दिधिषूपतिर्वीरहणि । वीरहा ब्रह्महणि । ब्रह्महा भ्रूणहनि । भ्रूणहनमेनो नात्येति ॥ ७ ॥

Cf. I, 8; KS. XXXI, 7; I, 8; MS. IV, 1, 9; I, 1, 9; TB. III, 2, 8; TS. I, 1, 8.

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते । सवितृप्रसूत एवैनं देवताभिरादत्ते । इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा इति । वज्रो वै स्फ्यः । वज्रमेव संश्यति भ्रातृव्याय प्रहरिष्यन् । वायुरसि तिग्मतेजा इत्यधस्तादनुमार्ष्टि[4,5] । पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमित्योषधीनामहिंसायै । व्रजं गच्छ गोष्ठानमिति । छन्दांसि वै व्रजो गोष्ठानः । छन्दांस्येवास्मै व्रजं गोष्ठानं करोति । वर्षतु ते द्यौरिति वृष्टिमेव निनयति । बधान देव सवितः परमस्यां पृथिव्यां शतेन पाशैरिति । द्वौ वै पुरुषस्य भ्रातृव्यौ यं च द्वेष्टि यश्चैनं द्वेष्टि । तावेवास्य बध्नाति । द्रप्सस्ते द्यां मा स्कन्निति[6] । यो वा अस्या रसः स द्रप्सः । तामिमाः प्रजा उपजीवन्ति । तमेवास्यां यच्छति तस्यासुताय । अररुर्द्यां मा पप्तादिति । भ्रातृव्यो वा अररुः । भ्रातृव्यमेव स्वर्गाल्लोकात्प्रतिनुदति[7] । अररुर्वै नामासुर आसीत् । सो ऽबिभेद्यज्ञेन नो देवा अभिभविष्यन्तीति । स पृथिवीं विषेणालिम्पदमेध्यां कुर्वन् । इन्द्रो वै वृत्रमहन् । तस्येमां लोहितमन्वभ्यधाव[त् । तदमेध्याभव]त् । यदुद्घ्नन्ति[8] यदेवास्या अमेध्यमयज्ञियं तदपहन्ति । अररुर्वै नामा-

1. The ms. ०वा०.
2. The ms. पिसृज.
3. The ms. शा०.
4. The ms. इत्यभ्रमा०.
5. The ms. इत्यद्रस्तादनुमार्ष्टे. This sentence is missing in KS.
6. The ms. स्कानिति. See the mantra section.
7. KS. ०ते.
8. The ms.० द्घ्नन्ति.

सुर आसीत् । सोऽबिभेद्देवा मा पृथिव्या नोत्स्यन्त इति । [स] पृथिवीमुपम्रुच्याशयत् । तमिन्द्रोऽचायत् । तमपाररुमदेवयजनं पृथिव्या देवयजनाज्जहीति पृथिव्या अपाहन् । स दिवमपतत् । अररुर्धां मा पप्तदिति तं दिवः प्रत्यनुदत । ततो देवा अभवन्परासुरा अभवन् ।
5 यस्यैवं विदुष स्तम्बयजुर्ह्रियते यस्यैवं विद्वान्हरत्येभ्य एव लोकेभ्यो भ्रातृव्यमन्तधर्त्ते भवत्यात्मना परास्य भ्रातृव्यो भव[ति । असुराणां वा इयं पृथिव्यासीत् । ते देवा अब्रुवन्द]त्त नोऽस्या इति । ते वै स्वयं ब्रूध्वमित्यब्रुवन् । सोऽग्निरेव प्राचीं दिशमुदजयद्वसवो दक्षिणां रुद्राः प्रतीचीमादित्या उदीचीम् । ते देवा इमाम्[1]सुराणामविन्दन्त ।
10 ततो देवा अभवन् [परासुरा अभवन् ।] य एवं विद्वानेताभिर्देवताभिर्वेदिं परिगृह्णातीमामेव भ्रातृव्यस्य विन्दते भवत्यात्मना परास्य भ्रातृव्यो भवति ॥

पृथिव्या वै मेध्यं चामेध्यं च व्युदक्रामत् । प्राचीनमुदीचीनं मेध्यमुदक्रामत्प्रतीचीनं दक्षिणामेध्यम्[2] । प्राचीमुदीचीं वेदिं प्रवणां कुर्यात् ।
15 मेध्यामेवैनां यज्ञियां करोति । अथ मेध्यस्य चामेध्यस्य च व्यावृत्त्यै । प्राञ्चौ बाहू उन्नयति । आहवनीयमेव परिगृह्णाति । प्रतीची श्रोणी । गार्हपत्यमेव[3] परिगृह्णाति । मूलं वै रक्षांस्यनूत्पिबन्ति । न नखेन च्छिन्द्यात् । यन्नखेन च्छिन्द्यात्कुनखी स्यात् । स्फ्येन च्छिनत्ति । वज्रो वै स्फ्यः । वज्रेणैव रक्षांस्यपहन्ति ॥ ८ ॥ Cf. I, 9; KS. XXXI, 8; I, 9; MS. IV, 1, 10; I, 1, 10; TB. III, 2, 9; TS. I, 1, 9.

20 घृतं च वै मधु च प्रजापतिरासीत् । यतो मध्वासीत्ततः प्रजा असृजत । तस्मान्मधोः प्रजननमिवास्ति । तस्मान्मधुना न प्रचरन्ति । यातयामि हि तत् । घृतेन प्रचरन्ति । अयातयामि ह्येतत्प्राजापत्यं यदाज्यम् । अयातयामा देवानां प्रजापतिर्गार्हपत्ये[4]ऽधिश्रयति । पत्न्यवेक्षते । पत्न्या एवैष यज्ञस्यान्वारम्भः । अथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय । यद्वै पत्नी यज्ञे

1. After इमां the ms. adds लोकान्.
2. The ms. चामेध्यमु०.
3. The ms. गारिहप०.
4. The ms. ०गार्हिपत्ते.

करोति तन्मिथुनम् । यत्पत्न्यवेक्षते मिथुनमेव करोति । अमेध्यं वा एतदयज्ञियं[1] यत्पत्न्यवेक्षते । आहवनीये ऽधिश्रयति । मेध्यमेवैनद्यज्ञियं[2] करोति । देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत । यदेव देवा अकुर्वत तदसुरा अकुर्वत । स इन्द्र एतमवकाशमपश्यत् । तेना[3]वैक्षत । तेनासुरानभ्यभवत् । ततो देवा अभवन्परासुरा अभवन् । य एवं विद्वानेतेनाज्यमवेक्षते ऽभ्येव भ्रातृव्यं भवति भवत्यात्मना परास्य भ्रातृव्यो भवति । प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षांस्यपहन्ति । अनिशिता स्थ सपत्नक्षयणीरित्यनिशिता एवैनाः करोति । स्रुचः संमार्ष्टि । पुनात्येवैनाः । स्रुवमग्रे संमार्ष्टि । पुमांसमेवासामग्रे संश्यति । अथ जुहूमथोपभृतमथ ध्रुवाम् । असौ वै जुहूरन्तरिक्षमुपभृदियं ध्रुवा । इमानेव लोकान्यथापूर्वं[4] संमार्ष्टि । यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृत् । चतुर्जुह्वां गृह्णन्भूय आज्यं[5] गृह्णाति । अष्टौ गृह्णन्नुपभृति कनीयः । भ्रातृव्यमेवास्मा उपस्तिं करोति ॥ ९ ॥ Cf. I, 10; KS. XXXI, 9; I, 10; MS. IV, 1, 12; I, 1, 11; TB. III, 3, 4. 5; TS. I, 1, 10.

देवीरापो अग्रेग्व इति यज्ञमेव प्रणयति । प्रेमं यज्ञं नयत प्र यज्ञपतिं तिरतेत्याशिषमेवाशास्ते । अग्नेर्वै मेधो ऽपाक्रामत् । कृष्णो भूत्वा स वनस्पतीन्प्राविशत् । प्रोक्षिता स्थ ॥ कृष्णो ऽस्याखरेष्ठो[6] ऽग्नये त्वा जुष्टं प्रोक्षामीति तमेव मेधमवरुन्द्धे । अथो यस्या एव देवतायै प्रोक्षति तस्या एनं जुष्टं करोति । वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि[7] ॥ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामीति । प्रजा वै बर्हिः पृथिवी वेदिः । प्रजा एव पृथिव्यां प्रतिष्ठापयति । ऊर्जा पृथिवीं गच्छतेति पृथिव्यामेवोर्जं दधाति । तस्मात्पृथिवीं प्रजा उपजीवन्ति । उपजीवनीयो भवति य एवं वेद ॥

बह्वीरासादयेत् । यावतीर्वै प्रोक्षणीरासादयति तावतीरस्यामुष्मिंल्लोक आपः । तस्माद्बह्वीरासाद्याः । पुरस्तात्प्रस्तरं गृह्णाति । मुख्यमेव यजमानं

1. The ms. adds तदपहंति.
2. The ms. ०वैनं यज्ञीयं.
3. The ms. omits अपश्यत् and तेन.
4. The ms. न्यगृ०.
5. The ms. adds न.
6. The ms. अ०.
7. The ms. ०मीति.

करोति । यावद्धस्तेन पर्याप्नुयात्तावन्तं गृह्णीयात् । अक्षोधुको यजमानो
भवत्यनग्नंभावुको ऽध्वर्युः । न विधूनुयात् । यद्विधूनुयात्प्रजां चास्य पशूंश्च
विधूनुयात् । न प्रमृज्यात् । यदेवास्य स्वं [ यद्वित्तं ] यद्वेद्यं तत्प्रमार्ष्टि । न
प्रमृज्यात्[1] । यदेवैनमागमिष्यद्भवति तत्प्रतिनुदते ॥

5 दक्षिणतः संनहनं स्तृणाति । तस्माद्दक्षिणतो नीविः । प्रस्तरं धार-
यन्परिधीन्परिदधाति । यजमानो वै प्रस्तरः । स्वयमेवैतद्यजमान आत्मानं
परिदधाति रक्षसामपहत्यै । संहितान्परिधीन्परिदधाति रक्षसामनन्ववायाय ।
न पुरस्तात्परिदधाति । असावेवास्मादादित्य उद्यन्पुरस्ताद्रक्षांस्यपहन्ति ।
ऊर्ध्वे समिधावादधाति । उपरिष्टादेव रक्षांस्यपहन्ति । द्वे आदधाति ।
10 मिथुनमेव करोति । सवितुर्बाहू स्थो देवजनानां विधरणी इति । सवितुर्ह्येतौ
बाहू देवजनानां विधरणी । वसूनां रुद्राणामादित्यानां सदनमसीति या
एव देवता अभ्यजयंस्ताभ्य एनत्सदनं करोति । जुह्वेहि घृताचीति ।
एतद्वा आसां प्रियं धाम यद्घृतवत्[2] । प्रियेणैवैना धाम्ना समर्धयति ।
ध्रुवा असदन्नृतस्य योनौ ॥ ता विष्णो पाहीति । यथाहैष ते भागस्तं
15 गोपायस्वेत्येवमेवैतद्विष्णुमाहैतत्त आज्यं तद्गोपायस्वेति ॥ १० ॥ Cf. I, 11.
KS. XXXI, 10; I, 11; MS. IV, 1, 13; I, 1, 11. 12; TB. III, 3, 6; TS. I, 1, 11.

भुवनमसि विप्रथस्वेति प्रथयत्येव । अग्निर्यष्टेदं नम इति । नमस्कृत्य
हि श्रेयांसमुपचरन्ति । जुह्वेह्यग्निस्त्वा[3]ह्वयतु देवयज्याया इति । अग्निः सर्वा
देवताः । सर्वा एव देवता अवरुन्द्धे । उपभृदेहि देवस्त्वा सविताह्वयतु
देवयज्याया इति । सवितृप्रसूत एव प्रचरति नार्तिमार्छति । अङ्घ्रिणा-
20 विष्णू मा वामवक्रमिषमिति यथायजुः । पाहि माग्ने दुश्चरिताद्वा मा सुचा-
रिते भजेति पाप्मानमेवापहते । विजिहाथां मा मा संताप्तमित्यात्मनो
ऽहिंसायै । लोकं मे लोककृतौ कृणुतमित्याशिषमेवाशास्ते । विष्णो
स्थाम्न[4] इति[5] प्रतिष्ठित्यै । ऊर्ध्वो अध्वरो दिविस्पृगिति । यज्ञो वा
अध्वरः । यज्ञस्योर्ध्वत्वाय । अह्रुतो यज्ञो यज्ञपतेरिति समृद्ध्यै[6] ।

1. The ms. प्रति°.
2. The ms. यद्‌ घृतम्.
3. The ms. °ष्ट्वा°.
4. The ms. adds प्रष्ठिः
5. The ms. adds स्थाम्नः.
6. The ms. समिष्टा.

इन्द्रवान्बृहद्भाः स्वाहेति । ऐन्द्रो वै यज्ञः । मुखत एवेन्द्राय यज्ञं संप्रयच्छति । सेन्द्रो ऽस्य यज्ञो भवति । सं ज्योतिषा ज्योतिरिति । ज्योतिर्वै यज्ञः । यज्ञ एव यज्ञमनुसंतनोति । वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयोर्ज्जयामीति य एवैनं पूर्वो ऽतिक्रान्तो[1] भ्रातृव्यस्तं तेन[2] प्रणुदते । वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयामुं प्रतिनुदामीति य एवैनं पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयांसं भ्रातृव्यं नुदते प्रति पापीयांसं नुदते ॥

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति । इमानेवैनं लोकान्गमयति । अक्तं रिहाणा व्यन्तु वय इति स्वदयत्येव । मरुतां पृषती वशा पृश्निर्भूत्वा दिवं गच्छेति । [ यजमानो वै प्रस्तरः । हविर्भूतमेवैनं स्वर्गं लोकं गमयति । ततो नो वृष्टिमेरयेति ] वृष्टिमेवावरुन्द्धे । अहीनः प्राण इति प्राणानेवैतदध्वर्युर्मुखतः कल्पयति । चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषो गोपीथाय । यं परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमान इति । अग्निः सर्वा देवताः । सर्वा एव देवता अवरुन्द्धे । यजमानं प्रथतेति प्रथयत्येव । अथो यजमानमेवैनं स्वर्गं लोकं गमयति[3] । संस्रावभागस्तविषेति[4] परिधीनभि[5]जुहोति । स्वेनैवैनान्भागधेयेन समर्धयति ॥

अग्ने ऽदब्धायो ऽशीर्ततन इति यदेवान्तर्यन्ति[6] यत्क्रूरं कुर्वन्ति तच्छमयति । अविषं नः पितुं कृधीत्य[7]न्नमेवास्मै स्वदयति । सुधीन्योनीन्सुषदां[8] पृथिवीमिति सुषदेवैनं सादयति । वेदिर्वै देवेभ्यो ऽपाक्रामत् । तां वेदेनान्वविन्दन् । तद्वेदस्य वेदत्वम् । यद्वेदो भवति वेद्या अनुवित्त्यै । स्त्री वै वेदिः पुमान्वेदः । यद्वेदो वेद्यां स्तृणाति मिथुनमेवावरुन्द्धे ॥११॥ Cf. I, 12; KS. XXXI, 11. 12; I, 12; MS. IV, 1, 14; I, 1, 13; TB. III, 3, 7; TS. I, 1, 12. 13.

इति कपिष्ठलकठसंहितायां सप्तचत्वारिंशत्तमो ऽध्यायः[9] ॥

---

1. The ms. निष्क्रा०.
2. The ms. तया.
3. KS. अथो भूमानं गमयति.
4. The ms. ०भागास्त्वेति.
5. The ms. ०धि०.
6. The ms. यदेवास्याग्नौति.
7. The ms. अविषान्नः पितृन् कमिति.
8. The ms. स्वधियोन्या सुखादां.
9. The ms. adds समाप्तः ॥

अग्निं नरो दीधितिभिररण्योः[1] ॥
अग्निनाग्निः समिध्यते ॥
सप्त ते अग्ने समिधः[2] ॥
मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञं समिमं तनोतु ।
5 [ बृहस्पतिः प्रतनोतु प्रविद्वान् ] अच्छिन्नं तन्तुं तनुतां पुनर्णः[3] ।
या व्युष्टा उषसो याश्च निम्रुचस्ताः संदधातु हविषा घृतेन ॥
त्रयस्त्रिंशत्तन्तवः ॥
यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः ।
अयं देवो बृहस्पतिः सं तात्सिञ्चतु राधसा ॥
10 विश्वकर्मा हविरिदं[4] जुषाणः संतानैर्यज्ञं समिमं दधातु ।
बृहस्पतिः प्रतनोतु प्रविद्वानच्छिन्नं तन्तुं तनुतां पुनर्णः ।
या व्युष्टा उषसो याश्च निम्रुचस्ताः संदधातु हविषा घृतेन ॥
अयाश्चाग्ने ऽस्यनभिशस्तिश्च ॥
त्वं नो अग्ने ॥
15 स त्वं नो अग्ने ॥ १ ॥ Cf. KS. XXXIV, 19; MS. I, 7, 1.
भद्रं कर्णेभिः[5] ॥

1. For this and the following pratīkas Kāṭh. gives the full text.
The mantra does not occur elsewhere in Kap.
2. For sakalapāṭha see VI, 8.
3. This line is not recorded by the Vedic Concordance.
4. The ms. °रिह्.
5. KS. gives the full text for all the mantras in this section.
This and the following three verses do not occur anywhere else either in the Kāṭh. or the Kap.

स्वस्ति न इन्द्रः ॥
पृषदश्वा मरुतः ॥
शतमिन्नु शरदः ॥
प्रेद्धो अग्ने दीदिहि[1] ॥
श्रुत्कर्णाय कवये वेद्याय वचोभिर्लोकमुपयामि शंसन् । 5
यतो भयमभयं तन्नो[2] अस्त्वग्ने देवानामव हेड इच्छ्व[3] ॥
अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥
घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम ।
घृतप्रुषो हरितस्त्वावहन्तु घृतं पिबन्यजतादिव देवान् ॥ २ ॥ Cf. KS. XXXV, 1. 10

इमो अग्ने वीततमानि हव्या ॥
सप्त ते अग्ने समिधः ॥
त्रयस्त्रिंशत्तन्तवः ॥
यन्मे मनसः[4] ॥
विश्वकर्मा[4] ॥ 15
अग्निं युनज्मि[5] ॥
इन्धानास्त्वा[6] ॥

अग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु । वायुर्न ईडित ईडितव्यैर्देवैरन्तरिक्ष्यैः पातु । सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु । विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पातु । अग्निर्यजुर्भिः सविता स्तोमैः 20 पूषा स्वगाकारैः । त इमं यज्ञमवन्तु । ते मामवन्तु । अनु व आरभेऽनु मारभध्वम् ॥ ३ ॥ Cf. KS. XXXV, 2.

1. For sakalapāṭh see XXVIII, 4.
2. The ms. ते for तन्.
3. Thus KS. The ms. देवानामहे ईष्ठा.
4. For sakalapāṭha see XLVIII, 1.
5. The ms. यूनज्मी. For sakalapāṭha see XXIX, 4.
6. For sakalapāṭha see IV, 8.

पृथिवि विभूवरि सिनीवाल्युरंध्रे[1] आचित्ते मनस्ते भुवो विवस्ते[2] । य ऊर्मिर्हविष्य इन्द्रियावीस्तं व ऋध्यासम् । सोमस्याज्यमसि हविषो हविर्ज्योतिषो ज्योतिः । विश्वेषां देवानां भागधेयी स्थ । देववीतये वो गृह्णामि ॥

5 सं वः सिञ्चन्तु मरुतः सं पूषा सं धाता समिन्द्रः सं बृहस्पतिः ।
सं वो ऽयमग्निः सिञ्चतु प्रजया च धनेन च ।
आयुष्मन्तं कृणोतु मा ॥
मान्दा वशाः[3] ॥
आपो देवीर्घृतम्[3] ॥
10 आदित्पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्न आसाम् ।
मेने भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥
समन्या यन्त्युप यन्त्यन्याः[4] ॥
आपो हि ष्ठेति तृचः[5] ॥
स ईं वृषाजनयत्तासु गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
15 सो अपां नपादनभिम्लातवर्णो ऽन्यस्येवेह तन्वा विवेष ॥
इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः[6] ।
इहो सहस्रदक्षिणो रायस्पोषः प्रजायताम्[7] ॥
अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः स्वपत्या सुवीरा ।
इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥
20 स्वं[8] आ दमे सुदुघा यस्य धेनुः स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्वन्तर्वसुदेयाय विधते विभाति ॥ ४ ॥

Cf. KS. XXXV, 3.

1. The ms. शनीवाल्यरंध्र.
2. Thus KS. The ms. आचित्यै भूयो नमस्ते. Cf. ĀpŚr. XIV, 17, 3.
3. The ms. adds इति. For sakalapāṭha see KS. XI, 9.
4. The ms. adds इति. KS. gives the full text.
5. KS. gives the full text.
6. The ms. पु॰.
7. The ms. प्रजात.
8. KS. स is to be corrected. Cf. ṚV. II, 35, 7.

स्कन्ना द्यौ स्कन्ना पृथिवी स्कन्नं विश्वमिदं जगत्[1] ।
स्कन्नादो विश्वा भूतानि प्र स्कन्नं जायती हविः ॥
इह गावः ॥
अयं यज्ञः ॥
पयस्वतीरोषधयः पयस्वद्वीरुधां पयः । 5
अपां पयसो यत्पयस्तेन ते सह वर्धताम्[2] ॥
यद्वामृत्त्वच्छकुनिर्मुखेन निर्ऋते तव ।
अग्निष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदनः ॥
यद्वामृत्त्वच्छ्वपान्मुखेन निर्ऋते तव ।
वायुष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदनः ॥ 10
भूतिर्दध्ना घृतेन वर्धताम् । यज्ञं यज्ञाय मुञ्चतु स्वाहा । घृतेन वर्धतां भूतिः । मुञ्चेमं यज्ञं मुञ्च यज्ञपतिमिहसः स्वाहा ॥
यास्ते अग्ने समिधो अप्स्वन्तर्वर्ष्मन्पृथिव्या उप सूर्ये याः ।
तास्ते वर्धन्त्याहुतीर्घृतस्य[3] देवाव्ये[4] यजमानाय शर्म ॥ ५ ॥

Cf. KS. XXXV, 4.

यज्ञस्य हि स्थ ऋत्विजाविन्द्राग्नी कल्पना युवम् । 15
हुताहुतस्य तृम्पतमहुतस्य हुतस्य च ॥
हुतस्य चाहुतस्य चाहुतस्य हुतस्य च ।
पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम् ॥
मेमं यज्ञं तमो विदन्मार्त्विजो मो इमाः प्रजाः ।
मा यः सोमं पिबादिमं संसृष्टमुभयं कृतम् ॥ 20
मा नो ध्वारिषुः[5] पितरो मोत देवा मा नः सबन्धुरुत वान्यबन्धुः ।
मा नो दुःशंसो अघशंस ईशताहुतो ऽयं यज्ञो अप्येतु देवान् ॥

1. KS. हविः is taken over from the second line. ĀpŚr. IX, 17, 1 agrees with Kap. Cf. KS. XXXV, 7 ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्.
2. The last quarter is not very clear. The ms. तेन तं सह वर्त्वता. KS. तेन नस्सह वर्धताम्.
3. KS. and TS. III, 5, 5, 3 गच्छन्त्वा॰.
4. The ms. देवाव्य.
5. The ms. द्वारिषु.

सप्तर्त्विजः सप्त सदस्येषां दश त्विषो अश्विना पञ्च वाजाः[1] ।
प्राणो व्यानो ऽपानो मन आकूतमग्निः[2] स्वाहा देवा हविरिदं जुष-
न्ताम् ॥ ६ ॥ Cf. KS. XXXV, 5.
आत्मा यज्ञस्य रंह्या सुष्वाणः[3] पवते सुतः ।
5 प्रत्नं निपाति काव्यम् ॥
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
आत्मा यज्ञस्य पूर्व्यः ॥
आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य योनिरमृतं विजायते ।
समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमवमेहन्ति पेरवः ॥
10 देवा देवेषु श्रयन्ताम् । प्रथमा द्वितीयेषु श्रयन्ताम् । द्वितीयास्तृतीयेषु
श्रयन्ताम् । ये स्थ त्रय एकादशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शतास्त्रयश्च[4]
त्री च सहस्रास्त[5] इमं यज्ञमवन्तु ते मामवन्तु । अनु व आरभे ऽनु मार-
भध्वम् ॥ ७ ॥ Cf. KS. XXXV, 6.
असवे स्वाहा । वसवे स्वाहा । विभवे स्वाहा । विवस्वते स्वाहा । शूषाय
15 स्वाहा । सिसर्पाय स्वाहा । मलिम्लुचाय स्वाहा । गणश्रिये[6] स्वाहा ।
शुक्राय स्वाहा । शुचये स्वाहा । अभिभवे स्वाहा । अधिपतये स्वाहा । दिवा-
पतये स्वाहा ॥ ८ ॥ Cf. KS. XXXV, 10; MS. III, 12,11; TB. III, 10, 7.
असवे स्वाहा । वसवे स्वाहा । वसुधेयाय स्वाहा । भूपतये स्वाहा ।
भुवनपतये स्वाहा । भूतानां पतये स्वाहा । भूताय स्वाहा ॥
20 द्रप्सश्चस्कन्द ॥
यस्ते द्रप्सः पतति[7] यस्ते अंशुः[8] ॥
यो अंशुर्द्रप्सः पतितः पृथिव्याम् ॥

1. KS. पञ्चवाजा. ĀpŚr. XIV, 30, 5. agrees with Kap.
2. The ms. ०कू०.
3. The ms. सुष्माणा.
4. KS. शता च.
5. KS. सहस्रा त.
6. The ms ०स्तूये.
7. KS. स्कन्दति.
8. The ms. adds इति.

यस्ते द्रप्सो मधुमाँ[1] इन्द्रियावान्[2] ॥
यस्ते द्रप्स स्कन्नः[3] ॥
वसवस्त्वोदीरयन्तु गायत्रेण च्छन्दसा । रुद्रास्त्वोदीरयन्तु त्रैष्टुभेन च्छन्दसा । आदित्यास्त्वोच्छ्रयन्तु [जागतेन च्छन्दसा ।] विश्वे त्वा देवा दृंहन्तु ॥ 5
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
देवा ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः ॥
दिवि दिव्यान्दृंह । अन्तरिक्षे ऽन्तरिक्ष्यान्दृंह । पृथिव्यां पार्थिवान्दृंह ॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत्[4] ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्यज्ञो अधिभ्रशत् ॥ 10
ध्रुवं ध्रुवेण हविषा हविरव[5] सोमं नयामसि ।
यथा न इन्द्रः केवलीर्विशो बलिहृतस्करत्[6] ॥
स्वाहा दिव आप्यायस्व । स्वाहान्तरिक्षादाप्यायस्व । स्वाहा पृथिव्या आप्यायस्व । आयुर्धा असि ध्रुवायुर्मे धेहि । वयोधा असि ध्रुव वयो मे धेहि । वर्चोधा असि ध्रुव वर्चो मे धेहि । तनूपा असि ध्रुव तन्वं 15 मे पाहि[7] ॥
अध्वर्यो ऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय ।
विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञ[8] ॥
इहैवैधि मापच्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥ 20
इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा हविः ।
तस्मै सोमो अधिब्रुवत्तस्मा उ ब्रह्मणस्पतिः ॥

1. The ms. °मं.
2. The ms. adds इति.
3. The ms. adds इति.
KS. स्कन्दति for स्कन्नः. Kap. agrees with ṚV. X, 17, 13.
4. The ms. °हारिषम°.
5. The ms. °रप.
6. The ms. °रात्.
7. KS. तनूपा असि° । चक्षुष्पा असि ध्रुव चक्षुर्मे पाहि । वर्चोधा असि°. ApŚr. XIV, 27, 6 follows Kap.
8. Thus KS. The ms. स्व पिन्वस्व घृतवद्देव यज्ञः.

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामसि ॥ ९ ॥ Cf. KS. XXXV, 8. 7.
विसृष्टधेनाः सरिरा घृतश्चुतो[1] वसन्तो ग्रीष्मो मधुमन्ति वर्षाः ।
शरद्धेमन्त ऋतवो मयोभुव उदप्रुतो नभसी संवसन्ताम्[2] ॥
5 आ नः प्रजाम्[3] ॥
आ देवानाम्[4] ॥
त्वमग्ने व्रतपा असि[5] ॥
यद्वो वयं प्रमिनाम व्रतानि ॥

मधुश्च माधवश्च वासन्तिकावृतू । शुक्रश्च शुचिश्च ग्रैष्मावृतू । नभश्च
10 नभस्यश्च वार्षिकावृतू । इ[षश्चोर्जश्च शारदावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू । तपश्च तपस्यश्च शैशिरावृतू । ] त इमं यज्ञमवन्तु ते मामवन्तु । अनु व आरभे ऽनु मारभध्वम् ॥ १० ॥ Cf. KS. XXXV, 9.

द्यौश्च त्वा पृथिवी च श्रीणीताम् । अहश्च त्वा रात्री च श्रीणीताम् । आपश्च त्वौषधयश्च श्रीणन्तु । वाक् च त्वा मनश्च श्रीणीताम् । चक्षुश्च
15 त्वा श्रोत्रं च श्रीणीताम् । ब्रह्म च त्वा क्षत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । ऋक् च त्वा साम च श्रीणीताम् । स्तोमश्च त्वा यजुश्च श्रीणीताम् । बृहच्च त्वा रथंतरं च श्रीणीताम् । यज्ञश्च त्वा दक्षिणा च श्रीणीताम् । सूर्यश्च त्वा चन्द्रमाश्च श्रीणीताम् । दर्शश्च त्वा पौर्णमासश्च श्रीणीताम् । अर्कश्च त्वाश्वमेधश्च श्रीणीताम् ।
20 श्रीतस्त्वं श्रीतो[6] ऽहम् । इन्दुरिन्दुमवागात् । उभे सोमाः समस्त्विवक्षत[7] । तस्य त इन्द इन्द्रपीतस्येन्द्रियावतः सर्वगणस्य सर्वगण [ उपहूत ] उपहूतस्य भक्षयामि ॥ ११ ॥ Cf. KS. XXXV, 11.

1. The ms. ०श्चू०.
2. The ms. omits सं.
3. For sakalapāṭha See KS. XIII, 15.
4. For sakalapāṭha see KS. II, 15.
5. For sakalapāṭha see I, 16.
6. Thus KS. The ms. and ĀpŚr. XII, 19, 5 श्तस्त्वं श्तो.
7. ? Thus the ms. Cf. ṚV. IX, 32, 4 उभे सोमावचाकशन्.

इन्द्रस्य ग्रहो ऽस्यगृहीतो ग्राह्यः । देवानां पूरसि । तां त्वा प्रविशामि तां त्वा प्रपद्ये[1] सह गृहैः सह प्रजया सह पशुभिः सहर्त्विग्भिः सह सोम्यैः सह सदस्यैः सह दक्षिणीयैः सह यज्ञेन सह यज्ञपतिना ॥

इन्द्राग्नी परिधी मम वातो देवपुरा कृता । तत्त्वेन्द्रग्रह प्रपद्ये सगुः साश्वः सपूरुषः सह यन्मे अस्तु तेन ॥ 5

अरिष्ट्या [अव्यथ्यै] संवेशायोपवेशाय गायत्र्यै छन्दसे ऽभिभुवे स्वाहा । अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय त्रिष्टुभे जगत्या अनुष्टुभे छन्दसे ऽभिभुवे स्वाहा ॥

विश्वा अग्ने त्वया वयं धारा उदन्या इव । 10
अतिगाहेमहि द्विषः ॥
या देव्यष्टकास्वपसामपस्तमा स्वपा[2] असि ।
तस्यै त एनां[3] हविषा विधेम त्वं यज्ञे वरुणस्यावया असि ॥
श्रुत्कर्णाय कवये वेद्याय[4] ॥
अनुमते ऽनुमन्यस्व न इदं यद्भेषजं कृणुमहे तनूषु[5] । 15
यद्वो तोकेषु तनुषु प्रजासु यद्गोष्वश्वेष्[6]वोषधीष्वप्सु ॥ १२ ॥ Cf. KS. XXXV, 10. 12.

हिरण्यगर्भः[7] ॥
तदित्पदं न विचिकेत विद्वान्यन्मृतः पुनरप्येति जीवान् ।
त्रिवृद्भुवनं यद्रथवृज्जीवो गर्भो न मृतः स्वाहा ॥
आप्यायस्व ॥ 20
सं ते पयांसि ॥
आप्यायस्व मदिन्तम ॥

1. The ms. adds तैः.
2. Thus KS. The ms. सवं ३. Cf. Mān-Gṛ. II, 8, 4 या देव्यष्टकेष्वपसापस्तमा स्त्रपा अवया असि.
3. The ms. तेन.
4. The ms. कवयिष्टाय. For sakalapāṭha see XLVIII, 2.
5. Thus KS. The ms. कृणुम ये तरूषु.
6. अश्वेषु is missing in KS.
7. For sakalapāṭha see XXV, 6.

स्वर्गे सधिष्टव[1] ॥
तपो ष्वग्ने अन्तरीं[2] अमित्रान्तपा शंसमररुषः परस्य ।
तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः ॥
यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात्[3] ।
5 तमजरेभिर्वृषभिस्तवैं[4] स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥
स स्मा कृणोतु केतुमा नक्तं चिद्दूर आ सते ।
पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः ॥
नहि ते अग्ने तन्वः[5] क्रूरमानंश[6] मर्त्यः ।
कपिर्बभस्तिं[7] तेजनं पुनर्जरायु गौरिव ॥
10 मेष इव यदुप च वि च चर्वति यद्प्सरद्रूरुपरस्य खादति[8] ।
शीर्ष्णा शिरो वक्षसा वक्ष एजयन्नंशुं[9] बभस्ति हरितेभिरासभिः ॥
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्यङ् नियन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्रितः[10] ॥
य आविष्टः[11] ॥
15 अग्निना तपो ऽन्वाभवत्सूर्येण तेजो वायुना प्राणाः[12] ॥ १३ ॥

Cf. KS. XXXV, 13. 14.

1. The Vedic Concordance does not register this pratīka (?).
2. The ms. अन्तरं.
3. The ms. वनुस्या. Cf. ṚV. VI, 5, 4.
4. The ms. °पि.
5. The ms. तन्वैः
6. The ms. °नस.
7. The ms. कविर्बिभस्ति.
8. Thus KS. The ms. is very corrupt: मेख इव वै शं च यदुप व वि चर्यशि यदप्सरुद्रेः रुपरस्य षादसि. Cf. AV. VI, 49, 2 मेष इव वै सं च वि चोर्वच्यसे.
9. The ms. बि°.
10. The ms. °श्रतः.
11. This pratīka does not occur in KS.
12. The Kāṭhaka continues:
इन्द्रेण देवा यमेन पितरस्सरस्वत्या मनुष्यास्सप्तदशेन स्तोमा वामदेव्येन सामानि गायत्र्या छन्दांसि मरण्या रूपाणि हिरण्येन वर्चांसि तिरश्चिराजिना सर्पा अजगरेणाप्सव्याश्श्येनेन पतत्रिणो व्याघ्रेणारण्याः पशवस्सुपर्णेन वयांस्यश्वत्थेन वनस्पतय ओदनेनान्नानि यवेनौषधयो ऽश्ववृषेणैकशफाः पशवो वृषभेण गावो वृष्णिनावयो बस्तेनाजाश्चन्द्रमसा नक्षत्राणि ब्राह्मणेन वाचो वाचा देवतास्त्विलया विराड् ग्राव्णा पर्वतास्समुद्रेणापो ऽद्भिस्सत्यं सत्येनर्तमृतेन तपस्तपसा परमेष्ठी परमेष्ठिना मृत्युर्मृत्युना प्रजाः प्रजाभिस्सगरस्तनूभिः प्रजापतिस्तैर्देवैरन्वाभूतिः । अनु च भूयासमति च भूयासं ब्राह्मणानी श्रेष्ठश्च भूयासम् ॥

यस्य द्रोणकलश उपदस्यति कलशमेव तस्योपवायन्तं प्राणेनोप[1]-दस्यति । प्राणो हि सोमः । तदाहुः[2] पयो ऽवनयेदिति । अथो खल्वा-हुरन्तर्हितमिव वा एतद्यत्पयः । हिरण्यमेवापो ऽभ्यवनयेत् । हिरण्यम-भ्युन्नयेत् । अमृतं वा आप आयुर्हिरण्यम् । अमृतादेवाध्यायुरात्म-न्धत्ते । चत्वारो वरा देया ब्रह्मण उद्गात्रे होत्रे ऽध्वर्यवे । एते वै यज्ञ- 5
स्येन्द्राः । तानेव प्रीणाति । सैव तत्र प्रायश्चित्तिः । यस्य चमस उपदस्यति चमसमेव तस्योपवायन्तं प्राणेनोप[1]दस्यति । प्राणो हि सोमः । यमध्वर्युरन्तमं ग्रहं गृह्णीयात्तस्य संपातमवनयेत् । प्रायश्चित्त्यै वै सोमो गृह्यते । प्रायश्चित्त्यैवास्मै प्रायश्चित्तिं करोति । सर्वमायुरेति[3] ।
सैव तत्र प्रायश्चित्तिः । यस्य ग्रावावशीर्यते पशुभिर्व्यृध्यते । पशवो हि 10
ग्रावाणः । द्युतानस्य मारुतस्य ब्रह्मसामेन स्तुवीरन् । पशवो वै द्युतानो मारुतः । स्वेनैवैनं साम्ना संदधाति । पशुमान्भवति । सैव तत्र प्राय-श्चित्तिः । प्रजापतये स्वाहेत्यभक्षणीयानुपरवेष्ववनयेत् । प्राजापत्यो वै सोमः । प्रतिष्ठामेवैनं गमयति । सैव तत्र प्रायश्चित्तिः । यस्य सोम-मभिदहेद्ग्रहानध्वर्युः पाशयेत । स्तोत्राण्युद्गाता शस्त्राणि होता । 15
यथापूर्वं यज्ञेन चरेयुः । पञ्च वरा देयाः । पाङ्क्तो यज्ञः । यज्ञमेवाव-रुन्द्धे । अवभृथं गत्वा पुनरुदेत्य[4] पुरा द्वादश्याः पुनर्दीक्षेत । यद्द्वा-दशीमतिनयेदन्तर्धीयेत । तत्र ता दक्षिणा दद्याद्याः पूर्वस्मिन्दास्यन्भ-वति । सैव तत्र प्रायश्चित्तिः ॥ १४ ॥ Cf. KS. XXXV, 16.

सर्वान्वा एषो ऽग्नौ कामान्प्रवेशयते यो ऽग्निमन्वाधाय व्रतमुपैति । स 20
यदनिष्ट्वा[5] प्रयायादकामप्रीता एनं कामा नानु प्रयायुः । अतेजा अवीर्यः स्यात् । स प्रयास्यञ्जुहुयात् ॥

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् ।
अग्ने कामाय येमिरे ॥

1. Thus the ms. KS. प्राणो ऽनूप०.
2. KS. तदादुः is to be corrected.
3. The ms. adds पशुमान्भवते.
4. The ms. ०दित्य.
5. The ms. adds द्वायो.

इति कामानेवास्मिन्दधाति । कामप्रीता एनं कामा अनु प्रयान्ति । तेजस्वी वीर्यवान्भवति । संततिर्वा एषा यज्ञस्य यो ऽग्निमन्वाधाय व्रतमुपैति । स यदनिष्ट उद्वायाद्विच्छित्तिरेवास्य सा । प्राञ्चमुद्धृत्य मनसोपतिष्ठेत । मन इव वै प्रजापतिः । प्राजापत्यो यज्ञः । यज्ञमेव संतनोति । 5 भूरिति व्याहरेत् । भूतो वै प्रजापतिः । भूतिमेवोपैति । आयुषा वा एष वीर्येण व्यृध्यते यद्याहिताग्नेरग्निरपक्षायति । स यावच्छम्यया पराविध्येद्यदि तावदपक्षायेत्तं संभरेत् ॥[1][2][3]

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ।[4]

संवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे ॥

10 इति ब्रह्मणैवैनं संभरति[5] । सैव तत्र प्रायश्चित्तिः । यदि परस्तरामपक्षायेदनुप्रयाय वसेत् । सैव तत्र प्रायश्चित्तिः । ओषधीर्वा एतस्य पयः पशून्प्रविशति यस्य हविषे ऽपाकृता वत्सा धयन्ति । वायव्यां[6] यवागूं निर्वपेत् । वायुर्वै पयसः प्रदाता । तमेव भागधेयेनोपधावति । सो ऽस्मै पयः प्रयच्छति । अथोत्तरस्मै हविषे वत्सानपावर्तयेत् । सैव तत्र प्राय-[7]
15 श्चित्तिः ॥ १५ ॥ Cf. KS. XXXV, 17; TB. III, 7, 1.

अर्धं वा एतस्य यज्ञस्य मीयते यस्य सायं दुग्धं हविरार्तिमार्छति । इन्द्राय व्रीहीन्निरुप्योपवसेत् । पयो वा ओषधयः । पय एवारभ्योपवसति । यत्प्रातः स्यात्तच्छृतं[8] कुर्युः । ऐन्द्र इतरः पुरोडाशः स्यात् । पयो वा ओषधयः । पयसैवास्मै पयः प्रदापयति । अथोत्तरस्मै हविषे वत्सानपावर्तये-[9]
20 त् । सैव तत्र प्रायश्चित्तिः । उभयान्वा एष देवान्भागधेयेन व्यर्धयति ये यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति । यस्य सायं प्रातर्दुग्धं हविरार्तिमार्छत्योदनं पञ्चशरावं निर्वपेत् । अग्निं देवतानां प्रथमं यजेत्[10] ।

1. Thus KS. The ms. स यद-द्रोधाया०.
2. KS. यस्या०.
3. The ms. ०त्स०.
4. The ms. ०नो. Cf. ṚV. X, 56, 1.
5. The ms. प्रहरति.
6. KS. वायव्या to be corrected.
7. The ms. ०नु०.
8. KS. तच्छृतं is to be corrected. Cf. TB. III, 7, 1, 6.
9. The ms. ०नु०.
10. The ms. निर्वपयेद्.

अग्निमुखा एव देवताः प्रीणाति । अग्निं वा अन्वन्या देवता इन्द्रमन्याः । ता एवोभयीः प्रीणाति । अथोत्तरस्मै हविषे वत्सानपावर्तयेत्[1] । सैव तत्र प्रायश्चित्तिः । यत्कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानः स्यात् । यद्-नायतने निनयेदनायतनः स्यात् । मध्यमेन पर्णेन द्यावापृथिव्ययर्चान्तः-परिधि निनयेत् । द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा । प्रतिष्ठामेवैनं गमयति । 5 सैव तत्र प्रायश्चित्तिः । यत्प्रयाजेष्वनिष्टेषु प्राङङ्गार स्कन्देदध्वर्यवे च यजमानाय चार्कं स्यात् । यद्दक्षिणा ब्रह्मणे च यजमानाय चार्कं स्यात् । यत्प्रत्यङ् होत्रे च पत्न्यै चार्कं स्यात् । यदुदङ्ङग्निधे च यजमानस्य च पशुभ्यो ऽर्कं स्यात् । तं प्रहरेत् ॥

सहस्रशृङ्गो वृषभो जातवेदा स्तोमपृष्ठो घृतवान्सुप्रतीकः । 10

मा मा हासीन्नाथितो नेत्त्वा[2] जहामि सहस्रपोषं मे गोपोषं च यच्छ ॥

इति ब्रह्मणैवैनं प्रहरति । सैव तत्र प्रायश्चित्तिः । अर्धं वा एतस्य यज्ञस्य मीयते यस्य व्रत्ये ऽहन्पत्न्यनालम्भुका भवति । तामपरुध्य यजेत । सर्वेणैव यज्ञेन यजते । तामिष्ट्वोपह्वयेत[3] ॥

द्यौरहं पृथिवी त्वं सामाहमस्यृक्त्वम् । 15

अमो ऽहमस्मि सा त्वं सा त्वमस्यमो ऽहम् ।

तावेहि संरभावहै पुंसे पुत्राय कर्तवे ॥

इत्यर्ध एवैनामुपह्वयते[4] । सैव तत्र प्रायश्चित्तिः ॥ १६ ॥ Cf. KS. XXXV, 18; TB. III, 7, 1. 2.

यदवव्रष्टेन जुहुयादपरूपमस्यात्मञ्जायेत । यत्प्रत्येयात्पापीयान्स्यात् । यन्न जुहुयादार्तिमार्छेत् ॥ 20

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।

मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥

इति मैत्र्यर्चा समिधमाधाय होतव्यम् । मित्रो वै यज्ञस्य शान्तिः । मित्रेणैवैनं शमयति । तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यम् । सैव तत्र

1. The ms. °नु°.

2. The ms. मा मा हिं आशान्नाथिमेत्त्वा.

3. The ms. °यते.

4. Thus emended. The ms. एवैनां तदाभवति. Cf. TB. III, 7, 1, 9. KS. एवैनामाभजति.

प्रायश्चित्तिः । यत्कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानः स्यात् । यन्न जुहुयादार्तिमार्छेत् । प्राजापत्ययर्चा वल्मीकवपायामवनयेत् । प्राजापत्यो वै वल्मीकः यज्ञः प्रजापतिः । यज्ञ एव यज्ञं प्रतिष्ठापयति । तद्धुत्वाथा-न्यां दुग्ध्वा पुनर्होतव्यम् । सैव तत्र प्रायश्चित्तिः । यदि पूर्वस्यामाहु-
5 त्यां हुतायामुत्तराहुतिं स्कन्देद् द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत । यदभिजुहुयाच्चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्येत ॥

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि ।
तत्र हव्यानि गामय ॥

इति वानस्पत्ययर्चा समिधमाधाय होतव्यम् । वनस्पतिनैवास्यार्तां
10 चानार्तां चाहुती विदाधार । तद्धुत्वाथान्यां दुग्ध्वा पुनर्होतव्यम् । सैव तत्र प्रायश्चित्तिः ॥ १७ ॥ Cf. KS. XXXV, 19; TB. III, 7, 2.

देवाश्च वा असुराश्चास्मिंल्लोक[1] आसन् । स प्रजापतिरकामयत परा-सुरान्नुदेय प्रजाः सृजेयेति । स एतानि चातुर्मास्यान्यपश्यत् । तैश्चा-तुर्मास्यैरेतानसुरान्प्राणुदत चातुर्मास्यैः प्रजा असृजत । य एवं विद्वां-
15 श्चातुर्मास्यैर्यजते परा भ्रातृव्यं नुदते प्र प्रजया प्र पशुभिर्जायते । अग्नि-ष्टोमाद्वैश्वदेवं यज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजत । उक्थ्याद्वरुणप्र-घासान्यज्ञक्रतुं निर्माय प्रजा वरुणेनाग्राहयत् । अतिरात्रात्साकमेधान्यज्ञक्रतुं निर्मायेन्द्रो[3] वृत्रमहन् । वैश्वदेवेन वै सोऽसुरान्प्राणुदत वैश्वदेवेन प्रजा असृजत । सृष्टा वा अन्याः प्रजा आसन्नसृष्टा अन्याः । अथ प्रजापतिरकाम-
20 यत प्रजाः सृजेयेति । संवत्सरो वै यज्ञो यज्ञः प्रजापतिः । स एते आत्मनोऽधि पयसी निरमिमीतोधन्यं च वह्यं च । अथैताभ्यो देवताभ्य एतानि हवींषि भागं निरवपत् । तैः प्रजा असृजत । ऋतुभ्यो वै ताः प्रजाः प्राजा-यन्त । ऋतव एतानि पञ्च हवींषि । पञ्च ह्यृतवः । तत एव प्रजायते । अग्नि-रेव प्रावापयत् । सोमो रेतोऽदधात् । मिथुनं वा अग्निश्च सोमश्च । सविता
25 प्रासुवत् । संवत्सरो वै सविता । द्वादश मासाः संवत्सरः । तस्माद् द्वादश-

1. The ms. ०का.
2. The ms विद्वां तांन्यस्मश्चा०.
3. The ms. adds वै.

कपालः। अथो[1] वैश्वदेवत्वायैव द्वादशकपालः। उपांशु यजति। अनिरुक्तो हि संवत्सरः। सरस्वत्येव सृष्टासु[2] वाचमदधात्[3]। पूषणं प्रतिष्ठामभ्यसृज्यन्त। वाग्वै सरस्वती पशवः पूषा। मिथुनं वाक् च पशवश्च। मध्यतो वै प्रजा विसृज्यन्ते। अन्ततो[4] मिथुनाद्विषूचीः प्रजायन्ते। तदेतत्प्रजापतेरेवाधि मध्यतः प्रजा विसृज्यन्ते। अथादो ऽन्ततो मिथुनादुभयतो विषूचीः[5] प्रजायन्ते। वार्त्रघ्नानि वा एतानि हवींषि। अग्निना वा अनीकेनेन्द्रो वृत्रमहन्। सोमेन राज्ञा सवित्रा प्रसूतः सरस्वत्या वाचा पूर्षा[6] वीर्यैरन्वतिष्ठत[7]। विजितिरेवैतानि हवींषि॥ १८॥ Cf. KS. XXXV, 20; MS. I, 10, 5.

इति कपिष्ठलकठसंहितायामष्टाचत्वारिंशत्तमो ऽध्यायः॥

---

1. The ms. ज्योति.
2. KS. सृष्टासु to be corrected.
3. The ms. वाचमवदधात्.
4. The ms. ऽथादौ ततो.
5. The ms. विष्टरीः.
6. ? Thus the ms. KS. चैत्र्यां पूषा.
7. The ms. °रभ्य°.

# VEDIC MYSTICISM.

Prof. Dr. Raghu Vira has picked up Vedic passages of unique charm and beauty and linked them together in an English version, at once superb and refreshing. Nothing of the kind has ever yet been attempted. Even the conservative school of Vedic scholars would find it delightful. Here is the hymn to the Life-Supreme:

O LIFE I BIND THEE UNTO ME.*

Obeisance to the Life, that controls this all,

The Being who overlords all, in whom all is established.

Obeisance to Thee O Life, obeisance to Thee crashing and thundering, flashing and pouring rain,

Quickening the earth with life, gladdening the beasts,

Repeating the constant cycle of days, nights, fortnights, months, two-monthly seasons and years,

Making the universe throb.

Life is immense. Life is the sun, the moon and the creator, the dispenser of bliss to the truthfull man.

Verily Life Himself is death.

Hail to Thee O Life, who envelops the past, the present and the future,

Who advances forwards backwards, below and high, ever-revolving. eight-wheeled, single-rimmed, thousand-spoked.

With Thine half Thou created the universe, and the other half overflows, where and how far who knows?

Or it is in the overflow that the world of forms and names has its being.

The existent, the non-existent, death and energy, and the music play their games in the overflow.

* See Atharva-Veda XI. 4. 26d, 1, 2, 4cd, 5c, 12acd, 11cda, 15cd, 7ab, 8cd, 22; XI. 7. 1ab, 3ab, 5b.

